**सुधा—अवतीर्येति।** अवतीर्य=ह्रदावतरणं कृत्वा च। ताः=एताः। काश्चित्=काः अपि। पन्नगपतिपुरन्ध्र्यः=नागराजपत्न्यः। उद्गीर्णविषगण्डूषा इव=उद्गीर्णम्, =वमनकृतम् विषस्य=गरलस्य, जलस्य वा गण्डूषम् याभिस्ताः तथा। काश्चित्। राक्षसप्रमदाः=राक्षसतरुण्यः। रक्तोत्पलाकृष्टिव्यसनिन्यः इव—रक्तेनोत्कृष्टं पलम्=मांसम्, पक्षे—रक्ताब्जम्, तस्य आकृष्टेः=त्रोटनस्य व्यसनं यासां ताः इव। काश्चित्। गोपालाङ्गनाः=गोरक्षकस्त्रियः। गृहीतपुण्डरीकाक्षाः इव—गृहीतपुण्डरीके=अवलोकितसिताम्बुजे इव अक्षिणी यासाम् ताः यथा। पक्षे—गृहीतः=स्वाधीनीकृतः, पुण्डरीकाक्षः=श्रीकृष्णः, याभिस्ताः इव। काश्चित्। कार्तिकेयशरपङ्क्तयः इव—कार्तिकेयस्य=षण्मुखस्य, शराणाम्=बाणानाम्, पङ्क्तयः यथा; विश्लेषितक्रौञ्चाः—विश्लेषितः=छिन्नाः, क्रौञ्चः=क्रौञ्चनामपर्वतः। पक्षे—विश्लेषिताक्रौञ्चपक्षी याभिस्ताः। कुरुसेनाः=कौरवचम्वः। इव=यथा। धार्तराष्ट्रशकुनिमार्गेण—धृतराष्ट्रः=दुर्योधनस्य पिता, शकुनिः=दुर्योधनमातुलः, पक्षे—धृतराष्ट्रः=हंसः, शकुनिः=पक्षी च तेषां मार्गम्=वर्त्म, तेन। अनुधावमानाः—अनु=पश्चात्, धावमानाः=धावनं कुर्वाणाः। विघटितचक्रवाकमिथुनाः=चक्रवाकयुगलवियुक्ताः। रात्रयः इव=निशाः यथा। काश्चित् चकोराङ्गनाः=चकोरस्त्रियः। इव=यथा। चञ्चूकृतदीर्घकमलनालैः—अचञ्चूनि चञ्चूनि कृतानि चञ्चूकृतानि दीर्घकमलनालानिलम्बनलिननालानि, तैः। शशधरकरनिर्मलजलम्—शशधरस्य=चन्द्रस्य, करम् इव=किरणसमम्, निर्मलम्=स्वच्छम्, जलम्=नीरम्। आस्वदयन्त्यः=आस्वादनं कुर्वन्त्यः। चकोर्यः हि चन्द्रकिरणान् पिबन्ति। काश्चित्। सरसबिसाग्राणि=रसयुक्तबिसतन्त्वग्रभागान्। ग्रासमानाः। करिण्यः इव=हस्तिन्यः समाः। काश्चित्। जलयन्त्रपुत्रिका इव=वारिस्थित 'फव्वारा' नाम यन्त्रपुत्रिका समाः। सम्पुटितमुखपाणिपल्लवयुगलाग्ररन्ध्रोन्मुक्तसूक्ष्मवारिधाराः—सम्पुटितम्, यन्मुखे=आनने, पाणिपल्लवयुगलाग्रम्=करपल्लवयुग्माग्रभागम्, तस्य रन्ध्रैः=छिद्रैः,उन्मुक्ताः=त्यक्ताः, सूक्ष्मवारिधाराः=तनुजलधाराः, याभिस्ताः। काश्चित्। प्रियवारितरणाः—प्रियम्=रुचिकरम्, वारितरणम्=जलावगाहनम् यासां ताः। भीरुनार्यः=कातरस्त्रियः इव। अथवा—प्रियात्=स्वामिनः, वारिता=पृथक्कृताः, रणात्=युद्धात् याभ्यस्तादृश्यः कातरनार्य इव। स्तनगण्डशैलशिखरास्फालनोल्ललत्तरङ्गान्तरतरत्तरुणतामरससुरभिसलिलम्—स्तनगण्डशैलशिखरैः= पयोधरशिलाशिखरेभ्यः, आस्फालनेनोल्ललन्तः=उल्लसन्तः, ये तरङ्गाः=वीचयः, तेषामन्तरे =तन्मध्ये, तरताम् अरुणतामरसानाम्=रक्तकमलानाम्, रससुरभिः=मधुगन्धिः, तद्युक्तं, सलिलम्=जलम्। अवगाहमानाः=विगाहन्त्यः। चिरम्=बहुकालम्। चिक्रीडुः=क्रीडयामासुः।

**हिन्दी—**सरोवर में घुसकर कुछ तो सर्पराज की पत्नियों के समान विष (जल) के कुल्ले कर रही थीं, कुछ राक्षस स्त्रियों के समान रक्तोत्पलाकृष्टिव्यसनिनी (रुधिरपूर्णमांस को खींचने की आदत वाली) लाल कमलों को खींचकर तोड़ रही थीं। कुछ गृहीत पुण्डरीकाक्ष (कृष्ण को पकड़े हुये) गोपियों के समान कमल सदृश सुन्दर

नयनों वाली थीं कुछ स्वामिकार्तिकेय के बाणों की पंक्तियों से क्रौञ्चपर्वत को काटकर अलग करने के समान ही क्रौंचपक्षियों को अलग हटा रहीं थीं। कुछ दुर्योधन और शकुनि के पीछे जाती हुई कुरुसेनाओं के समान हंसपक्षियों के पीछे-पीछे भाग रहीं थीं कुछ चकई चकवों को अलग करने वाली रातों के समान अत्यन्य काली थीं कुछ चकोर स्त्रियों के समान चोंचों से लम्बे कमल नालों से चन्द्रमा की किरणों रूपी निर्मल जल की भाँति ही निर्मल जल का आस्वादन कर रहीं थी। कुछ जिस प्रकार हथिनियाँ सरस बिसतन्तुओं को खाती हैं उसी प्रकार सरस बिसतन्तु खाती हुई जलयन्त्रपुत्रिका ( जल में पुतली के आकार में बने फव्वारे ) जैसी मुखों पर सम्पुटित कर दलों के अग्रभाग में छिद्रों से महीन जलधाराएँ निकाल रही थीं। कुछ अपने पतियों को युद्ध में जाने से मना करने वाली भीरु स्त्रियों के समान जल में तैरने का आनन्द ले रहीं थी। पयोधररूपी शिलाशिखरों से टकराने से उछलती हुई तरङ्गों के मध्य हिलते हुए अरुण कमलरस की गन्ध से सुगन्धित जल में अवगाहन करती हुई वे बहुत देर तक क्रीड़ा करती रहीं।

**अवनिपतिरपि विस्मयविस्मृतनिमेषोन्मेषनयनस्ताश्चिरमवलोक्य चिन्तयाञ्चकार।**

**सुधा**—अवनीति। अवनिपतिः=नृपः नलः अपि। विस्मयविस्मृतनिमेषोन्मेषनयनः-विस्मयेन विस्मृतं निमेषोन्मेषं नयनाभ्यां यस्य तथा=आश्चर्यविस्मृतक्षणोन्मेषचक्षुषः। चिरम्=बहुकालम्। अवलोक्य=दृष्ट्वा। चिन्तयाञ्चकार=विचारयामास।

**हिन्दी**—आश्चर्य से थोड़ी देर के लिये अपलक नयनों से देखकर राजा भी सोचने लगे।

**जातिर्यत्र न तत्र रूपरचना नेत्रोत्सवारम्भिणी**
**रूपश्रीरपि यत्र तत्र सुलभः श्लाघ्यो न जन्मोदयः।**
**इत्येकस्थसमस्तसुन्दरगुणप्रद्वेषमभ्यस्यतो**
**धातस्तात वृथाश्रमस्य भवतः सृष्टिक्रमो दह्यताम्॥ ५७॥**

**अन्वयः**—यत्र जातिः तत्र नेत्रोत्सवारम्भिणी रूपरचना न, यत्र रूपश्रीः अपि तत्र श्लाघ्यः जन्मोदयः सुलभः न। हे तात धातः ! एकस्थसमस्तसुन्दरगुणप्रद्वेषम् अभ्यस्यतः वृथाश्रमस्य भवतः सृष्टिक्रमः दह्यताम्।

**सुधा**—जातिरिति। यत्र=यस्मिन्। जातिः=शोभनजातिः, अस्ति। तत्र=तस्मिन्। नेत्रोत्सवारम्भिणी=नयनानन्दकारिणी। रूपरचना=सौन्दर्यनिर्माणम् नास्ति। यत्र=यस्मिन्। रूपश्रीः=सुरूपत्वम् अपि अस्ति। तत्र। श्लाघ्यः=प्रशंसनीयः। जन्मोदयः=अन्वयः। सुलभः=सुप्राप्यः न भवति। हे तात धातः=अयि तात ब्रह्मन्! एकस्थसमस्तसुन्दरगुणप्रद्वेषम्—एकस्थम्=एकत्र, समस्ताः=निखिलाः, सुन्दरगुणाः=सुगुणास्तेषु, प्रद्वेषम्=प्रकर्षेण विरोधम्। अभ्यस्यतः=अभ्यासं कुर्वतः। वृथाश्रमस्य—वृथा=व्यर्थं, श्रमः=आयासः यस्य, तस्य। भवतः=श्रीमतः। सृष्टिक्रमः=सृजनकार्यस्य क्रमः। दह्यताम्=दग्धो भवतु। शार्दूलविक्रीडितं वृत्तम्।

हिन्दी—जहाँ जाति है वहाँ नयनानन्दकारिणी रूपरचना नहीं, और जहाँ रूपश्री भी है वहाँ प्रशंसनीय वंश नहीं। हे तात ब्रह्मन्! एक ही जगह 'समस्त सुन्दर गुण रहें' इससे द्वेष का अभ्यास करने वाले एवं व्यर्थ परिश्रम करने वाले आप की सृष्टि क्रम में आग लग जाये ॥ ५७ ॥

तथाहि—

ग्रीवालम्बितपद्मनाललतिकाः कर्णावतंसीकृत-
प्रत्यग्रोन्मिषतासितोत्पलदलैः सन्दिग्धनेत्रद्वयाः ।
कस्यैता जलदेवता इव कुचप्राग्भारभुग्नोर्मयः
स्नानासक्तपुलिन्दराजवनिताः कुर्वन्ति नोत्कं मनः ॥ ५८ ॥

अन्वयः-- ग्रीवालम्बितपद्मनाललतिकाः कर्णावतंसीकृतप्रत्यग्रोन्मिषतासितोत्पलदलैः सन्दिग्धनेत्रद्वयाः कुचप्राग्भारभुग्नोर्मयः स्नानासक्तपुलिन्दराजवनिता एताः जलदेवताः इव कस्य मनः उत्कम् न कुर्वन्ति ।

सुधा-- ग्रीवेति । ग्रीवालम्बितपद्मनाललतिकाः—ग्रीवासु=गलदेशेषु, लम्बिताः= लम्बमानाः, पद्मानाम्=कमलानाम्, नाललतिकाः=नालदण्डरूपलतिकाः, यासां ताः । कर्णावतंसीकृतप्रत्यग्रोन्मिषतासितोत्पलदलैः-कर्णावतंसीकृतैः=श्रोत्राभूषणकृतैः, प्रत्यग्रैः =सद्यःत्रोटितैः, उन्मिषतैः=विकसितैः, असितैः=नीलैः, उत्पलदलैः=कमलपत्रैः । सन्दिग्धनेत्रद्वयाः—द्वयोः नेत्रयोः समाहारः इति नेत्रद्वयम्, सन्दिग्धं नेत्रद्वयं यासां ताः =सन्देहयुक्तद्विनयनाः । कुचप्राग्भागभुग्नोर्मयः—कुचयोः=पयोधरयोः, प्राग्भागेन= अग्रभागेन, भुग्नाः=चूर्णिताः ऊर्मयः=वीचयः यासां ताः । एताः=इमाः । स्नानासक्त-पुलिन्दराजवनिताः—स्नाने=मज्जनकार्ये, आसक्ताः=अनुरक्ताः, पुलिन्दराजवनिताः =किरातराजपत्न्यः । कस्य=कस्य जनस्य । मनः=चेतः । उत्कम्=उत्कण्ठितम् । न कुर्वन्ति=न विदधन्ति । शार्दूलविक्रीडितं वृत्तम् ।

हिन्दी---क्योंकि---गले में कमलनाल की मालाएँ पहने नूतन विकसित नीलकमल दल के कर्णाभूषण बनाये जो कि दोनों के समान प्रतीत हो रहे हैं, कुचों के अग्रभाग से लहरों को तोड़ने वाली, स्नान में व्यस्त यह किरातराजपत्नियाँ किसके मन को उत्कण्ठित नहीं कर देती हैं ॥ ५८ ॥

अपि च—

एतस्याः करिकुम्भसन्निभकुचप्राग्भारपृष्ठे लुठद्-
गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि ।
दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं
को वान्योऽपि विलीयते न सरसः सीमन्तिनीसङ्गमे ॥५९॥

अन्वयः—एतस्याः लुठद् गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि करिकुम्भसन्निभकुचप्राग्भारपृष्ठे दूरात् एत्य पतितः वेगात् एषः तरङ्गः कथं विलीनः । अन्यः अपि सरसः कः सीमन्तिनीसङ्गमे न विलीयते ।

सुधा— एतस्या इति । एतस्याः=अस्याः । लुठद्गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि – लुठद्भिः गुञ्जागर्भैः=गुञ्जाग्रथितैः, गजेन्द्रमौक्तिकसरश्रेणीभिः=गजमुक्तामालापङ्क्तिभिर्यन्मनोहारि, तस्मिन् । करिकुम्भसन्निभकुचप्राग्भारपृष्ठे—करिकुम्भसन्निभे=गजकुम्भसदृशे, कुचप्राग्भारपृष्ठे=कुचाग्रभारयुक्ते पृष्ठदेशे । दूरात्=दूरस्थानात् । एत्य=आगत्य । पतितः=अधोगतः । वेगात्=द्रुतगत्या । एषः=अयम् । तरङ्गः=वीचिः । कथम्=कीदृक् । विलीनः=अन्तर्लीनः जातः । अन्यः=अपरः । अपि । सरसः=रसिकः । कः=जनः । सीमन्तिनीसङ्गमे=नारी समागमे । न विलीयते =विलीनो न भवति । शार्दूलविक्रीडितं वृत्तम् ।

हिन्दी—इसके बीच-बीच में गुञ्जा से युक्त गज मुक्ताओं की माला की लड़ियों के कारण मनोहर, गजकुम्भसदृश उन्नत पयोधरों के अग्रभाग में दूर से आकर गिरा हुआ यह तीव्र प्रवाह कैसा विलीन हो गया । अन्य भी कौन ऐसा सरस व्यक्ति है जो स्त्रीसंगम की दशा में विलीन नहीं हो जाता है ।। ५९ ।।

इयं तु—

**निजप्रियमुखभ्रान्त्या हर्षेणाचुम्बदम्बुजम् ।**
**दष्टाधरा तु भृङ्गेण सीत्कारमकरोन्मृदु ।। ६० ।।**

अन्वयः—निजप्रियमुखभ्रान्त्या हर्षेण अम्बुजम् अचुम्बत् । भृङ्गेण दष्टाधरा तु मृदु सीत्कारम् अकरोत् ।

सुधा—निजप्रियेति । निजप्रियमुखभ्रान्त्या— निजस्य=स्वस्य, प्रियस्य रुचिकरस्य, प्रियतमस्य, मुखस्य=वदनस्य, भ्रान्तिः=भ्रमस्तया । हर्षेण=मोदेन । अम्बुजम् कमलम् । अचुम्बत् = चुचुम्ब । भृङ्गेण=अलिना । दष्टाधरा— दष्टे अधरे=ओष्ठे यस्याः सा । तु मृदु=कोमलम् । सीत्कारम्='सी–सी' इति शब्दम् । अकरोत्= चकार ।

हिन्दी—अपने प्रिय के मुख के भ्रम से इसने ही प्रसन्नता से कमल को चूम लिया । कमल के अन्दर बैठे भौंरे ने उसके ओठों काट दिया । ( जिससे ) वह कोमलता से सी-सी करने लगी ।। ६० ।।

अनयापि—

**अविरतमिदमम्भः स्वेच्छयोच्छालयन्त्या**
**विकचकमलकान्तोत्तानहस्तद्वयेन ।**
**परिकलित इवार्धः कामबाणातिथिभ्यः**
**सलिलमिव वितीर्णं बाल्यलीलासुखाय ।।**

अन्वयः—विकचकमलकान्तोत्तानहस्तद्वयेन स्वेच्छया अविरतम् इदम् अम्भः उच्छालयन्त्या ( अनया अपि ) कामबाणातिथिभ्यः अर्घः इव परिकलितः बाल्यलीलासुखाय सलिलम् इव वितीर्णम् ।

सुधा—अविरतमिति । विकचकमलकान्तोत्तानहस्तद्वयेन—विकचम् कमलं विकच-

कमलम् विकसितपद्मम्, तस्य कान्तिरिव कान्तिर्यस्य तत् तथा उत्तानम्=ऊर्ध्वं-प्रसारितम् यद् हस्तद्वयम्=करयुगलम्, तेन। स्वेच्छया=स्वच्छन्देन। अविरतम्=अनवरतम्। इदम्=एतत्। अम्भः=जलम्। उच्छालयन्त्या=ऊर्ध्वं प्रक्षिपन्त्या। अनया=एतया अपि। कामबाणातिथिभ्यः—कामबाणानाम् = मदनशराणाम्, अतिथयस्तेभ्यः। अर्घः=सपर्या। इव परिकलितः=आकलितः। बाल्यलीलासुखाय=बाल्यक्रीडानन्दाय। सलिलम् इव=जलाञ्जलिः इव। वितीर्णम्=वितरितम्। अत्रोत्प्रेक्षालङ्कारः।

हिन्दी—विकसित कमल की कान्ति के समान कान्तिवाले अपने दोनों हाथों को ऊपर फैलाकर स्वेच्छया निरन्तर इस जल को उछालती हुई वह भी मदन के बाण के मानों अतिथियों ( कामियों ) के लिए अर्घ दे रही थी ( तथा ) शैशव सुलभ सुख के लिए मानों जलाञ्जलि दे रही थी॥ ६१॥

**अस्याश्च—**

**कर्णमूलविषये मृदु गुञ्जन्पाणिपल्लवहतोऽपि हठेन।**
**एष षट्पदयुवा हरिणाक्ष्याश्चुम्बति प्रिय इवास्य सरोजम्॥ ६२॥**

**अन्वयः**—पाणिपल्लवहतः एष षट्पदयुवा अपि प्रियः इव कर्णमूलविषये मृदु गुञ्जन् हठेन हरिणाक्ष्याः आस्यसरोजं चुम्बति।

**सुधा—कर्णमूलेति।** पाणिपल्लवहतः=करकञ्जताडितः। एषः=अयम्। षट्पद-युवा=तरुणभ्रमरः। अपि। प्रिय इव=प्रियतमसमः। (अस्याः) कर्णमूलविषये=श्रोत्ररन्ध्रपार्श्वे। मृदु=मधुरम्। गुञ्जन्=गुञ्जारवं कुर्वन्। हठेन=बलेन। हरिणाक्ष्याः=मृगाक्ष्याः। आस्यसरोजम्=मुखकमलम्। चुम्बति=चुम्बनं करोति।

हिन्दी—करकमल से ताडित तरुण भ्रमर भी प्रिय के समान इसके कान के समीप गुञ्जार करता हुआ हठ करके इस मृगनयनी के मुखकमल को चूम रहा है॥ ६२॥

**इतोप्येषा—**

**भ्रमकरं मकरं मकरन्दिनीं कमलिनीमलिनीमलिनीकृताम्।**
**तरलयन्तमवेक्ष्य महाभयादुदतरत्सरितस्त्वरितैः पदैः॥ ६३॥**

**अन्वय**—मकरन्दिनीम् अलिनीमलिनीकृतां कमलिनीं तरलयन्तं भ्रमकरं मकरम् अवेक्ष्य महाभयात् त्वरितैः पदैः उदतरत्।

**सुधा—भ्रमकरमिति।** मकरन्दिनीम्—मकरन्दम्=मधुरसम्, अस्त्यस्यामिति=मधुरसयुताम्। अलिनीमलिनीकृताम्—अलिनीभिः=मधुकरीभिः मलिनीकृताम्=अस्वच्छकृताम्। कमलिनीम्=नलिनीम्। तरलयन्तम्=क्षिपन्तम्। भ्रमकरम्=आवर्तकरं वा। मकरम्=यादो विशेषम्। अवेक्ष्य=अवलोक्य। महाभयात्=अति-भयात्। त्वरितैः पदैः=द्रुतचरणैः। एषा=इयम्, शबरसुन्दरी। सरितः=नद्याः। उदतरत्=उत्तीर्णा जाताः। यमकालङ्कारः। द्रुतविलम्बितं वृत्तम्।

हिन्दी—इधर यह भी—मधुरसयुक्त, भ्रमरियों के द्वारा मलिन बनायी गयी

कमलिनी को तरलित करते हुए, आवर्त उत्पन्न करते हुए मकर को देखकर यह शबर-सुन्दरी अत्यन्त भय से तेज कदमों से नदी बाहर निकल गई।

**एताश्च—**

**मन्दायते दिनमिदं मदनोऽपि सज्ज-**
**स्तत्किं न गच्छत गृहानिति पद्मिनीभिः।**
**मीलत्सरोजगतभृङ्गरुतैरिवोक्ताः**
**स्नात्वा शनैरनुरसरन्ति तटं तरुण्यः॥ ६४॥**

**अन्वयः**—'इदं दिनं मन्दायते, मदनः अपि सज्जः, तत् गृहान् किं न गच्छत' इति मीलत्सरोजगतभृङ्गरुतैः पद्मिनीभिः उक्ता तरुण्यः स्नात्वा शनैः तटं अनुसरन्ति।

**सुधा—मन्दायत इति।** इदम् = एतत्। दिनम् = दिवसम्। मन्दायते=क्षीणायते। मदनः = कामः अपि, सज्जः = सज्जितो भवन्नास्ते। तत् = अतः। गृहान् = भवनानि। किम् न गच्छत = किमर्थं न प्रयात। इति = एवम्। मीलत्सरोजगतभृङ्गरुतैः—मीलत्सु सरोजेषु = मुकुलितपद्मेषु, गताः = याताः। भृङ्गाः = भ्रमरास्तेषां रुतम् = गुञ्जनम् तैः। पद्मिनीभिः = कमलिनीभिः। उक्ताः = कथिताः इव। तरुण्यः=युवत्यः। स्नात्वा = स्नानं कृत्वा। शनैः = मन्दम्। तटम् = कूलम्। अनुसरन्ति = अनुसरणं कुर्वन्ति। उत्प्रेक्षालङ्कारः। वसन्ततिलकावृत्तम्।

**हिन्दी**—"यह दिन ढल रहा है, कामदेव ने अपनी तैयारी कर ली है, अतः तुम लोग घर क्यों नहीं जा रही हो।" इस प्रकार मुकुलित कमलों में गुनगुनाते भौंरों के शब्दों से युक्त कमलिनियों द्वारा मानों कहे जाने पर शबरयुवतियाँ स्नान कर धीरे-धीरे तट की ओर आ रही हैं॥ ६४॥

**एवमनेकविधविलासासक्तशबरसुन्दरीदर्शनाह्लादपुलकिते विविधवितर्ककारिणि पङ्कनिमग्नजरत्करेणुकायमाननिःस्पन्ददृशि तत्कालमुत्पन्नया मनाङ्मन्मथव्यथया धीरतया च स्पृहया च विचिकित्सया च जिघृक्षया च जिहासया च समकालमाकुलिते हृदये सङ्कीर्णभावभाजि राजनि, राजीववनविराजिते तस्मिन्नर्मदाह्लदे सलिलक्रीडासुखमतिचिरमनुभूय तीरभुवि सेव्यसितसैकतस्थलीमलङ्कुर्वाणासु च तासु शबरराजसुन्दरीषु श्रुतशीलश्चिन्तितवान्—**

**सुधा—एवमिति।** एवम् = इत्थम्। अनेकविधविलासासक्तशबरसुन्दरीदर्शनाह्लादपुलकिते—अनेकविधैः = बहुप्रकारैः, विलासैः = आनन्दैः, आसक्ताः = अनुरक्ताः, याः शबरसुन्दर्यः = शबरनार्यस्तासां, दर्शनेन = अवलोकनेनाह्लादेन, पुलकितः = रोमाञ्चयुक्तः, तादृशि। विविधवितर्ककारिणि = विभिन्नशङ्काकारिणि। पङ्कनिमग्नजरत्करेणुकायमाननिःस्पन्ददृशि—पङ्के = कर्दमे, निमग्ना जरत्करेणुकायमाना = जठरहस्ती इव, निःस्पन्दे = निर्निमीलिते, दृशौ = चक्षुषी, यस्य तस्मिन्। तत्कालम् = तत्क्षणम्। उत्पन्नया = जातया। मनाक् = किञ्चित्। मन्मथव्यथया = कामपीडया। धीरतया =

धैर्येण च। स्पृहया = इच्छया च। विचिकित्सया = संशयेन च। जिघृक्षया = गृहीतुमिच्छया च। जिहासया = त्यक्तुमिच्छया च। समकालम् = युगपदेव। आकुलिते = व्यथिते। हृदये = चेतसि। सङ्कीर्णभाजि = सङ्कीर्णभावयुक्ते। राजनि = नृपे। राजीववनविराजिते—राजीववनेन = कमलकाननेन, विराजिते = शोभिते। तस्मिन् = एतस्मिन् नर्मदाह्लदे = नर्मदासरोवरे। सलिलक्रीडासुखम् = जलावगाहनानन्दम्। अतिचिरम् = बहुकालम्। अनुभूय = अनुभवं कृत्वा। तीरभुवि = तटभूमौ। सेव्यसितसैकतस्थलीम् = सेवनीयबालुकामयीभूमिम्। अलङ्कुर्वाणासु = शोभितङ्कुर्वाणासु। तासु = एतासु। शबरराजसुन्दरीषु = भिल्लस्त्रीषु। श्रुतशील: = श्रुतशीलाभिधः। चिन्तितवान् = चिन्तयामास।

हिन्दी—इस प्रकार विभिन्नविलासों में लगी हुई शबर सुन्दरियों को देखने से उसे आनन्दपुलक हो गया। अनेक प्रकार के तर्कवितर्क मन में उठने लगे। कीचड़ में फँसी बूढ़ी हथिनी के समान आँखें निर्निमेष रह गईं। तत्क्षण उत्पन्न हुई थोड़ी कामपीड़ा, धीरज, चाह, आकर्षण, ग्रहण करने की कामना एवं त्याग से एक साथ आकुलित हृदय में विभिन्न भावों से युक्त राजा के हो जाने पर कमलवन से शोभित उस नर्मदा सरोवर में जलक्रीडा का बहुत समय तक सुखानुभव कर शबरराज सुन्दरियाँ सुन्दर शुभ्र बालुकामयी समीप वाली भूमि पर आकर उसे शोभित करने लगीं। तब श्रुतशील सोचने लगा।

**'उन्मादि यौवनमिदं शबराङ्गनानां**
**देवोऽप्ययं नववयाः कमनीयकान्तिः।**
**रेवातटं चलचकोरमयूरहारि**
**किं स्यान्न वेद्मि जयिनी च मनोभवाज्ञा॥ ६५॥**

अन्वयः—शबराङ्गनानाम् इदम् उन्मादि यौवनम्, अयं देवः अपि नववयाः कमनीयकान्तिः, रेवातटं चलचकोरमयूरहारि च मनोभवाज्ञा जयिनी। किं स्यात्, न वेद्मि।

सुधा—उन्मादीति। शबराङ्गनानाम् = शबरसुन्दरीणाम्। इदम् = एतत्। उन्मादि = उन्मादकम्। यौवनम् = तारुण्यम्। अयम् = एषः। देवः = नृपः अपि। नववयाः—नवं = नूतनम्, वयः = आयुर्यस्य सः। कमनीयकान्तिः—कमनीया = रमणीया, कान्तिः = दीप्तिर्यस्य सः। रेवातटम् = नर्मदाकूलम्। चलचकोरमयूरहारि—चलैः = चपलैः, चकोरैः = चकोरपक्षिभिः, मयूरैः = केकीभिश्च, हारि = हारकम्। च = तथा। मनोभवाज्ञा = मदनादेशः। जयिनी = विजयशीलः अस्ति। किम् स्यात् = किं भवेत्। इति न वेद्मि = न जानामि। वसन्ततिलकावृत्तम्।

हिन्दी—शबर सुन्दरियों का यह उन्मादी यौवन है। यह राजा भी नव अवस्था एवं कमनीय कान्ति वाला है। रेवातट चञ्चल चकोरों एवं मयूरों से मनोहर है तथा कामदेव की आज्ञा विजयिनी है। क्या होगा, यह समझ में नहीं आ रहा है॥ ६५॥

तथाहि –

**विकलयति कलाकुशलं, हसति शुचिं, पण्डितं विडम्बयति।**
**अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः ॥ ६६ ॥**

**अन्वयः**—मकरध्वजः देवः क्षणेन कलाकुशलं विकलयति, शुचिं हसति, पण्डितं विडम्बयति, धीरपुरुषम् अधीरयति ।

**सुधा—विकलयतीति ।** मकरध्वजः देवः=मदनदेवः । क्षणेन=निमिषेण । कलाकुशलम्—कलासु कुशलस्तम्=कलानिपुणं जनम् । विकलयति=व्याकुलीकरोति। शुचिम्=पवित्रम् । हँसति=उपहासं करोति । पण्डितम्=विद्वांसम् । विडम्बयति =विडम्बनां करोति । धीरपुरुषम्=धैर्यवन्तम् । अधीरयति=धैर्यहीनं करोति। आर्यावृत्तम् ।

**हिन्दी**—क्योंकि—कामदेव कलाकुशल व्यक्ति को व्याकुल कर देता है, पवित्र व्यक्ति का उपहास करता है, विद्वान् की विडम्बना करता है तथा धैर्यवान् पुरुष को अधीर बना देता है ॥ ६६ ॥

**अपि च—**

**मध्ये त्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम् ।**
**छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ ६७ ॥**

**अन्वयः**—हि चपलदृशां मध्ये, त्रिवलीपथे पीवरकुचचत्वरे च मदनपिशाचः मनाक् अपि स्खलितं पुरुषं छलयति ।

**सुधा—मध्य इति ।** हि=यतः । चपलदृशाम्=चञ्चलनेत्रीणाम् । मध्ये= कट्याम् । त्रिवलीपथे=त्रिवलीरूपत्रिमार्गे । पीवरकुचचत्वरे=स्थूलपयोधररूपचतुष्पथे । च मदनपिशाचः=दुष्टः मदनः । मनाक् अपि=किञ्चिदपि । स्खलितम्= विचलितम् । पुरुषम्=जनम् । छलयति=वञ्चयति । आर्या वृत्तम् ।

**हिन्दी**—चञ्चलनयनों वाली सुन्दरियों की कमर, त्रिवली रूप तिराहे तथा स्थूलपयोधर रूपी चौराहे पर मदनपिशाच थोड़ा भी विचलित हुए पुरुष को छलने लगता है ॥ ६७ ॥

**तदस्तु प्रस्तुतरसानुनयेनैव प्रभूणां मतयो निवर्त्यन्ते निषिद्धनिषेवणात्, न प्रतिकूलतया, इत्यवधारयन्नवनिपतिमवादीत् ।**

**सुधा—तदिति ।** तत्=अतः । अस्तु=भवतु । प्रभूणाम्=स्वामिनाम् । मतयः= बुद्धयः । प्रस्तुतरसानुनयेन एव=प्रकृतरसानुमत्यैव । निषिद्धनिषेवनात्—निषिद्धस्य= वर्जितस्य, निषेवणम्=सेवनम्, आग्रहस्तस्मात् सकाशात् । निवर्त्यन्ते=व्यावर्त्यन्ते । न प्रतिकूलतया=विपरीततया हठात्, निषिद्धस्याभिजातसङ्गमादेराग्रहं कुर्वाणः प्रभुः सहसा सम्पदानुजीविनाऽनिवार्यः । परं तदभिमतं प्राक् पुरस्कृत्य दोषं च दर्शयित्वा । सहसा निवार्यमाणो हि पराभवमिव मन्येत । इति=एवम् । अवधारयन्=निश्चयन् । अवनिपतिम्=भूपतिम् । अवादीत्=अकथयत् ।

हिन्दी—अस्तु, स्वामियों की बुद्धि को प्रकृत चर्चा द्वारा ही वर्जित पदार्थ के सेवन से हटाया जा सकता है प्रतिकूल चर्चा द्वारा नहीं। यह निश्चय करते हुए राजा से बोला—

**'देव' रमणीयः खल्वयं प्रदेशः।**

सुधा—देव इति। देव=स्वामिन्। अयम्=एषः, प्रदेशः=भूभागः। खलु=नूनम्। रमणीयः=सुरम्यः अस्ति।

हिन्दी—हे देव ! यह स्थान निःसन्देह सुरम्य है।

**तथा ह्यत्र—**

**आह्लादयन्ति मृदवो मृदितारविन्द-**
**निस्यन्दिमन्दमकरन्दकणान्किरन्तः।**
**एते किरातवनितास्तनशैलगण्ड-**
**सङ्घट्टजर्जररुचः सरितः समीराः॥ ६८॥**

अन्वयः—मृदितारविन्दनिस्यन्दिमन्दमकरन्दकणान् किरन्तः किरातवनितास्तनशैलगण्डसङ्घट्टजर्जररुचः सरितः एते मृदवः समीराः आह्लादयन्ति।

सुधा—आह्लादयन्तीति। मृदितारविन्दनिस्यन्दिमन्दमकरन्दकणान्—मृदितैः=मृदुलैररविन्दैः=कमलैः, निस्यन्दिनः, ये मन्दाः मकरन्दकणाः=मधुरसबिन्दवस्तान्। किरन्तः=विकिरन्तः। किरातवनितास्तनशैलगण्डसङ्घट्टजर्जररुचः—किरातवनितानां=किरातस्त्रीणाम्, स्तनान्येव शैलगण्डाः=पयोधरशैलास्तैः, संघट्टेन=संघर्षेण, जर्जराः=जीर्णाः, रुचिः=कान्तिर्यस्याः। सरितः=नद्याः। एते=इमे। मृदवः=मन्दाः। समीराः=पवनाः। आह्लादयन्ति=प्रसादयन्ति। वसन्ततिलकावृत्तम्।

हिन्दी—क्योंकि यहाँ—कुचले हुए अरविन्दों से टपकते मकरन्दबिन्दुओं को बिखेरती हुई किरातस्त्रियों के स्तनरूपी शैलों से टकराने के कारण जर्जरकान्तिवाली नदी की यह मृदुल हवाएँ आह्लादित कर रही हैं॥ ६८॥

**एताश्च—**

**उपनदि पुलिने पुलिन्दवध्वः स्तनपरिणाहविनिर्जितेभकुम्भाः।**
**शिथिलितसलिलार्द्रकेशबन्धाः किमपि मनोभववैभवं वहन्ति॥ ६९॥**

अन्वयः—स्तनपरिणाहविनिर्जितेभकुम्भाः शिथिलितसलिलार्द्रकेशबन्धाः पुलिन्दवध्वः उपनदि पुलिने किमपि मनोभववैभवं वहन्ति।

सुधा—उपनदीति। स्तनपरिणाहविनिर्जितेभकुम्भाः—स्तनानाम्=पयोधराणाम्, परिणाहेन=विस्तारेण, विनिर्जिताः=पराजिताः, इभकुम्भाः=गजकुम्भाः, याभिस्ताः। शिथिलितार्द्रकेशबन्धाः—शिथिलितानि=श्लथीकृतानि, आर्द्रकेशबन्धनानि=जलार्द्रवेणीबन्धनानि, याभिस्ताः। पुलिन्दबध्वः=किरातसुन्दर्यः। उपनदि=नद्याः समीपे। पुलिने=तटप्रदेशे। किमपि=किञ्चित्। मनोभववैभवम्=कामदेवैश्वर्यम्। वहन्ति=धारयन्ति। आर्यावृत्तम्।

हिन्दी—और यह—स्तनों के विस्तार से हाथियों के कुम्भस्थलों को पराजित करने वाली, गीले वेणीबन्धनों को शिथिल किये हुए किरातस्त्रियाँ नदी के समीप तट-भूमि पर कामदेव के अपूर्व ऐश्वर्य को धारण कर रही है ॥ ६९ ॥

**इतश्चावलोकयतु देवः—**

**सरसिजमकरन्दामोदमत्तालिगीत-**
**श्रवणसुखनिमीलच्चक्षुषः किञ्चिदेते ।**
**अपि दिवसमशेषं निश्चलाङ्गाः कुरङ्गाः**
**पुलिनभुवि विहाराहारबन्ध्या वसन्ति ॥ ७० ॥**

**अन्वयः**—सरसिजमकरन्दामोदमत्तालिगीतश्रवणसुखनिमीलच्चक्षुषः निश्चलाङ्गाः एते कुरङ्गा, इति विहाराहारबन्ध्याः पुलिनभुवि वसन्ति ।

**सुधा—इतश्चेति ।** इतश्च = च इह स्थाने । देवः = स्वामी । अवलोकयतु=पश्यतु । **सरसिजेति ।** सरसिजमकरन्दामोदमत्तालिगीतश्रवणसुखनिमीलच्चक्षुषः—सरसिजानाम् = कमलानाम्, मकरन्दामोदेन = मधुरसगन्धेन, मत्ताः=क्षीबाः ये अलयः=भ्रमराः, तेषां गीतस्य = गुञ्जारवस्य, श्रवणेन = आकर्णनेन, सुखेन = आनन्देन, निमीलन्ति, चक्षूंषि = नेत्राणि येषां ते । निश्चलाङ्गाः = निश्चलशरीराः । एते = इमे । कुरङ्गाः = मृगाः । अपि विहाराहारबन्ध्याः—विहारात् = विचरणात्, आहाराच्च = अशनाच्च, बन्ध्याः = हीनाः । पुलिनभुवि = तटवर्तिभूमौ । अशेषम् = पूर्णम् । दिवसम् = दिनम् । किञ्चित् = किमपि । वसन्ति = निवसन्ति । मालिनीवृत्तम् ।

हिन्दी—कमल की मधुर सुगन्ध तथा भौंरों की गुञ्जाररूपी गीत सुनकर मतवाले बने हुए आँखें बन्द किये हुए तथा निश्चल बने मृग विहार एवं भोजन छोड़कर तटवर्ती भूमि पर सम्पूर्ण दिन बड़े कष्ट के साथ रह रहे हैं ॥ ७० ॥

**इतोऽपि—**

**पद्मान्यातपवारणानि नलिनीपत्राणि पर्यङ्किका**
**दोलान्दोलनदोहदोऽपि च चलद्वीचीचयैः पूर्यते ।**
**आहारो बिसपल्लवं पुलिनभूर्लीलाविहारास्पदं**
**रेवावारिणि राजहंसशिशवस्तिष्ठन्ति धन्याः सुखम् ॥७१॥**

**अन्वयः**—आतपवारणानि पद्मानि, पर्यङ्किकाः नलिनीपत्राणि, चलद्वीचीचयैः दोलान्दोलनदोहदः अपि पूर्यते । आहारः बिसपल्लवं पुलिनभूः लीलाविहारास्पदं रेवावारिणि धन्याः राजहंसशिशवः सुखं तिष्ठन्ति ।

**सुधा—पद्मानीति ।** आतपवारणानि = छत्राणि । पद्मानि = कमलानि । पर्यङ्किका = शय्या । नलिनीपत्राणि = कमलदलानि । चलद्वीचीचयैः—चलताम् = चपलानाम्, वीचीनाम् = तरङ्गाणाम्, चयाः = समूहानि, तैः । दोलान्दोलनदोहदः अपि—दोलान्दोलनस्य = हिण्डोलचालनस्य, दोहदः = इच्छा । पूर्यते = पूर्ति गच्छति । आहारः = अशनम् । बिसपल्लवम् = मृणालदलम् । पुलिनभूः = तटभूमिः । लीलाविहारास्पदम् =

क्रीडाविचरणार्हम् । रेवावारिणि = रेवानद्या: जले । धन्या: = प्रशस्या: । राजहंस-शिशव: = राजहंसपक्षिशावका: । सुखम् = आनन्दम् । तिष्ठन्ति = निवसन्ति । शार्दूल-विक्रीडितं वृत्तम् ।

हिन्दी—और इधर—धूप निवारण करने वाले छातों के समान कमल हैं, विश्राम करने के लिए शय्याएँ नलिनीपत्र हैं, चञ्चल समूहों द्वारा झूला झूलने की इच्छा भी पूर्ण हो रही है । आहार मृणालपल्लव हैं तथा तटप्रदेश क्रीडाविहार करने का स्थान है । इस प्रकार रेवा नदी के जल में भाग्यवान् राजहंस पक्षियों के बच्चे सुखपूर्वक रहते हैं ।। ७१ ।।

**इहापि—**

**चिरविरचितचाटुश्चन्द्ररेखायमाण:**
**प्रथमरसबिसाग्रग्रासलीलार्पणेन ।**
**इह रमयति हंसीं राजहंसो रिरंसु:**
**पुलकयति च चञ्चूकोटिकण्डूयनेन ।। ७२ ।।**

अन्वय:—इह चिरविरचितचाटु: चन्द्ररेखायमाण: हंसीं रिरंसु: राजहंस: प्रथम-रसविसाग्रग्रासलीलार्पणेन रमयति चञ्चूकोटिकण्डूयनेन च पुलकयति ।

सुधा—चिरविरचितेति । इह = अत्र । चिरविरचितचाटु:—चिरम् = बहुकाल विरचित: = कृत:, चाटु: = चाटुकारिता येन स: । चन्द्ररेखायमाण: = चन्द्ररेखास कार: । हंसीम् = हंसस्त्रीम् । रिरंसु: = रन्तुमिच्छु:, रमणेच्छुक: । राजहंस: = राजहं पक्षी, राजा च । प्रथमरसविसाग्रग्रासलीलार्पणेन—प्रथमरसेन = उत्कृष्टप्रेम्णा बिसाग्र-ग्रासस्य = मृणालाग्रकवलस्य यदर्पणम्, तेन रमयति = अनुरञ्जयति, चञ्चूकोटिकण्डूय-नेन—चञ्चूकोटया = चञ्च्वग्रभागेन कण्डूयनम्, तेन च पुलकयति=पुलकितं करोति । मालिनीवृत्तम् ।

हिन्दी—इधर भी—यहाँ बहुत समय तक चाटुकारिता करता हुआ चन्द्ररेखा के समान आकृति बनाने वाले हंसी से रमण करने का इच्छुक राजहंस तथा राजा नल उत्कृष्ट प्रेम से मृणालाग्र भाग को कवल बनाने की क्रीडा से समर्पण करने के द्वारा मनोरञ्जन कर रहा है तथा चोंच के अग्रभाग से खुजलाकर पुलकित कर रहा है ।।७२।।

**अपि च—**

**इह चरति चकोर: कोरकं पङ्कजाना-**
**मिह चलदलिचक्राच्चक्रवाको बिभेति ।**
**इह रमयति जीवञ्जीवको जीवितेशा-**
**मिह वहति विकारं हारि हारीतकोऽपि ।। ७३ ।।**

**अन्वय:—इह चकोर: पङ्कजानां कोरकं चरति, चक्रवाक: चलदलिचक्रात् बिभेति । इह जीवञ्जीवक: जीवितेशां रमयति इह हारि हारीतक: अपि विकारं वहति ।**

**सुधा—इहेति । इह = अत्र । चकोर: = चकोरपक्षी । पङ्कजानाम् = पद्मानाम्,**

कोरकम्=कलिकाम्। चरति=भक्षयति। चक्रवाकः=चक्रवाकपक्षी। चलदलिचक्रात्—चलताम्=चपलानाम्, अलीनाम्=भ्रमराणाम्, चक्रम्=समूहम्, तस्मात्। बिभेति=भयं करोति। इह=अत्र। जीवंजीवकः=पक्षिविशेषः। जीवितेशाम्=प्रियां, जीवंजीवकीम्। रमयति=रञ्जयति। इह=अत्र। हारि हारीतकः=मनोरमो हारीतपक्षी अपि। विकारम्=विकृतिम्। वहति=धारयति। मालिनीवृत्तम्।

हिन्दी—और भी—यहाँ चकोर कमलों को चर रहा है, चक्रवाक पक्षी चञ्चल भ्रमर दल से भयभीत हो रहा है जीवंजीवक पक्षी अपनी प्रियतमा को प्रसन्न कर रहा है तथा मनोहर हारीत ( पक्षीविशेष ) भी विकृति का अनुभव कर रहा है।

**एवमसौ निषधेश्वरः श्रुतशीलेन प्रज्ञापूर्वमपररमणीयप्रदेशान्तरदर्शनव्याजेनान्तरितशबरसुन्दरीदिदृक्षाग्रहो गृहान्प्रति प्रत्यावृत्तः।**

सुधा—एवमिति। एवम्=इत्थम्। असौ=एषः। निषधेश्वरः=विदर्भराजः। श्रुतशीलेन=तन्नाम्ना जनेन। प्रज्ञापूर्वम्=बुद्धिसहितम्। अपररमणीयदेशान्तरदर्शनव्याजेन=अन्यकमनीयस्थानावलोकनमिषेण। अन्तरितशबरसुन्दरीदिदृक्षाग्रहः—अन्तरिता=प्रच्छन्नीकृता, शबरसुन्दरीणाम्=किरातनारीणाम्, दिदृक्षा=दृष्टुमिच्छा, तस्याः आग्रहः=हठः, येन सः। गृहान्=आवासस्थानानि प्रति। प्रत्यावृत्तः=प्रत्यागच्छत्।

हिन्दी—इस प्रकार वह निषधेश्वर श्रुतशील के द्वारा बुद्धिमत्तापूर्वक अन्य रमणीक स्थानों को देखने के बहाने से नहाते शबरसुन्दरियों को देखने की इच्छा से आग्रह किये जाने पर घर की ओर लौट आया।

**चिन्तितवांश्च—'कथं नु सा दमयन्ती पुरन्दरप्रमुखेषु लोकपालेष्वर्थिषु मया मनुष्यजन्मना लब्धव्येति निवारयिष्यन्ति च तां खलु दिव्यसम्बन्धार्थिनो बान्धवाः। तत्किमिह शरणम्' इति विमुक्तदीर्घनिःसहनिःश्वासमसकृच्चिन्तयति राजनि 'राजन्, रामाजनः पद्म इव वारितः सुतरां प्रवर्तते। नालमस्य दीर्घमनुरक्तस्य जायतेऽपरागो नाप्यलीकाभिनिवेशोऽस्य हीयते। किञ्चान्यदन्यपरिग्रहवर्तिनीनामपि स्त्रीणामन्यत्रापि रागाग्रहो भवति। यतः पश्य वरुणप्रतिग्रहेऽपि प्रतीचीयं मयि रागिणी भविष्यति' इत्येवमिममाश्वासयन्निव भगवान्भानुरुत्तुङ्गतरुशिखराणि करैः पतनभयादिवावलम्बमानः शनैर्गगनतलादवतीर्य प्रतीचीं दिशमयासीत्।**

सुधा—चिन्तितवानिति। च=तथा। चिन्तितवान्=विचारयामास। नु=खलु। सा=असौ। दमयन्ती=भैमी। पुरन्दरप्रमुखेषु—पुरन्दरः=इन्द्रः, प्रमुखः=मुख्यः, येषु तेषु। अर्थिषु=अभिलाषिषु। लोकपालेषु=दिक्पालेषु। मनुष्यजन्मना=मानवयोनिना। मया=नलेन। कथम्=प्रकारेण। लब्धव्या=प्राप्तव्या। इति। ताम्=दमयन्तीम्। खलु=नूनम्। दिव्यसम्बन्धार्थिनः=देवसम्बन्धकामिनः। बान्धवाः=बन्धुजनाः। निवारयिष्यन्ति=वारयिष्यन्ति। तत्=अतः। कथम्=किमिति। इह=अत्र। शरणम्=रक्षणोपायः। इति=एवम्। विमुक्तदीर्घनिःसहनिःश्वासम्=

त्यक्तात्यसह्यनि:श्वासम् । असकृत्=वारंवारम् । राजनि=नृपे । चिन्तयति=विचारयति । राजन्=हे नृप ! रामाजनः=नारीजनः । पद्म इव=कमलमिव । वारितः=जलात् । सुतराम्=नितराम् । वारितः=निषिद्धः । प्रवर्तते । अस्य=स्त्रीजनस्य । दीर्घम्=बहुकालम् । अनुरक्तस्य=सानुरागस्य सतः । अलम्=अत्यर्थम् । न अपरागः जायते=रागापायः न स्यात् । तथा अस्य=एतस्य । अलीकाभिनिवेशः अपि=मिथ्यानुरागप्रवृत्तिः अपि । न हीयते । किं पुनः यादृक्त्वय्यभिनिवेशः । किञ्च=किन्तु । अन्यदन्यपरिग्रहवर्तिनीनाम् अपि=अपरापरानुरागवर्तिनीनामपि । स्त्रीणाम्=नारीणाम् । अन्यत्र अपि=अन्यजनेऽपि । अनुरागः=प्रेम । भवति=जायते । यतः=यस्मात् । पश्य=अवलोकय । वरुणप्रतिग्रहेऽपि=वरुणस्वीकृतेऽपि । इयम्=एषा । प्रतीची=पश्चिमाशा । मयि=ममापि विषये । रागिणी=अनुरक्ता भविष्यति । इति एवम्=इत्थम् । इमम्=एतम् । आश्वासयन् इव=धैर्यं धारयन्निव । भगवान् भानुः=सूर्यभगवान् । पतनभयात्=स्खलनभिया । उत्तुङ्गतरुशिखराणि=उन्नतपादपशिरांसि । करैः=किरणैः । अवलम्बमानः=अवलम्बनम् क्रियमाणः । शनैः=मन्दम् । गगनतलात्=नभस्तलात् । अवतीर्य=अवतरणं कृत्वा । प्रतीचीम् दिशम्=पश्चिमाशाम् । अयासीत्=अगच्छत् ।

हिन्दी—तथा सोचने लगा—'इन्द्र आदि लोकपाल जिस दमयन्ती के याचक हैं उसे मनुष्ययोनि में जन्म लेने वाला मैं कैसे प्राप्त करूँ। उस दमयन्ती को दिव्य सम्बन्ध चाहने वाले बान्धव अवश्य मना करेंगे । अतः मुझे क्या उपाय करना चाहिये।' इस प्रकार लम्बी-लम्बी असह्य साँसें खींचते हुए बार-बार राजा के चिन्तित होने पर मानो यह कहता हुआ—'हे राजन् ! स्त्रियाँ कमल के समान निषेध किये जाने पर निरन्तर प्रवृत्त होती हैं पूर्ण अनुरक्त होने पर इनके अनुराग का अपराग ( अभाव ) नहीं किया जा सकता है तथा मिथ्या अनुराग प्रवृत्त को दूर भी नहीं किया जा सकता है बल्कि दूसरों को ब्याही गयी स्त्रियों का भी दूसरों से हठपूर्वक प्रेम हुआ देखा जाता है । क्योंकि देखो—वरुण के द्वारा ग्रहण की गयी यह प्रतीची ( पश्चिम ) दिशा भी मुझमें अनुराग रखती है । इस प्रकार आश्वासन देते हुए सूर्य भगवान् पतन भय से ऊँचे-ऊँचे वृक्षों की चोटियों का अपने किरणरूपी करों से सहारा लेते हुए धीरे-धीरे गगन तल से उतरकर पश्चिम दिशा की ओर चले गये ।

**अम्बरान्तःप्रसारितकरे रागिणि रक्तया परियुक्ते तु पश्चिमककुभाऽम्भोजिनीजीवितेश्वरे;**

सुधा—अम्बरान्त इति । अम्बरान्तःप्रसारितकरे–नभोऽन्तःप्रसारितांशौ । रागिणि =रक्ततान्विते । रक्तया=रागपूर्णया । पश्चिमककुभा=प्रतीचीदिशा । परियुक्ते=संयुक्ते सति । अम्भोजिनीजीवितेश्वरे=कमलिनीजीवनेश्वरे रवौ (प्राच्या चिन्तितमिति)।

हिन्दी—अम्बर ( गगन, वस्त्र ) के अन्दर कर ( किरण, हाथ ) फैलाकर अनुरागपूर्ण पश्चिम दिशा के साथ कमलिनी जीवनेश्वर सूर्य के पश्चिम दिशा को चले जाने पर—

पूर्वाहं विहितोदयाहमसकृत्तन्मां विहायाधुना
यस्यामस्तमुपैति तां कथमयं रागी जघन्यामगात् ।
इत्येवं श्लथितांशुके दिनपतौ याते दिशं पश्चिमा-
मीर्ष्यारोषविषादिनीव तमसा प्राची ककुब्लक्ष्यते ॥ ७४ ॥

अन्वयः—पूर्वा अहम्, असकृत् विहितोदया, तत् माम् अधुना विहाय यस्याम् अस्तम् उपैति अयम् रागी ताम् जघन्याम् कथम् अगात् । इति एवम् श्लथितांशुके दिनपतौ पश्चिमायां दिशं याते प्राची ककुभ् तमसा ईर्ष्यारोषविषादिनी इव लक्ष्यते ।

सुधा—पूर्वेति । पूर्वा=आद्या । अहम् । असकृत्=बहुबारम् । विहितोदया—वि[illegible]:=कृतः, उदयो यथा तथा । तत्=अतः । माम्=पूर्वाम् यस्यां दिशायाम् प्रियायां वा । अस्तम्=समाप्तिम् । उपैति=उपगच्छति । अयम्=एषः । सूर्यः नलो वा । रागी=रक्तः, अनुरक्तो वा । ताम्=एताम् । जघन्याम्=निकृष्टायाम् । कथम्=केन प्रकारेण । अगात्=अगच्छत् । इति । एवम्=इत्थम् । श्लथितांशुके—शिथिलितम्. अंशुकम्=वस्त्रम, किरणसमूहम् वा यस्य तस्मिन् । दिनपतौ=रवौ नले वा । पश्चिमाम्=प्रतीचीम् । दिशम्=आशाम् । याते=प्रस्थिते । प्राचीककुभ्=प्राग्दिशा । तमसा=अन्धकारेण । ईर्ष्यारोषविषादिनी इव=ईर्ष्याक्रोधव्याकुलेव । लक्ष्यते=दृश्यते । शार्दूलविक्रीडितं वृत्तम् ।

हिन्दी—पहली मैं हूँ, मैंने अनेक बार उसका उदय किया है । पर इस समय मुझे छोड़कर वह जिसमें अस्त हो रहा है तथा जिस पापिनी के साथ कैसे बड़े प्रेम से चला गया है । इस प्रकार शिथिल किरणों वाले ( ढीले वस्त्रों वाले ) सूर्य ( राजा नल ) के पश्चिम दिशा ( पीछे ) को चले जाने पर प्राची दिशा अन्धकार से ईर्ष्या तथा क्रोध से व्याकुल जैसी दिखलाई पड़ती है ॥ ७४ ॥

विश्लेषाकुलचक्रवाकमिथुनैरुत्पीडमाक्रन्दिते
कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते ।
शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखै-
र्निःश्वासानलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ ७५ ॥

अन्वयः—विश्लेषाकुलचक्रवाकमिथुनैः उत्पीडम् आक्रन्दिते, कारुण्यात् इव नलिनीषु मीलितासु मित्रे अस्तंगते च, शोकेन इव अभितः दिगङ्गनाभिः श्यामायमानैः मुखैः निःश्वासानलधूमवर्तय इव तमोराजयः उद्गीर्णाः ।

सुधा—विश्लेषेति । विश्लेषाकुलचक्रवाकमिथुनैः—विश्लेषेण=वियोगेन, आकुलानि=विकलवानि चक्रवाकानाम्=चक्रवाकपक्षिणाम्, मिथुनानि=युगलानि तैः । उत्पीडम्—उत्कृष्टापीडा यत्र तत्=सदुःखम् । आक्रन्दिते=करुणरुदिते सति । कारुण्यात्=करुणाभावात् इव । नलिनीषु=कमलिनीषु । मीलितासु=मुकुलितासु । मित्रे=सूर्ये । अस्तंगते=अस्ताचलप्रस्थिते च । शोकेन इव=दुःखेन इव । अभितः=परितः । दिगङ्गनाभिः=दिग्वधूभिः । श्यामायमानैः=कृष्णायमानैः । मुखैः=आननैः ।

निश्वासानलधूमवर्तय इव=निःश्वासरूपाग्निधूमपङ्क्तिसदृशम्। तमोराजयः—तमसः =अन्धकारस्य, राजयः=पङ्क्तयः। उद्गीर्णाः=प्रसृताः। शार्दूलविक्रीडितं वृत्तम्।

हिन्दी—वियोग के भय से व्याकुल चकई चकवे मानो उत्कृष्ट पीडा युक्त हो करुण क्रन्दन करने लगे। मानों करुणाभाव से कमलिनीदल के मुकुलित हो जाने तथा सूर्य के अस्ताचल चले जाने पर, शोक से मानो चारों ओर दिग्वधुओं के मुख काले हो जाने पर निःश्वास रूपी अग्नि के धुंए की पंक्तियों जैसी अन्धकार श्रेणियाँ फैल गई।

**तथाविधे च वेलाव्यतिकरे राज्ञः सन्ध्यावसरमावेदयितुमस्यासन्नविहारि हारि लीलाकिन्नरमिथुनमिदमगायत्—**

सुधा—तथेति। च=तथा। तथाविधे=तादृशे। वेलाव्यतिकरे=सान्ध्यकाले अस्य=राज्ञः नृपस्य। सन्ध्यावसरम्=सान्ध्यपूजनकर्मावसरम्। आवेदयितुम्=निवेदयितुम्। आसन्नविहारि=समीपे विचरणशीलम्। हारि=मनोरमम्। लीलाकिम्पुरुषयुगलम्। इदम्=एतत्। अगायत्=गायनमकरोत्।

हिन्दी—इस प्रकार सन्धि के अवसर पर उस राजा के सन्ध्यावन्दनकाल को बतलाने के लिए समीप में विचरण करने वाला मनोरम किन्नरमिथुन इस प्रकार गाने लगा—

**'रक्तेनाक्तं विनिहितमधोवक्त्रमेतत्कपालं**
**तारामुद्राः किमु कलयता कालकापालिकेन।**
**सन्ध्यावध्वाः किमु विलुठिता कौङ्कुमी शुक्तिरेवं**
**शङ्कां कुर्वञ्जयति जलधावर्धमग्नार्कबिम्बम्' ॥ ७६ ॥**

**अन्वयः**—अधोवक्त्रं रक्तेनाक्तम् एतत् कपालं तारामुद्राः विनिहितं कालकापालिकेन कलयता किमु। सन्ध्यावध्वाः कौङ्कुमी शुक्तिः विलुठिता किमु इत्थम् उदधौ अर्धमग्नार्कबिम्बं शङ्कां कुर्वन् जयति।

सुधा—रक्तेनेति। अधोवक्त्रम्—अधस्तात्, वक्त्रम्=मुखम्, यस्य तदधोवक्त्रम्= अधोमुखम्। तथा रक्तेनाक्तम्=रुधिरेण लिप्तम्। एतत्=इदम्। कपालम्=पानपात्रम्। तारमुद्राः—ताराः=नक्षत्राणि एव मुद्राः=रुचिकाख्यानि हस्तपादादीनामस्थ्याभरणानि। विनिहितम्=विधृतम्। कापालिकेन—कपालं अस्ति यस्य सः कापालिकस्तेन। कलयता=विभ्रता। किमु। सन्ध्यावध्वाः=सन्ध्यासुन्दर्याः। कौङ्कुमी शुक्तिः। विलुठिता=अधोमुखी लुठिता किमु इति वितर्कः। एवम्=इत्थम्। उदधौ= सिन्धौ। अर्धमग्नम्=अपूर्णनिमग्नम्। अर्कबिम्बम्=सूर्यप्रतिबिम्बम्। शङ्काम्= सन्देहम्। कुर्वन्=उत्पादयन्। जयति।

हिन्दी—रुधिर भरे खप्पर का मुख नीचे किये हुए तारकमुद्राओं को कालकापालिक धारण कर रहा है क्या? सन्ध्यावधुओं की कुङ्कुम सम्बन्धी ( सेन्दुरी ) शुक्ती क्या उलट गई है? इस प्रकार समुद्र में अर्धमग्न सूर्यबिम्ब शंका उत्पन्न कर रहा है।

टिप्पणी—औघड़ सन्त हाथ में खप्पर लिये हुए अपने शरीर पर भस्म से विभिन्न

प्रकार के चित्र बनाया करते हैं। वे रक्त पान भी करते हैं। अतः यहाँ सन्ध्याकाल में अधडूबे सूर्यबिम्ब की तुलना एक ऐसे कापालिक से की है जिसने अपने कपाल में रक्त भर कर उड़ेल दिया हो तथा आकाश में बिखरे हुए तारे ही उसके शरीर पर बनने वाले भस्म चिह्न हों ॥ ७६ ॥

**अथ क्रमेण गगनमन्दाकिनीतीरतापसैर्विकीर्यमाणेषु सन्ध्यार्घाञ्जलिजलबिन्दुबुद्बुदेष्विव किञ्चिदुन्मीलत्सु विरलतरतारास्तबकेषु, वासरविरामवादितवाद्येष्वमरसदनेषु, दह्यमानबहलधूममञ्जरीष्विव वियति विहरन्तीषु तनुतिमिरवल्लरीषु, स्वपत्पतत्रिकुलकोलाहलेन वासार्थिश्रान्तागताध्वगस्वागतालापमिव कुर्वाणासु वनराजिषु, अन्यत्र परिभ्रमणपरिहारार्थमिव पद्मिनीनां कोशपानमाचरत्सु चञ्चलचञ्चरीकेषु, रत्युत्सवोत्साहावेशमहामन्त्राक्षरेष्विव श्रूयमाणेषु महासरित्कूलकुलायनिलीनजलकुक्कुहकुहरितेषु, रामायणव्यतिकरेष्विव मन्दोदरीप्रहस्तप्रबोधितोत्सिक्तदशाननेषु सन्ध्याप्रदीपेष जाते जरत्कुम्भकारकुक्कुटकुटुम्बपक्षपिच्छविच्छाये मनाक्तमोनुविद्धे सन्ध्यारागे राजा विषादविस्मृतसन्ध्याह्निकः परिजनानुबन्धात्सन्ध्यां ववन्दे।**

सुधा—अथेति। अथ=अनन्तरम्। क्रमेण=क्रमशः। गगनमन्दाकिनीतीरतापसैः—गगनमन्दाकिन्याः=आकाशगङ्गायाः, तीरम्=तटम्, तत्र ये तपस्विनः=तापसजनाः तैः। विकीर्यमाणेषु=प्रसार्यमाणेषु। सन्ध्यार्घाञ्जलिजलबिन्दुबुद्बुदेषु इव—सन्ध्यार्घाय=सान्ध्यकालीन-अर्धजलदानाय, अञ्जलेः यानि जलबिन्दूनि=वारिसीकराणि, तेषां बुद्बुदेषु इव। किञ्चित्=किमपि। विरलतारास्तबकेषु=यत्र तत्र नक्षत्रगुच्छेषु। मीलत्सु=मुकुलवत्सु। वासरविरामवादितवाद्येषु—वासरविरामे=दिनसमाप्तौ, वादितेषु=नदत्सु, वाद्येषु=वाद्ययन्त्रेषु, इव। अमरसदनेषु=देवगृहेषु। दह्यमानवहलधूपधूममञ्जरीषु इव=ज्वलत्सु बहुधूपधूमकलिकासु समम्। वियति=विहायसि। तनुतिमिरवल्लरीषु=क्षीणान्धकारलतासु। विहरन्तीषु=विचरन्तीषु। स्वपत्पतत्रिकुलकोलाहलेन—स्वपताम्=निद्रितानाम्, पतत्रिणाम्=खगानाम्, यत् कुलम्=समूहम्, तस्य कोलाहलः=कलरवस्तेन। वासार्थिश्रान्तागताध्वगस्वागतालापमिव—वासार्थिनाम्=निवासकामिनाम्, श्रान्तानाम्=क्लान्तानाम्, अध्वगानाम्=पथिकानाम्, स्वागतालापम् इव=सत्कारवार्तालापमिव। वनराजिषु=काननपङ्क्तिषु। कुर्वाणासु=विदधानासु। अन्यत्र=अन्यस्थानम्। परिभ्रमणपरिहारार्थम्=चङ्क्रमणत्यागार्थम्। पद्मिनीनाम्=कमलिनीनाम्। कोशपानम्=कणिकापानम्। शपथग्रहणम् च। आचरत्सु=कुर्वत्सु। चञ्चलचञ्चरीकेषु इव=चपलभ्रमरेषु इव। महासरित्कूलकुलायनिलीनजलकुक्कुहकुहरितेषु—महासरितः=महानद्याः, कूले=तटे, कुलायेषु=गुहासु, निलीनानि=अन्तरितानि, यानि कुक्कुहानि=जलध्वनयः, तेषां

कुहरितेषु=कर्णरन्ध्रगतेषु । रत्युत्सवोत्साहावेशमहामन्त्राक्षरेषु—रत्युत्सवस्य=कामोत्सवविषयकस्योत्साहावेशस्य=उत्तेजनायाः महामन्त्रस्याक्षराणि तेषु । श्रूयमाणेषु=आकर्ण्यमानेषु इव । रामायणव्यतिकरेषु=रामायण-प्रसङ्गेषु । मन्दोदरीप्रहस्तप्रबोधितोत्सिक्तदशानेषु—मन्दोदर्याः=मन्दोन्दरीनाम्न्याः पत्न्याः, प्रहस्तेन=सेनान्या, प्रबोधितः=प्रकर्षेण बोधितः, उत्सिकः=उद्रिक्तः सन् दशाननः=रावणो येषु तथाभूतेषु । सन्ध्याप्रदीपेषु इव=सान्ध्यदीपकेषु इव । जरत्कुम्भकारकुक्कुटकुटुम्बयक्षपिच्छविच्छाये—जरत्कुम्भकारः=वृद्धः, कुम्भकारजातिविशेषः कुक्कुटः=पक्षिविशेषः, तस्य कुटुम्बस्य=समुदायस्य पक्षाणाम्=पुंखानाम् पिच्छविच्छायः=स्तबकसदृशस्तस्मिन् । मनाक्=किञ्चित् । तमोनुविद्धे=अन्धकारमिश्रिते, सन्ध्यारागे=सान्ध्यारुणे जाते । राजा=भूपतिः । विषादविस्मृतसन्ध्याह्निकः—विषादेन=खेदेन, विस्मृतः, सन्ध्याह्निकः=सान्ध्यदिनकर्म येन सः । परिजनानुबन्धात् परिजनानाम्=सेवकानाम् अनुबन्धः=आग्रहः, तस्मात् । सन्ध्याम् ववन्दे=सन्ध्यावन्दनं चकार ।

हिन्दी—तदनन्तर क्रमशः आकाशगङ्गा के तट पर तपस्विजनों के द्वारा दी गई सन्ध्या की सूर्यार्घ-अञ्जलि के जल के बुलबुलों के समान कहीं नक्षत्रों के गुच्छे निकल रहे थे । दिवस की समाप्ति पर देवताओं के सदनों में बाजे बज रहे थे । जलती हुई पर्याप्त धूप के धुँए की मञ्जरी के समान आकाश में क्षीण अन्धकार लताएँ फैल रहीं थीं । सोते हुए पक्षियों के कलरव के बहाने निवास की इच्छा से आये हुए थके पथिकों के लिए वनपंक्ति स्वागतवार्ता कर रही थी । अन्यत्र परिभ्रमण करने के लिए चञ्चल भौंरों के द्वारा कमलिनियों का कोशपान ( शपथ ग्रहण ) किया जा रहा था । मदनोत्सव की उत्तेजना के महामन्त्र के अक्षरों के समान महानदी के तट पर बनी गुफाओं में घुसी हुई जल की आवाजें कानों में सुनाई पड़ रही थीं । रामायण के प्रसङ्गों में मानो मन्दोदरी और प्रहस्त नामक सेनापति द्वारा प्रबोधित उत्सिक्त ( घमण्डित तेल से भरे ) रावण रूपी सन्ध्या दीपकों को जलाया जा चुका था । वृद्ध कुम्भकार जाति के विशेष प्रकार के कुक्कुटपक्षियों के समुदाय के पंखों के गुच्छों के समान थोड़ी सान्ध्यलालिमा के अन्धकार मिश्रित हो जाने पर राजा विषाद के कारण सन्ध्यावन्दनादि कार्य भूल गया था, अत एव अनुचरों द्वारा निवेदन किये जाने पर उसने सन्ध्यावन्दन कार्य किया ।

**ततश्च क्रमेण—**

**रजनिमवनिनाथः सान्ध्यकर्मावसाने**
**हरचरणसरोजद्वन्द्वसेवां विधाय ।**
**मृदुकलितविपञ्चीपञ्चमप्रायगीत-**
**श्रवणसुखविनोदैस्तां स तस्मिन्ननैषीत् ॥ ७७ ॥**

**इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरण-सरोजाङ्कायां पञ्चम उच्छ्वासः समाप्तः ।**

---

**अन्वयः**—सः अवनिनाथः तस्मिन् सान्ध्यकर्मावसाने हरचरणसरोजद्वन्द्वसेवां विधाय तां रजनिं मृदुकलितविपञ्चीपञ्चमप्रायगीतश्रवणसुखविनोदैः अनैषीत् ।

**सुधा—रजनिमिति** । सः=तथोक्तः । अवनिनाथः=भूपतिः । तस्मिन्=तथाविधे । सान्ध्यकर्मावसाने—सन्ध्यायाम् भवम्=सान्ध्यम्, सन्ध्याकालीनम्, कर्म=कृत्यम्, तस्य अवसाने=समाप्तौ । हरचरणसरोजद्वन्द्वसेवाम्=शिवपादपद्मयुगलसेवाम् । विधाय=सम्पाद्य । ताम्=एताम् । रजनिम्=निशाम् । मृदुकलितविपञ्चीपञ्चमप्रायगीतश्रवणसुखविनोदैः—कलितविपञ्च्याः=सुन्दरवीणायाः पञ्चमप्रायगीतम्=पञ्चमस्वरयुक्तं गायनम् । मृदु=कोमलम् यत् कलितं विपञ्चीपञ्चमप्रायगीतम्, तस्य श्रवणस्य=आकर्णनस्य ये सुखविनोदाः=आनन्दानि, तैः । अनैषीत्=अव्यवाहृत् । मालिनीवृत्तम् ।

**हिन्दी**—तदनन्तर क्रमशः राजा ने उस सन्ध्यावन्दनादि कार्य के समाप्त होने पर शिवजी के चरण-कमल-युगल की सेवा कर वह रात्रि सुन्दर वीणा के प्रायः पञ्चमस्वर युक्त गीत सुनने के सुख विनोदों द्वारा व्यतीत की ।

इति शाहजहाँपुर-मण्डलान्तर्वर्तिनो 'नाहिल'ग्रामवास्तव्यस्याचार्यपरमेश्वरदीनपाण्डेयस्य नलचम्पूकाव्ये 'सुधा'संस्कृतहिन्दी-टीकाद्वयोपेतः पञ्चम उच्छ्वासः ॥

---

# श्लोकानुक्रमणिका

## प्रथम उच्छ्वासः

## द्वितीय उच्छ्वासः



## तृतीय उच्छ्वासः

## चतुर्थ उच्छ्वासः



## पञ्चम उच्छ्वासः

## षष्ठ उच्छ्वासः

## सप्तम उच्छ्वासः

# षष्ठ उच्छ्वासः

**अथ द्विजननिकायकीर्णसन्ध्याञ्जलिजलैरिव क्षाल्यमाने मनाग्विमलतां व्रजति तिमिरमलिनेऽम्बरे, मालाकारेणेव प्रभातप्रभोद्भेदेनावचीयमानेषु गगनपुष्पवाटिकाकुसुमेष्विव नक्षत्रेषु, निद्रापहारहुङ्कार इवोत्थिते प्रभात-भेरीध्वनौ, नरपतेः प्रबोधनार्थमदूरे वैतालिकः पपाठ।**

सुधा—अथेति। अथ=अनन्तरम्। द्विजजननिकायकीर्णसन्ध्याञ्जलिजलैः—द्विजजनानाम्=द्विजातिलोकानाम्, निकायः=समूहः, तेन कीर्णैः=व्याप्तैः सन्ध्या-ञ्जलिजलैः=सन्ध्योपासनवारिभिः। क्षाल्यमाने=प्रक्षाल्यमाने। इव=समम्। मनाक्=किञ्चित्। विमलताम्=निर्मलताम्। व्रजति=गच्छति। तिमिरमलिने—तिमिरेण=अन्धकारेण, मलिनम्, तस्मिन्। अम्बरे=गगने। मालाकारेण इव=स्रक्कारेण समम्। प्रभातप्रमोद्भेदेन—प्रभातस्य=प्रातःकालस्य, प्रभा=कान्तिस्तस्याः उद्भेदः=विकासस्तेन। गगनपुष्पवाटिकाकुसुमेषु—गगनमेव पुष्प-वाटिका=आकाशोद्यानम् तस्य कुसुमानि=पुष्पाणि तेषु। अवचीयमानेषु इव=सञ्चीयमानेष्विव। नक्षत्रेषु =उडुगणेषु। निद्रापहारहुङ्कार इव—निद्राम्=स्वपनम्, अपहरतीति निद्रापहारो यः हुङ्कारः=गर्जनम्, तस्मिन्निव। उत्थिते=समुपजाते। प्रभातःभेरीध्वनौ=प्रातःकालीनभेरीशब्दे। नरपतेः=भूपतेः। प्रबोधनार्थम्=जाग-रणार्थम्। अदूरे—न दूरमदूरं, तस्मिन्=समीपे। वैतालिकः=स्तुतिपाठकः। पपाठ=अपठत्।

हिन्दी—तदनन्तर द्विजवर्ग सान्ध्यकर्मनिमित्त जलाञ्जलि देने लगा था। अन्धकार से मलिन आकाश मानो कुछ-कुछ धुलने (स्वच्छ होने) लगा था माली के समान प्रातःकाल की कान्ति के विकास से मानों आकाश रूपी पुष्पवाटिका के पुष्पों जैसे नक्षत्र चुने जाने लगे थे। नींद का अपहरण करने वाली हुङ्कार के समान मानों प्रभात की भेरी ध्वनि उठ रही थी। ( ऐसे अवसर पर ) भूपति को जगाने के लिए थोड़ी दूर पर वैतालिक ने ( श्लोक ) पढ़ा।

**उदयगिरिगतायां प्राक्प्रभापाण्डुताया-**
**मनुसरति निशीथे शृङ्गमस्ताचलस्य।**
**जयति किमपि तेजः साम्प्रतं व्योममध्ये**
**सलिलमिव विभिन्नं जाह्नवं यामुनं च॥ १॥**

**अन्वयः**—प्राक्प्रभापाण्डुतायाम् उदयगिरिगतायाम् अस्ताचलस्य शृङ्गम् अनुसरति निशीथे साम्प्रतं व्योममध्ये विभिन्नं जाह्नवं यामुनं च सलिलम् इव किम् अपि तेजः जयति॥ १॥

**सुधा—उदयगिरीति।** प्राक्प्रभापाण्डुतायाः—प्राचः=पूर्वस्य, प्रभा=कान्तिः

प्राक्प्रभा, तस्याः पाण्डुता=शुभ्रता, यत्र तथा। उदयगिरिगतायाम्=उदयाचल-प्रस्थितायाम्। अस्ताचलस्य=अस्तगिरेः। भृङ्गम्=शिखरम्। अनुसरति=अनुगच्छति। निशीथे=रजन्याम्। सम्प्रतम्=इदानीम्। व्योममध्ये=गगनान्तरे। विभिन्नम्=विभक्तम्। जाह्नवम्=जाह्नव्या इदं जाह्नवम्। यामुनम्=यमुनाया इदं यामुनम् च। सलिलम्=जलम् इव। किमपि=किञ्चित्। तेजः=ओजः। जयति=शोभते। अत्रोत्प्रेक्षालङ्कारः। मालिनी वृत्तम् ॥ १ ॥

**हिन्दी**—प्राची दिशा की प्रभा ( प्रकाश ) से उदयाचल प्रकाशित हो रहा था। रात्रि अस्ताचल के शिखर का अनुसरण कर रही थी। अब आकाश के मध्य विभक्त मानों शुभ्र गङ्गाजल तथा यमुनाजल ( श्यामल ) के समान कुछ-कुछ तेज शोभित होने लगा था ॥ १ ॥

**टिप्पणी**—इस श्लोक में कवि ने प्रातःकालीन तेज को गगनमध्य गाङ्ग तथा यामुन जलों के विभाजन द्वारा उत्प्रेक्षित किया है। इसी सूक्ष्म दृष्टि से कवि का नाम भी 'यामुन-त्रिविक्रम्' विख्यात् हुआ—'प्राच्याद विष्णुपरी हेतोरपूर्वोऽयं त्रिविक्रमः। निर्ममे विमलं व्योम्नि यत्पदं यमुनामपि।'' इति।

**अपि च—**

**यात्यस्ताचलमन्धकारपटले जातेऽरुणस्योदये**
**तापिच्छच्छदपद्मरागमहसोर्मध्यं ककुब्भागयोः।**
**अन्तर्विष्णुविरञ्चयोरिव मनाग्लिङ्गोद्भवभ्रान्तिकृत्-**
**तेजः पाण्डुरपिञ्जरं च किमपि श्यामं च तद्वोऽवतात् ॥ २ ॥**

**अन्वयः**—अन्धकारपटले अस्ताचलं याति, अरुणस्य उदये, जाते ककुब्भागयोः मध्यं तापिच्छदपद्मरागमहसोः विष्णुविरञ्चयोः अन्तः मनाक् लिङ्गोद्भवभ्रान्तिकृत् तत् पाण्डुरपिञ्जरं किम् अपि श्यामं च तेजः वः अवतात् ॥ २ ॥

**सुधा—यातीति**। अपि च=अन्यच्च। अन्धकारपटले=तमःपुञ्जे। अस्ताचलम्=अस्तगिरिम्। याति=गच्छति। अरुणस्य=रक्तवर्णस्य। उदये जाते=उदयाचले व्रजति सति। ककुब्भागयोः=पूर्वपश्चिमदिशोः। मध्यम्=मध्यभागम्। तापिच्छच्छदपद्मरागमहसोः—तपिच्छच्छदस्य=पद्मरागस्य, य महः=कान्तिः, इव=यथा कान्तिः ययोस्तयोः। विष्णुविरञ्चयोः=हरिवेधसोः। अन्तः=मध्ये। मनाक्=किञ्चित्। लिङ्गोद्भवभ्रान्तिकृत्=लिङ्गोत्पत्तिविषयकभ्रमकारकम्। तत् पाण्डुर-पिञ्जरम्=शुभ्रकान्तिम्। किमपि=किञ्चिदपि। श्यामम्=कृष्णम्। तेजः=ओजः। वः=युष्मान्। अवतात्=रक्षतु। प्रकाशारुणोदयतमःशेषसमुदायरूपत्वात् पाण्डुर-पिञ्जरं चेत्युक्तम्। तदित्यनेन क्षिप्तं यच्छब्दवाच्यमुपमानमाह—अन्तरित्यादि। दिग्भागयोर्विष्णुविरञ्चौ, प्रकाशात्मनश्च तेजसो लिङ्गोद्भव उपमानम्। अथवा सत्वं पाण्डु, तदेव विष्णुः, रजः पिञ्जरम्, तदेव स्रष्टा, तमः श्यामं तदेव च हरः, एतत्त्रयी मयश्च रविरित्यागमिकः समयः। तदुक्तम्—त्वं शुभ्रं सहरिर्लोहितपीतं रजः स

जगत्कर्ता। कृष्णं तु तमः स भवो भानुश्चैतत्त्रयीमूर्तिः। अभिधानकारोऽप्याह—'द्वादशात्मा त्रयी तनुः'। एतेन पाण्डुतेज इत्युक्ते सत्वस्य, पिञ्जरमित्युक्ते रजसः, श्याममित्युक्ते तमसः प्रतीतिरिति। ततश्च तमोऽन्विताया अप्राच्या अरुणान्वितायाश्च प्राच्या मध्ये मनागीषल्लक्ष्यं किमप्यद्भुतवैभवं तदुत्कृष्टं पाण्डुरपिञ्जरं श्यामं च तेजोऽर्थात् सत्वरजस्तमस्त्रयीमयं त्रयीतनुलक्षणं वो युष्मानवतु। अमुमेवार्थं सत्वरजस्तमसां संज्ञान्तरेण विष्णुविरञ्चिलिङ्गोद्भवलक्षणेन द्रढयन्नाह—अन्तरित्यादि। पुरा स्वमाहात्म्यार्थं विवदमानयोर्द्रुहिणनारायणयोः शिवेन स्वस्य लिङ्गोद्भवस्योर्ध्वाधोमानविज्ञानं महत्त्वहेतु पण उक्तः' इत्यागमः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

**हिन्दी**—अन्धकार-समूह के अस्ताचल चले जाने तथा अरुणोदय हो जाने पर पूर्व और पश्चिम दिशाओं के मध्य तापिच्छ एवम् पद्मरागमणियों की कान्ति के समान विष्णु तथा विरञ्चि के बीच कुछ-कुछ लिङ्गोत्पत्ति विषयकभ्रम उत्पन्न करने वाला वह पाण्डुर व कपासी ( पिञ्जर ) और कुछ श्याम रंग वाला तेज तुम सबकी रक्षा करे ॥ २ ॥

**टिप्पणी**—सत्व रजः तथा तमोगुण वाले एवं शुभ्र, अरुण तथा श्याम वर्ण वाले सूर्य भगवान् को 'त्रयीतनु' कहा गया है वह त्रिदेव के भी प्रतीक है। सूर्योदय काल में सूर्य का बालतेज शुभ्र अरुण श्याम तीनों के मिश्रण रूप होने के कारण सत्व ( शुभ्र ) रूप में विष्णु, रजः ( अरुण ) रूप में ब्रह्मा तथा तमः ( श्याम ) रूप में शिव का ही स्वरूप है। ऐसे त्रयी तनु भगवान् सूर्य से रक्षा की प्रार्थना की गई है।

**अनन्तरमुत्तिष्ठतोत्तिष्ठतानयत गजवाजिवेगसरीः, संयोजयत शकटानि, वेष्टयत पटकुटीः, मुकुलयत मण्डपिकाः संवृणुत काण्डपटान्, उन्मूलयत कीलकान्, उद्वहत वेगाद्वहनीयभाण्डम्, भारयत करभकलभान्, उत्क्षिपत क्षीणोक्षकान्, उत्तरत सरितम्, अपसरत पुरतः, कुरुत सञ्चारसहं मार्गम्, इत्यनेकविधप्रयाणाकुललोककोलाहले समुच्छलति, नदत्सु प्रस्थानवादित्रेषु, समुत्थाय नरपतिरावश्यकशौचावसाने नर्मदाम्भोभिषेकपूततनुरनुबन्ध्य सान्ध्यविधिम्, अधिकृत्य भगवन्तमुदयगिरिशिरःशिखरभाजं भास्करम्, इमं श्लोकमपठत्।**

**सुधा—अनन्तरमिति।** अनन्तरम्=तत्पश्चात्। उत्तिष्ठित=उत्थानं कुरुत। गजवाजिवेगसरीः=हस्त्यश्वोष्ट्रान्। आनयत=प्रापयत। शकटानि=वाहनानि। संयोजयत=सञ्जुष्टानि कुरुत। पटकुटीः=वस्त्रकुटीराणि। वेष्टयत=आकुञ्चितानि कुरुत। मण्डपिकाः=पटमण्डपानि। मुकुलयत=आकुञ्चयत। काण्डपटान्=प्रान्तरपटान्। संवृणुत=सङ्कोचयत। कीलकान् उन्मूलयत=उत्पाटयत। वहनीयभाण्डम्=प्रापणीय-पात्रम्। वेगात्=द्रुतम्। उद्वहत=प्रापयत। करभकलभान्=गजशिशून्। भारयत=आरोहयत। क्षणोदकान्=भग्न-पात्राणि। उत्क्षिपत=प्रक्षिप्तानि

कुरुत । सरितम्=नदीम् । उत्तरत=पारं गच्छत । पुरतः=अग्रतः । अपसरत=अपसरणं कुरुत । मार्गम्=पन्थानम् । सञ्चारसहम्=गमनयोग्यम् । कुरुत=विधत्त । इति=एवम् । अनेकविधप्रयाणाकुललोककोलाहले=बहुविधप्रस्थानानुकूलजनरवे । समुच्छलति=समुत्थिते । प्रस्थानवादित्रेषु=प्रयाणवाद्येषु । नदत्सु=क्वणत्सु । नरपतिः=भूपतिः । समुत्थाय=उत्थानं विधाय । आवश्यकशौचावसाने=अनिवार्यशौचादिनिवृत्त्यन्तरम् । नर्मदाम्भोऽभिषेकपूततनुः—नर्मदायाः अम्भः=नर्मदाजलम्, तस्याभिषेकेण=तत्स्नानेन, पूतम्=पवित्रम्, तनुः=कायो यस्य सः । सान्ध्यविधिम्=सन्ध्योपासनादिकृत्यम् । अनुबन्ध्य=सम्पाद्य । भगवन्तम्=प्रभुम् । उदयगिरिशिरःशिखरभाजम्=उदयाचलशिखरगतम् । भास्करम्=सवितारम् । अधिकृत्य=उद्दिश्य । इमं श्लोकम्=वृत्तमिदम् । अपठत्=पपाठ ।

**हिन्दी**—अनन्तर 'उठो, उठो, हाथी घोड़े तथा ऊँटनियाँ ले आओ । गाड़ियाँ जोड़ो । पटकुटीरें ( राउटियाँ ) लपेटो । शामियाने समेटो । पर्दे एकत्र करो। कीलों को उखाड़ लो । ले जाने योग्य वर्तन शीघ्रता से ले जाओ । हाथियों के बच्चे को लाद लो, टूटे बर्तनों को फेंक दो, नदी पार करो । सामने से हट जाओ, मार्ग चलने योग्य बना दो' । इस प्रकार अनेक भाँति प्रस्थान करने के कारण जन-कोलाहल उठने तथा प्रयाणवाद्य बजने पर राजा ने उठ कर आवश्यक शौचादि कर्म से निवृत्त होनेपर नर्मदा के जल स्नान से शरीर पवित्र कर सन्ध्या वन्दन समाप्त कर उदयाचल के शिखर पर स्थित भगवान् भास्कर को प्रणाम कर यह श्लोक पढ़ा ।

**'जयत्यम्भोजिनीबन्धुर्बन्धूकारुणरश्मिकः ।**
**वैद्रुमो वासरारम्भकुम्भः पल्लववानिव' ॥ ३ ॥**

**अन्वयः**—अम्भोजिनीबन्धुः वन्धूकारुणरश्मिकः वैद्रुमः वासरारम्भकुम्भः पल्लववान् इव जयति ॥ ३ ॥

**सुधा—जयतीति** । अम्भोजिनीबन्धुः—अम्भोजिनीनाम्=कमलिनीनाम्, बन्धुः=भ्राता । वन्धूकारुणरश्मिकः—वन्धूकमिवारुणरश्मिर्यस्य सः=बन्धूकरक्तकान्तिः । वैद्रुम=विद्रुमेणायं वैद्रुमः=विद्रुममणिनिर्मितः । वासरारम्भकुम्भः—वासरस्य=दिवसस्य, आरम्भे=आदौ प्रभाते, कुम्भः=घटः । पल्लववान् इव=पल्लवयुक्तो यथा । जयति=शोभते । अत्रोपमालङ्कारः । अनुष्टुब्वृत्तम् ॥ ३ ॥

**हिन्दी**—कमलिनीबन्धु, वन्धूक पुष्प के समान अरुणरश्मियों वाले सूर्य भगवान् दिन के आरम्भ ( प्रभात ) में विद्रुममणिनिर्मित पल्लवों से युक्त घड़े के समान शोभित हो रहे हैं ॥ ३ ॥

**अभ्यर्च्य च पञ्चोपचारैः सुरासुरगुरुं गौरीपतिं तत्प्रियस्य भगवतो नारायणस्यापि वाञ्छितार्थसिद्धये स्तुतिमकरोत् ।**

**सुधा—अभ्यर्च्येति** । च=तथा । पञ्चोपचारैः=पञ्चोपचारविधिना । सुरासुरगुरुम्=देवासुरगुरुम् । गौरीपतिम्=उमानाथम् । अभ्यर्च्य=सम्पूज्य । तत्प्रि-

यस्य=गौरीपतिप्रियस्य। नारायणस्यापि=भगवतो विष्णोरपि। वाञ्छितार्थसिद्धये=अभीष्टप्राप्त्यै। स्तुतिम्=स्तवनम्। अकरोत्=चकार।

**हिन्दी**—( राजा ने ) पञ्चोपचार विधि से देवताओं तथा दानवों के गुरु गौरीपति शिव की पूजा कर उनके प्रिय भगवान् नारायण की भी स्तुति की।

**जयत्युदधिनिर्गतस्मरविलोलक्ष्मीलस-**
**द्विलासरसमन्थरस्फुटकटाक्षलक्षीकृतः।**
**अमन्दरयमन्दरभ्रमणघृष्टहेमाङ्गदः**
**सुरारिवधनाटकप्रथमसूत्रधारो हरिः॥ ४॥**

**अन्वयः**—उदधिनिर्गतस्मरविलोललक्ष्मीलसद्विलासरसमन्थरस्फुटकटाक्षलक्षीकृतः अमन्दरवमन्दरभ्रमणघृष्टहेमाङ्गदः सुरारिवधनाटकप्रथमसूत्रधारः हरिः जयति ॥४॥

**सुधा—जयत्युदधीति।** उदधिनिर्गतस्मरविलोललक्ष्मीलसद्विलासरसमन्थरस्फुटकटाक्षलक्षीकृतः—उदधेः=समुद्रात्, निर्गता=निःसृता, याः स्मरविलोला=कामचञ्चला, लक्ष्मीः=श्रीः, तस्याः लसतः,=रमणीयस्य, विलासरसस्य=आनन्दरसस्य मन्थरैः=मन्दैः, स्फुटैः=विस्पष्टैः, कटाक्षैः, लक्षीकृतः=अवलोकितः। अमन्दरयमन्दरभ्रमणघृष्टहेमाङ्गदः—अमन्देन रयेण=द्रुतवेगेन, मन्दरस्य=मन्दरनाम्नः पर्वतस्य, भ्रमणेन=चङ्क्रमणेन, घृष्टौ=घर्षणयुक्तौ, हेमाङ्गदौ=स्वर्णाङ्गदाभूषणौ यस्य सः। सुरारिवधनाटकप्रथमसूत्रधारः—सुरारिवधस्य=दानवसंहारस्य, यत् नाटकम्, तस्य प्रथमः=आद्यः, सूत्रधारः=आरम्भकर्त्ता। हरिः=विष्णुः। जयति=सर्वोत्कृष्टो भवतीति॥ ४॥

**हिन्दी**—समुद्र से निकली कामचञ्चला लक्ष्मी के विलास रस से मन्द तथा विकसित कटाक्षों के निशाना बने हुए, तेजी से मन्दराचल को घुमाने से घिसे हुए सुनहले अङ्गद आभूषणों वाले, दानववध रूपी नाटक के प्रथम सूत्रधार भगवान् विष्णु की जय हो॥ ४॥

**जयत्यमलकौस्तुभद्युतिविराजितोरःस्थलः**
**सहेलहतदानवो नवतमालनीलद्युतिः।**
**विनम्रसुरमस्तकच्युतविकासिपुष्पावली-**
**विकीर्णमधुसीकरस्नपितपादपीठो हरिः॥ ५॥**

**अन्वयः**—अमलकौस्तुभद्युतिविराजितोरःस्थलः सहेलहतदानवः नवतमालनीलद्युतिः विनम्रसुरमस्तकच्युतविकासिपुष्पावलीविकीर्णमधुसीकरस्नपितपादपीठः हरिः जयति॥ ५॥

**सुधा—जयतीति।** अमलकौस्तुभद्युतिविराजितोरःस्थलः—अमलेन=उज्ज्वलेन कौस्तुभद्युतिना=कौतुभमणिकान्तिना, विराजितम्=सुशोभितम्, उरःस्थलम्=वक्षोभागम्, यस्य सः। सहेलहतदानवः—हेलया सहितं सहेलम्=सक्रीडम्, हताः=विनाशिताः, दानवाः=राक्षसाः येन सः। नवतमालनीलद्युतिः—नवस्य=नूतनस्य, तमालस्य=

तमालवृक्षस्य, नीलद्युतिरिव=नीलकान्तिरिव, द्युतिः=कान्तिर्यस्य सः। विनम्रसुरमस्तकच्युतविकासिपुष्पावलीविकीर्णमधुसीकरस्नपितपादपीठः—विनम्रेभ्यः=अवनतेभ्यः, सुरमस्तकेभ्यः=देवशिरोभ्यश्च्युता=पतिता, या विकासि पुष्पावली=विकसितकुसुमपंक्तिः, तया विकीर्णानि मधुसीकराणि=मधुकणानि, तैः स्नपितः=सिक्तः, पादपीठः=चरणपीठो यस्य सः। हरिः=भगवान् विष्णुः। जयति=सर्वोत्कृष्टो भवति ॥ ५ ॥

**हिन्दी**—उज्ज्वल कौस्तुभमणि की कान्ति से विराजित वक्षःस्थल वाले, खेल-खेल में दानवों का संहार करने वाले, नवतमालपत्र-सी श्यामल कान्ति वाले, झुके हुए देवताओं के माथे से गिरी हुई विकसित पुष्प पंक्ति से विखरे मधु कणों से सरावोर पादपीठ ( खड़ाऊँ ) वाले भगवान् विष्णु की जय हो ॥ ५ ॥

**जयत्युदरनिःसरद्वरसरोजपीठीपठ-**
**च्चतुर्मुखमुखावलीविहितरम्यसामस्तुतिः।**
**अलब्धमहिमावधिर्मधुवधूविलासान्तकृ-**
**ज्जगत्त्रितयसम्भवो भवभयापहारी हरिः ॥ ६॥**

**अन्वयः**—उदरनिःसरद्वरसरोजपीठीपठच्चतुर्मुखमुखावलीविहितरम्यसाम्यस्तुतिः अलब्धमहिमावधिः मधुवधूविलासान्तकृत् जगत्त्रितयसम्भवः भवभयापहारी हरिः जयति ॥ ६ ॥

**सुधा—जयत्युदरेति।** उदरनिःसरद्वरसरोजपीठीपठच्चतुर्मुखमुखावलीविहितरम्यसाम्यस्तुतिः—उदरात्=जठरभागात्, निःसरत्=निर्गच्छद्, वरम्=उत्तमम्, सरोजम्=अम्भोजम्, पीठं यस्य तथा, पठता चतुर्मुखेन=ब्रह्मणा, मुखावल्या=वदनपंक्त्या, विहिता=कृता, रम्या=रमणीया, साम्या=सामवेदसम्बन्धिनी, स्तुतिः=प्रार्थना यस्य सः। अलब्धमहिमावधिः—अलब्धा=अप्राप्ता, महिमायाः=महत्त्वस्यावधिः=सीमा यस्य सः। मधुवधूविलासान्तकृत्—मधोः=मधुनामदैत्यस्य वध्वाः=पत्न्याः, विलासस्य=आनन्दस्य, अन्तं करोतीति=नाशकः। जगत्त्रितयसम्भवः—जगत्त्रितयस्य=त्रिभुवनस्य, सम्भवः=जन्म यस्मात्तथा। भवभयापहारी—भवस्य=जगतः, भयम्=भीतिम्, अपहरतीति, सः=जगद्भयविनाशकः। हरिः=विष्णुः जयति=सर्वोत्कृष्टो भवति ॥ ६ ॥

**हिन्दी**—जिनके उदर से निकले हुए कमल को आसन बनाये हुए चार मुखों से वेद पाठ करते हुए ब्रह्मा की मुखावली द्वारा रम्य सामवेद मन्त्रों से स्तुति की जा रही है, जिनकी महिमा की सीमा नहीं मिल सकी है, ऐसे मधुदैत्य की पत्नी के सुखों का अन्त करने वाले भगवान् विष्णु की जय हो ॥ ६ ॥

**जयत्यसुरसुन्दरीनयनवारिसंवर्धित-**
**प्रतापतरुपल्लवसत्तरुणकेकिकण्ठच्छविः।**
**वलत्कनककेतकीकुसुमपत्रपीताम्बरः**
**सुराधिपनमस्कृतः सकललोकनाथो हरिः ॥ ७ ॥**

**अन्वयः**—असुरसुन्दरीनयनवारिसम्बर्धितप्रतापतरुः उल्लसत्तरुणकेकिकण्ठच्छविः दलत्कनककेतकीकुसुमपत्रपीताम्बरः सुराधिपनमस्कृतः सकललोकनाथः हरिः जयति ॥ ७ ॥

**सुधा—जयत्यसुरेति ।** असुरसुन्दरीनयनवारिसम्बर्धितप्रतापतरुः—असुराणाम्=दानवानाम्, सुन्दर्यः=कामिन्यः, तासां नयनवारिभिः=नेत्राश्रुभिः, सम्वर्धितः प्रतापरूपः=ऐश्वर्यरूपः, तरुः=पादपो यस्य सः । उल्लसत्तरुणकेकिकण्ठच्छविः—उल्लसती=शोभमाना, तरुणस्य=यूनः. केकिनः=मयूरस्य, कण्ठच्छविरिव छविर्यस्य सः । दलत्कनककेतकीकुसुमपत्रपीताम्बरः—दलतः=विकसितस्य, कनककेतकीकुसुमस्य=स्वर्णकेतकीपुष्पस्य, पत्रम्=दलम् इव, पितानि=पीतवर्णानि, अम्बराणि=वासांसि यस्य सः । सुराधिपनमस्कृतः—सुराणाम्=देवानाम्, अधिपस्तेन =शक्रेण, नमस्कृतः=कृतप्रणामः । सकललोकनाथः=निखिललोकस्वामी । हरिः=विष्णुः । जयति=सर्वोत्कृष्टो भवति ॥ ७ ॥

**हिन्दी**—असुररमणियों के नयनाश्रु से बढ़े हुये प्रतापरूपी वृक्षवाले, तरुण मयूर की कण्ठच्छवि के समान शोभा वाले, विकसित स्वर्ण केतकी पुष्पपत्र के समान पीले वस्त्रों वाले, सुरेन्द्र द्वारा प्रणाम किये गये, सकललोकनायक विष्णु भगवान् की जय हो ॥ ७ ॥

**जयत्यखिललोकजिन्नरककालकेतूद्गमो**
**मदान्धदशकन्धरद्विरददुष्टपञ्चाननः ।**
**हिरण्यकशिपुप्रियामुखसरोजचन्द्रोदयः**
**सुरेन्द्ररिपुसिंहिकासुतशिरःकुठारो हरिः ॥ ८ ॥**

**अन्वयः**—अखिललोकजिन्नरककालकेतूद्गमः मदान्धदशकन्धरद्विरददुष्टपञ्चाननः हिरण्यकशिपुप्रियामुखसरोजचन्द्रोदयः सुरेन्द्ररिपुसिंहिकासुतशिरःकुठारः हरिः जयति ॥ ८ ॥

**सुधा—जयत्यखिलेति ।** अखिललोकजित्=निखिलविश्वजयी । नरककालकेतूद्गमः—नरकस्य=नरकासुरस्य, कालाय=विनाशाय, केतोः=पुच्छलतारकस्योद्गमः=उदयप्रतिमूर्तिः । मदान्धदशकन्धरद्विरददुष्टपञ्चाननः—मदेनान्धः मदान्धः, तस्य=मदयुक्तस्य, दशकन्धरस्य, द्विरदस्य=रावणरूपगजस्य, दुष्टः पञ्चाननः=दुष्टसिंहसमः । हिरण्यकशिपुप्रियामुखसरोजचन्द्रोदयः—हिरण्यकशिपोः=हिरण्यकशिपुदैत्यस्य, प्रियाभ्यः=रमणीभ्यः, मुखसरोजेभ्यः=मुखकमलेभ्यः, चन्द्रस्य=विधोः, उदयः=उदयसदृशः । सुरेन्द्ररिपुसिंहिकासुतशिरःकुठारः—सुरेन्द्रस्य=शक्रस्य, रिपुः=शत्रुः, सिंहिकासुतः=राहुः, तस्य शिरसे कुठारः=परशुसमः । हरिः=विष्णुः । जयति=सर्वोत्कृष्टो भवति ॥ ८ ॥

**हिन्दी**—समस्त संसार को जीतने वाले, नरकासुर के विनाश के लिए केतु ग्रह के उदय के समान, मदान्ध रावणरूपी हाथी के लिए भयङ्कर सिंहनी के समान

हिरण्यकशिपु की पत्नी के मुखकमल के लिए चन्द्रोदय जैसे इन्द्रशत्रु राहु के शिर को काटनेवाले फरसे के समान भगवान् विष्णु की जय हो ॥ ८ ॥

**जयत्यमरसारथिर्मदनतप्तलक्ष्मीलसत्-**
**पयोधरयुगस्थलीसरसचन्दनस्थासकः ।**
**अचिन्त्यगुणविस्तरः सकलकेशिकंसाङ्गना-**
**कपोलफलकोल्लसत्तिलकभङ्गहारी हरिः ॥ ९ ॥**

**अन्वयः**—अमरसारथिः मदनतप्तलक्ष्मीलसत्पयोधरयुगस्थलीसरसचन्दनस्थासकः अचिन्त्यगुणविस्तरः सकलकेशिकंसाङ्गनाकपोलफलकोल्लसत्तिलकभङ्गहारी हरिः जयति ॥ ९ ॥

**सुधा**—**जयतीति** । अमरसारथिः—अमराणां सारथिः=देवाग्रणी । मदनतप्तलक्ष्मीलसत्पयोधरयुगस्थलीसरसचन्दनस्थासकः—मदनेन=कामेन, तप्ता=आकुला, या लक्ष्मीः, तस्याः लसती या पयोधरयुगस्य=स्तनयुगलस्य, स्थली=भूमिः, तस्यां सरसेन=आर्द्रेण, चन्दनेन=मलयजेन, स्थासकम्=स्थलम्, यस्य सः । अचिन्त्यगुणविस्तरः—गुणानां विस्तरः=गुणप्रसारः, न चिन्त्यः अचिन्त्य=अवर्णनीयः गुणविस्तरो यस्य सः । सकलकेशिकंसाङ्गनाकपोलफलकोल्लसत्तिलकभङ्गहारी—केशिकंसयोः=तन्नामराक्षसोः, अङ्गनानाम्=पत्नीनाम्, कपोलफलकेषु=गण्डस्थलेषु, लसन्ति=शोभायुक्तानि, यानि तिलकभङ्गानि=तिलकरचनाः, तानि हरतीति योऽसौ । हरिः=विष्णुः । जयति=विजयते ॥ ९ ॥

**हिन्दी**—देवताओं के अग्रणी, मदनतप्त लक्ष्मी के पयोधरयुगलरूपी स्थली पर सरस चन्दन के स्थासक की शोभा से युक्त, अवर्णनीय गुण विस्तरों वाले, समस्त केशी तथा कंस की नारियों के कपोल स्थलों पर सुशोभित तिलक रचनाओं को मिटाने वाले भगवान् विष्णु की जय हो ॥ ९ ॥

**जयत्यसमसाहसः सकललोकशोकान्तकृत्**
**सहस्रकरभासुरस्फुरितचारुचक्रायुधः ।**
**विहङ्गपतिवाहनः कलुषकन्दनिर्मूलनः**
**समस्तभुवनावलीभवनशिल्पधारी हरिः ॥ १० ॥**

**अन्वयः**—असमसाहसः, सकललोकशोकान्तकृत्सहस्रकरभासुरस्फुरितचारुचक्रायुधः, विहङ्गपतिवाहनः, कलुषकन्दनिर्मूलनः, समस्तभुवनावली भवनशिल्पधारी, हरिः जयति ॥ १० ॥

**सुधा**—**जयतीति** । असमसाहसः—असमम् साहसम् यस्य सः=विशिष्टसाहसिकः । सकललोकशोकान्तकृतसहस्रकरभासुरस्फुरितचारुचक्रायुधः—सकललोकानाम्=निखिलभुवनानाम्, शोकस्य=दुःखस्य, अन्तकृत्=अन्तकारी, नाशको वा, सहस्रकरस्य=सहस्रदीधितेः सूर्यस्य, यो भासुरः=प्रकाशः, तत्सदृशम्, स्फुरितम्=दीप्तिमत्, चारु=

रुचिरम्, चक्रायुधम्=चक्रास्त्रम् यस्य सः। विहङ्गपतिवाहनः—विहङ्गानाम् पतिः=पक्षिराजः गरुडो वाहनं यस्य सः। कलुषकन्दनिर्मूलनः—कलुषकन्दस्य= अघमूलस्य, निर्मूलनः=उच्छेदकः। समस्तभुवनावलीभवनशिल्पधारी—समस्त-भुवनावली रूपी भवनस्य=त्रिभुवनसदनस्य। शिल्पधारी=शिल्पी, हरिः=विष्णुः। जयति=सर्वोत्कृष्टो भवति ॥ १० ॥

हिन्दी—अनुपम साहसी, समस्त संसार के शोक का नाश करने वाले, भगवान् सूर्य के प्रकाश के समान चमचमाते हुए सुन्दर चक्रायुध वाले पक्षिराज गरुड़ को वाहन बनाये हुए, कलुष ( पाप ) की जड़ का उच्छेदन करने वाले, अखिल त्रिभुवनावली रूपी भवन के शिल्पी ( निर्माण करने वाले कारीगर ) भगवान् विष्णु सर्वोत्कृष्ट हैं ॥ १० ॥

**जयत्यमलभावनावनतलोककल्द्रुमः**
**पुरन्दरपुरःसरत्रिदशवृन्दचूडामणिः।**
**अरातिकुलकन्दलीवनविनाशदावानलः**
**समस्तमुनिमानसप्रवरराजहंसो हरिः ॥ ११ ॥**

**अन्वयः**—अमलभावनावनतलोककल्पद्रुमः, पुरन्दरपुरःसरत्रिदशवृन्दचूडामणिः, अरातिकुलकन्दलवनविलासदावानलः, समस्तमुनिमानसप्रवरराजहंसः हरिः जयति ॥ ११ ॥

**सुधा—जयतीति।** अमलभावनावनतलोककल्पद्रुमः—अमला=उज्ज्वला या भावना तया अवनतः=नम्रीभूतः, लोककल्पद्रुमः=जनरूपकल्पवृक्षो येन सः। पुरन्दर-पुरःसरत्रिदशवृन्दचूडामणिः—पुरन्दरपुरःसरस्य=इन्द्रप्रमुखस्य त्रिदशवृन्दस्य=सुर-समूहस्य चूडामणिः=शिरोमणिः इव योऽसौ। अरातिकुलकन्दलीवनविनाशदावानलः—अरातिकुलकन्दलीनाम्=शत्रुकुलमूलानाम्, वनम्=काननम् समूहं वा, तस्य विनाशाय=उन्मूलनाय, दावानलः=दाववह्निरिव योऽसौ। समस्तमुनिमानसप्रवर-राजहंसः—अखिलमुनिमानसस्य प्रवरः=श्रेष्ठः, राजहंसः=राजहंससदृशः। हरिः= विष्णुः। जयति=सर्वोत्कृष्टो भवति ॥ ११ ॥

**हिन्दी**—निर्मल भावनाओं से अवनत जनों के लिए कल्पवृक्षसदृश, इन्द्रादि देववृन्द के चूड़मणि, शत्रुवृन्द रूप कन्दलीसमूह को नष्ट करने वाले दावानलसदृश, समस्तमुनिजनों के मानसरूपी मानसरोवर के उत्तम राजहंससदृश भगवान् विष्णु सर्वोत्कृष्ट हैं ॥ ११ ॥

**एवमभिवन्द्य देवदेवं, समारुह्य विजयिवारणेन्द्रस्कन्धम्, अग्रतः प्रधावितानेककरितुरगपरिजनः, पुरः पुरोधसा निर्वर्तिते महानदीयागे, युगसहस्र-परिवर्तवृत्तान्तसाक्षिणीम्, अनवरत तपस्यद्ब्रह्मर्षिप्रतिष्ठितशिवलिङ्गरुद्ध-रोधसम्, अनेकसुरसुन्दरीसेविततीरसङ्केतलतामण्डपाम् अनवरतमज्ज-**

द्वनगजमदामोदसुरभिततरङ्गाम्, अपरगङ्गाम्, अपरसागरराजमहिषीम्, अपरमार्कण्डेयतपःसिद्धिसखीम्, समुत्तीर्य भगवतीं मेकलन्याम्, उत्फुल्लपल्लविताङ्कोल्लसल्लकीसरलसालसर्जार्जुननिम्बकदम्बजम्बूस्तम्बोदुम्बरखदिरकरञ्जाञ्जनाशोकसौभाञ्जनकप्रायैस्तरुभिराकीर्णम्, अभिमतं मतङ्गजानाम्, अनुभूतसारं सारङ्गैः, शिशिरतरं तरङ्गानिलैः, स्वर्गवनसमं समञ्जरीकैर्लताजालकैरुल्लङ्घ्य दक्षिणं नर्मदातीरपुण्यारण्यम्, अग्रतो गगनवीथिमिव सिंहराशिराजितामुत्पतङ्गामुत्थितवृश्चिकामाविर्भूतसार्द्ररोहिणीमूलां च, छन्दोजातिमिव शार्दूलविक्रीडितमनोहरां हारिहरिणीमन्दाक्रान्तामनवरतवसन्ततिलकोद्भासितामतिविचित्रचम्पकमालां च, सीतामिव बहुकोटरावणवृतामुत्पन्नकुशलवां च, लङ्कामिव सञ्चरद्द्विगुणपञ्चाननविभीषणां चारुपुष्पकामकाण्डाडम्बरितमेघनादां, गीतविद्यामिव ततावनद्धघनसुषिरवंशस्वनमनोहरामनेकतालभेदां निषादऋषभमध्यमग्रामयुक्तां च, चित्रविद्यामिवानेककण्टकपत्रलतास्थानकविषमामृज्वागततापसां च, कलियुगशिवशासनस्थितिमिव महाव्रतिकान्तःपातिभिः कालमुखैर्वानरैः सङ्कुलामनेकधाभिन्नस्रोतसं च, कापालिकखट्वाङ्गयष्टिमिव समुद्रोपकण्ठलग्नाम्, मायामिव शम्बराधिष्ठिताम् मरुभूमिमिव करीरैः केसरिप्रसवैरसञ्चाराम्, अतिचारुचन्दनैः कृतगोरोचनाविशेषकैरक्षतदुर्वाबाहिभिरारब्धमङ्गलाचारैरिव तृणस्थलैरलङ्कृताम्, विवधव्याधां विन्ध्याटवीमवगाहमानो मेषवृषमिथुनयुजः सधनुषः सकुम्भकन्यानेकत्र राशिभूतान् गिरिग्रामपारलोकानालोकयन्, 'इयं गगनवीथीव चित्रशिखण्डिमण्डिता सरित्तीरभूमिः, इयं सरिदिव बहुतरङ्गोपशोभिता गोष्ठवसतिः, इयं च नक्षत्रमध्यगतापि न विशाखा तरुपङ्क्तिः, इयं पुष्पवत्यपि न दूषितस्पर्शा वीरुत्, इयं सन्निहितमधुदानवापि हरिप्रिया वंशजालिः, इयं कृतमातङ्गसङ्गापि न परिहृता द्विजैः सल्लकीसन्ततिः, इमे च केचित्सशिखण्डिनो महाद्रुपदाः, केऽपि विच्छिन्नकीचकवंशा वृकोदराः, केचित्सपुण्डरीकाक्षाः पाण्डुसन्तानकाः केऽप्युद्धृतभुवो महावराहाः, केऽप्युत्कृष्टसुरभिश्रीद्रुमावलिहरिकराकृष्टपन्नगनेत्राः स्फुरन्मणिभित्तयोऽमन्दरागाः केऽपि सस्थाणवो दुर्गाश्रयाः श्रूयमाणगजवदनचीत्काराः सगुहाः कैलासकूटायमानाः सेव्याः खल्वमी विन्ध्यास्कन्धसन्धिसानवः इति मन्त्रिसूनुना 'श्रुतशीलेन सह विहितविदग्धालापः, कयापि वेलया कमप्यध्वानमतिक्रम्य क्वाप्यपरिमितपतन्निर्झरजलतुषारस्पर्शमञ्जरितपादपपुष्पपरिमलमिलन्मधुकरझङ्कारहारिणि रममाणशबरमिथुनसम्मर्दमृदितामन्दमृदुशाद्वले जलस्थलीप्रदेशे श्रान्तसैनिकानुकम्पया प्रयाणविच्छेदमकरोत् ।

**सुधा—एवमिति ।** एवम्=इत्थम् । देवदेवम्—देवानां देवस्तम्=भगवन्तं विष्णुम् । अभिवन्द्य=प्रणम्य । विजयिवारणेन्द्रस्कन्धम्—विजयिनः=विजयशीलस्य, वारणेन्द्रस्य=गजराजस्य, स्कन्धम्=स्कन्धदेशम् । समारुह्य=आरोहणं कृत्वा । अग्रतः=पुरतः । प्रधावितानेककरितुरगपरिजनः—प्रधाविताः=द्रुतं प्रस्थिताः, अनेके करिणः=बह्वो गजाः, तुरगाः=वाजिनः, परिजनाः=सेवकाश्च यस्य सः । पुरः=समक्षम् । पुरोधसा=पुरोहितेन । महानदीयागे=महानदीनामके यज्ञे । निर्वर्तिते=निवृत्ते सति । युगसहस्रपरिवर्तवृत्तान्तसाक्षिणीम्—युगसहस्रस्य, परिवर्तस्य=परिवर्तन-विषयकस्य, वृत्तान्तस्य=समाचारस्य, साक्षिणीम्=साक्षीभूताम् । अनवरततपस्यद्ब्रह्मर्षिप्रतिष्ठितशिवलिङ्गरुद्धरोधसम्—अनवरतम्=निरन्तरम्, तपस्यद्भिः=तपश्चरद्भिः ब्रह्मर्षिभिः=मुनिभिः, प्रतिष्ठितस्य=प्रसिद्धस्य, शिवलिङ्गस्य=शिवमूर्त्तेः, रुद्धम्=अवरुद्धम्, रोधः=तटम्, यस्यास्ताम् । अनेकसुरसुन्दरीसेविततीरसङ्केतलतामण्डपाम्—अनेकाभिः=बह्वीभिः सुरसुन्दरीभिः=देवाङ्गनाभिः, सेवितम्=अधिष्ठितम्, सङ्केतलतामण्डपम्=सङ्केतवीरुधिमण्डलम् यस्यास्तथाविधाम् । अनवरमज्जद्वनगजमदामोदसुरभिततरङ्गाम्—अनवरतम्=निरन्तरम्, मज्जताम्=निमज्जताम्, वनगजानाम्=वन्यकरिणाम्, यो मदामोदः=मदसुगन्धिः, तेन सुरभिताः=सुगन्धितास्तरङ्गाः=वीचयः यस्यास्ताम् । अपरगङ्गाम्=द्वितीयां भागीरथीम् इव । अपरसागरराजमहिषीम्—अपराम्=अन्याम्, सागरस्य==समुद्रस्य, राजमहिषीम्=राजपत्नीम् इव । अपरमार्कण्डेयतपःसिद्धिसखीम्—अपराम्=द्वितीयाम्, मार्कण्डेयस्य=मार्कण्डेयनाममहर्षेः या तपःसिद्धिः, तस्याः सखीम्=सहगामिनीम् इव । भगवतीम्=देवीम् । मेकलकन्यकाम्—मेकलनाममहर्षेः कन्यकाम्=पुत्रीम् । नर्मदाम्=तन्नामनदीम् । समुत्तीर्य=पारं गत्वा । उत्फुल्लपल्लविताङ्कोल्लसल्लकीसरलसालसर्जनार्जुननिम्बकदम्बजम्बूस्तम्बोदुम्बरखदिरकरञ्जाञ्जनाशोकसौभाञ्जनकप्रायैः—उत्फुल्लैः=प्रफुल्लितैः पल्लवितैः=पल्लवयुक्तैः, च अङ्कोलैः सल्लकीभिः सरलैः सालैः सर्जैः अर्जुनैः निम्बैः कदम्बैः जम्बूभिः स्तम्बैः उदम्बरैः खदिरैः करञ्जैः अञ्जनैः अशोकैः सौभाञ्जनकप्रायैः=सौभाञ्जनकादिभिः । तरुभिः=पादपैः । आकीर्णम्=सम्पन्नम् । मतङ्गजानाम्=मत्तकुञ्जराणाम् । अभिमतम्=आकांक्षितम् । सारङ्गैः=मृगैः । अनुभूतसारम्=प्रियस्थानम् । तरङ्गानिलैः—तरङ्गाणाम्=वीचीनाम्, अनिलैः=वातैः । समञ्जरीकैः=मञ्जरीयुक्तैः । लताजालकैः=वीरुधिवृन्दैः । स्वर्गवनसमम्=नन्दनवनसदृशम् । दक्षिणम्=दक्षिणदिगवस्थितम् । नर्मदातीरपुण्यारण्यम्—नर्मदायाः=तन्नामनद्याः, तीरे=रोधसि, यत् पुण्यम्=पवित्रम्, अरण्यम्=काननम् तत् । उल्लङ्घ्य=उत्तीर्य ।

अग्रतः=सम्मुखम्, सिंहराशिराजिताम्—सिंहानां राशिः=मृगेन्द्रवृन्दम्, तेन राजिताम्=शोभिताम्, ज्योतिषि सिंहो नाम पञ्चमो राशिः । उत्पतङ्गाम्—उत्=उद्गतः पतङ्गः=सूर्यः, शलभाश्च यत्र ताम् । उत्थितवृश्चिकाम्—उत्थितः वृश्चिकः=अली अष्टमराशिश्च यत्र ताम् । आविर्भूतसार्द्ररोहिणीमूलाम्—आविर्भूता=समुत्पन्ना,

सह आर्द्रेण=क्लिन्नेन शृङ्गवेरेण, रोहिणी=ओषधिविशेषः, मूलः=मूलकश्च यत्र ताम्। पक्षे—आर्द्रा रोहिणी मूलानि ताराः यस्यास्तस्याम्। गगनवीथिमिव=नभोनिकुञ्जसमाम्। शार्दूलविक्रीडितमनोहराम्—शार्दूलविक्रीडितेन=सिंहविलसितेन, मनोहरा मनोरमा ताम्। हारिहरिणीमन्दाक्रान्ताम्—हारिभिः=चारुभिः, हरिणीभिः=मृगीभिः, मन्दम् आक्रान्ताम्=व्याप्ताम्, पक्षे—चारु हरिणीच्छन्दोभिर्मन्दाक्रान्तच्छन्दोभिश्च। छन्दो जातिमिव=वृत्तजातिसदृशीम्। अनवरतम्=निरन्तरम्। वसन्ततिलकोद्भासिताम्—वसन्तैः, तिलकैश्च=वृक्षविशेषैश्च, उद्भासिताम्=शोभिताम्। अतिविचित्रचम्पकमालाम्—अतिविचित्राः=महदद्भुता, चम्पकानां, माला=श्रेणी यस्यां सा। पक्षे—शार्दूलविक्रीदित-मन्दाक्रान्ता-वसन्ततिलका-चम्पकमालाच्छन्दोयुक्ताम्। बहुकोटरावणवृताम्—बहुभिः कोटरावणैः=कोटरयुक्तवनैः वृत्ताम्=अच्छन्नाम्। उत्पन्नकुशलवाम्—उत्पन्नः, कुशानाम्=दर्भाणाम्, लवः=लेशः यस्यां तथाविधाम्। सीताम् इव। सीता तु—बहु=प्राज्यकौटिल्येन रावणेन राक्षसेन प्रार्थिता, तथा उत्पन्नौ कुशलवौ=स्वसुतौ यस्यास्ताम् इव। सञ्चरद्द्विगुणपञ्चाननविभीषणाम्—सञ्चरद्भिः, विगुणैः=विरज्जुभिः पञ्चाननैः=सिंहैः विशेषेण=वैशिष्टयेन भीषणाम्=भयङ्करीम्। तथा सञ्चरता=विचरता, द्विगुणेन पञ्चाननेन=दानवेन रावणेन विभीषणेन च युक्ता या तथाविधाम्। लङ्काम् इव=लङ्कासमाम्। चारुपुष्पकाम्—चारु=रुचिरम्, पुष्पम्, कम्=जलञ्च यस्यां सा ताम्। चारुपुष्पकविमानयुक्तां वा। अकाण्डाडम्बरितमेघनादाम्—अकाण्डे=अनवसरे, आडम्बरितः=विस्तृतः, मेघनादः=तण्डुलीयको यस्यां सा ताम्। पक्षे—मेघनादः रावणात्मजः।

ततावनद्धघनसुषिरवंशस्वनमनोरमाम्—तता=विस्तृता, अवनद्धाः=सुश्लिष्टाः, घनसुषिराः=बहुविवराः, वंशाः=वेणवः, तेषां स्वनेन=ध्वनिना, मनोहराम् =रमणीयाम्। तालाः=वृक्ष-विशेषाः। निषादऋषभमध्यमग्रामयुक्ताम्—निषादाः=शबराः ऋषभाश्च, मध्ये भवः मध्यमः। ग्रामः=खेटकम्, यस्यां सा ताम्। पक्षे —ततेन=तन्त्रीगतेन, अवनद्धेन=पौष्करेण च, घनेन=कांस्यकृतेन, सुषिरसंज्ञकवंशस्वनेन=वंशध्वनिना, मनोहराम्=मनोहरिणीम्। अनेकतालभेदाम्—अनेकाः=बहवः तालभेदाः, चञ्चत्पुटादयो यस्यां सा ताम्। तथा निषादेन=स्वरेण, मध्यमसंज्ञकग्रामेण युक्ताम्। गीतविद्याम्=संगीतशिक्षाम् इव। अनेककण्टकपत्रलतास्थानक-विषमाम्—अनेकैः=बहुभिः, कण्टकैः, पत्रैः=दलैः लताभिः=शाखाभिः, स्थानकैः=आलबालैश्च, विषमाम्=उच्चावस्थाम्। ऋज्वागततापसाम् —ऋजवः=सरलाः, आगताः=आयातः, तापसाः=मुनयो यस्यां सा ताम्। पक्षे —बहुकलिकाकण्टकशाखात्रिभङ्गिसंज्ञाभिश्चत्वारः पत्रावयवाः। एतैर्मिलित्वा शिशुसकलस्वस्तिकवर्द्धमानसर्वतोभद्राख्याणि पञ्चपत्राणि निष्पद्यन्ते। तथा स्थानकानि =पार्श्वागतानि, ऋज्वागततापसाम्—ऋजवः=सरलाः, आगताः=आयाताः, तापसाः=मुनयो यस्यां सा ताम्। पक्षे—बहुकलिकाकण्टकशाखात्रिभङ्गिसंज्ञाभिश्चत्वारः पत्रावयवाः। एतैर्मिलित्वा शिशुसकलस्वस्तिकवर्धमानसर्वतो-

भद्राख्याणि पञ्चपत्राणि निष्पद्यन्ते। तथा स्थानकानि पार्श्वागतऋजुऋज्वागत-द्वयर्धाक्ष-अर्द्ध-ऋजुगमनलीढत्वरितत्रिभङ्गिसंज्ञानि। तैः विषमाम्। स्थानक-शब्देनैव ऋज्वागतं गतार्थमपि व्यापकत्वात्पृथगुक्तम्। प्रायो हि चित्रे ऋज्वागतमेव लिख्यते। ऋज्वागततापसाम्—ऋज्वागते तापसानि यस्यां सा ताम्। महाव्रतिकान्तःपातिभिः—महती आव्रतिर्येषां ते महाव्रतिकाः वृक्षाः, तेषामन्तः=मध्ये पतन्ति अभीक्ष्णं तैः। कालमुखैः वानरैः=मर्कटैः। सङ्कुलाम्=आच्छन्नाम्। अनेधाभिन्नस्रोतसम्—अनेकधा=बहुधा, भिन्नस्रोतसम्=स्फुटप्रस्रवणाम्। पक्षे—महाव्रतिकाः=कापालिकाः, तदन्तःपातिभिः=अन्तर्भूतैः। कालमुखैः=शैवदर्शन-विशिष्टैः। नरैः=लोकैः। सङ्कुलाम्=आचिताम्। अनेकधाभिन्नस्रोतसम्=अनेकधाभिन्नप्रवाहाम्। कलियुगशिवशासनस्थितिमिव—कलियुगे, शिवशासनस्थितिमिव=एकमात्रशंकरशासनस्थितिसमम्। कलौ तु बहु आम्नाय इति भावः। श्लेष-चित्रादिषु यवयोरैक्यम्। समुद्रोपकण्ठलग्नाम्—समुद्रस्य=सिन्धोः उपकण्ठे लग्नाम्=संलग्नाम्। कापालिकखट्वांगयष्टिमिव—कापालिकानाम्=महाव्रतिकानाम्, खट्वाङ्गयष्टिमिव—खट्वाङ्गयष्टिः भगवतः शिवस्य अस्त्रविशेषम्, तत्समाम्। शम्बराधिष्ठिताम्—शम्बरेण=शम्बरनामदैत्येनाधिष्ठिताम्। मायाम् इव=माया-समाम्। करीरैः=करीलनामवृक्षैः। कसरिप्रसवैः=केसरिपूर्णपुष्पैः। असञ्चाराम्—न सञ्चारो गतिर्यस्यां सा ताम्। केसरिणाम्=सिंहानाम्। प्रसवैः=पोतैः करिण-मीरयन्ति, तैः। पक्षे—केसरिणः=किञ्जल्कोपेताः प्रसवाः=पुष्पाणि यत्र तथाविधैः। मरुभूमिमिव=मरुस्थलीमिव।

अतिचारुचन्दनैः—अतिचारुभिः=अतिरुचिरैश्चन्दनैः=मलयजैः। कृतगोरोचना-विशेषकैः—कृतः=विहितः, गवां=धेनूनाम्, रोचनाविशेषः=अभिलाषातिशयो यैस्तैः। पक्षे—गोरोचनाः गन्धविशेषवस्तूनि, तैः। अक्षतदूर्वावाहिभिः—अक्षताम्=अलूनाम् दूर्वाम् वहत्यभीक्ष्णम्=तण्डुलदूर्वाधारिभिः। आरब्धमङ्गलाचारैः इव आरब्धाः=प्रारब्धाः, मङ्गलाचाराः=माङ्गलिकव्यवहाराः यैस्ताभिरिव। तृणस्थलैः=तृणयुक्तभूमिभिः। अलङ्कृताम्=विभूषिताम्। विविधव्याधाम्=अनेकविधव्याधि-युक्ताम्। विन्ध्याटवीम्—विन्ध्यस्य=विन्ध्यनामपर्वतस्य। अटवीम्=अरण्यभूमिम्। अवगाहमानः=दिगाहमानः। मेषवृषमिथुनयुजः—मेषाणाम्, वृषाणाम् च मिथुनानि युञ्जन्ति=धारयन्ति इति। सधनुषः—सह धनुषा, तान्=सकार्मुकान्। सकुम्भ-कन्यान्—सकुम्भाः=मङ्गलार्थं मस्तकोपरिधृतघटाः। कन्यकाः=कुमार्यः येषु तान्। एकत्र=एकस्मिन् स्थाने। राशिभूतान्—राशिः=समूहः ज्योतिषोक्ता मेषादि-राशि-विशेषसंज्ञाः। गिरिग्रामपारलोकान्=पर्वतसमूहपारलोकान्। आलोकयन्=पश्यन्।

मन्त्रिसुतेन, श्रुतशीलेन सह। 'इयं च गगनवीथ्यादि' 'इमे च केचित् शिखण्डिनः' इत्यादि च विहितदग्धालापः प्रयाणविच्छेदं चकार। तद्यथा—चित्रशिखण्डिमण्डिताः—चित्राः=विविधवर्णाः, शिखण्डिनः=मयूराः, तैर्मण्डिता=शोभिता। चित्रशिखण्डिनः=सप्तर्षयः, तैः शोभिता। सरित्तीरभूमिः=नदीतटभूमिः। बहुतरङ्गोपशोभिता—

बहुतरङ्गैः=अनेकवीचिभिः, शोभिता=अलङ्कृता। सरिदिव=नदीव। गोष्ठवसतिः—गोष्ठैः=बल्लवैः वसतिः=वासो यस्यां तादृशी। सरित्तु बहुभिस्तरङ्गैरुपशोभिता। गोष्ठम्=गोकुलम्। इयं च=एषा च। नक्षत्रमध्यगतापि—नक्षमाणां मध्ये=अन्तरे गता=प्रस्थिता अपि। विशाखा—विगताशाखा शाखाहीनाः, तरुपङ्क्तयः=पादपतत्यः यत्र तथा न। पक्षे—विशाखादि नक्षत्रगता नैव। पुष्पवती=कुसुमवती, रजःस्वला च। दूषितस्पर्शा—दूषितं=दूषणयुक्तम्, स्पर्शो यस्यास्तादृशी। वीरुत्=लता। रजस्वला त्वस्पृश्यैवेति विरोधः। सन्निहितमधुदानवापि—सन्निहितेभ्यो मधुदा=क्षौमप्रदा, नवा=अविच्छायाऽपि। हरिप्रिया—हरिः=सिंहः, तस्य प्रिया=रुचिकरा। या च हरेः=विष्णोः, प्रिया=वल्लभा, सा कथमासन्नमधुदानवेतिविरोधः बंशजालिः=वेणुसमूहयुक्ता। कृतमातङ्गसङ्गापि—कृतम्=विहितम्, मातङ्गैः=गजैः सङ्गम्=साहचर्यम् यत्र सा=कृतगजवासाऽपि। द्विजैः=पक्षिभिः विप्रैश्च न परिहृता=परित्यक्ता। सल्लकीसन्ततिः—सल्लकीनाम्=तन्नामवनवृक्षाणाम्, सन्ततिः=पंक्तिः यत्र सा। मातङ्गः=चाण्डालो अत्र विरोधः।

इमे=एते। सशिखण्डिनः—शिखण्डिभिः=मयूरैः सहः। अथ च महाद्रुपदाः=महद् द्रुपदम्=वृक्षस्थानम्, येषु तथोक्ताः। महाद्रुपदाः=क्षत्रविशेषाश्च। द्रुपदतनयश्च शिखण्डी। 'चित्रशिखण्डिमण्डिता' इत्येतेन पूर्वमटव्यां मयूर-सद्भाव उक्तः। सम्प्रतिविन्ध्यस्कन्धेष्विति न पौनरुक्त्यम्। विच्छिन्नकीचवंशा—विच्छिन्नाः=पृथग्भूताः कीचकाः सच्छिद्राः वंशविशेषाः निश्छिद्राश्च येषु। वृकोदरा—वृकाः=वन्यश्वानः, उदरे=मध्ये येषु। पक्षे—वृकोदरः=भीमसेनः, स च विशेषेण छिन्न कीचकनामराजन्वयः। पाण्डुसन्तानकाः—पाण्डुः=पाण्डुवर्णः सन्तानकः=वृक्षविशेषः येषु। सपुण्डरीकाक्षाः—पुण्डरीकैः=सिताम्भोजैरक्षैश्च=विभीतकैश्च सह। पाण्डोः सन्तानाः एव सन्तानकाः=पाण्डुपुत्राः ते तु पुण्डरीकाक्षेण=भगवता विष्णुना सह। महावराहाः—महान्तः वराहाः=शूकराः, येषु ते उद्धृतभुवः—उत्कर्षेण हृता=विस्तरेण रुद्धा भूर्यैः। महावराहः=विष्णुः स चोत्क्षिप्तपृथ्वीकः। अमन्दरागा—अमन्दो रागो येभ्यस्ते=वर्द्धितानुरागाः। उत्कृष्टसुरभिश्रीद्रुमावलिहरिकराकृष्टपन्नगनेत्रा—उत्कृष्टाः=मनोज्ञाः सुरभयः=चम्पकाः श्रीद्रुमः=पिप्पलाः तेषामावलिः=पंक्तिः, तत्र हरयः=वानरास्तैः आकृष्टानि पन्नगनेत्राणि येषु। पक्षे—मन्दरनामा अगः=पर्वतः तदोत्कृष्टा=उपधृता सुरभिः=कामधेनुः, श्रीः=लक्ष्मीर्द्रुमाः पारिजातश्च यैः। 'सुरभिश्चम्पके स्वर्णजातिफलवसन्तयोः। सन्धौ पले सौरभेय्याम्' इति विश्वप्रकाशः। वलेः=वलिदैत्यस्य, हरेः=विष्णोश्च करैः आकृष्टम्=भ्रमितम् पन्नगोः=वासुकिलक्षणं नेत्रम्=मन्थानम् आकर्षणरज्जुर्यत्र। स्फुरन्मणिभित्तयः—स्फुरन्तः=दीप्तिमन्तः मणिभित्तयः=मणिजटितप्राचीराः यत्र। कैलासकूटायमानाः=कैलासकूटमिवाचरन्तः। सस्थाणवः—स्थाणुः=स्थिरपदार्थः शिवश्च, तैः तेन वा सह इति। दुर्गाश्रयाः—दुर्गा=विन्ध्यवासिनी, देवी गौरी च, दुर्गम् वा आश्रयो येषां ते वा। श्रूयमाणगजवदनचीत्काराः—श्रूयमाणा=आकर्ण्यमाणाः, गजानाम्=हस्तीनाम्, वदन-

चीत्काराः=मुखचीत्काराः येषु ते। कैलासे च। गजवदनः=गणेशः, गुहाः=गह्वराः कार्तिकेयश्च। अमी=एताः। खलु=नूनम्। विन्ध्यास्कन्धसन्धिसानवः=विन्ध्याचलस्कन्धसन्धिश्रेण्यः। सेव्याः=सेवनीयाः।

इति=एवम्। मन्त्रिसूनुना=अमात्यसुतेन। श्रुतशीलेन=श्रुतशीलाभिधेन। सह=साकम्। विहितविदग्धालापः—विहितः=कृतः, विदग्धः=नियतः, आलापः=वार्तालापो येन सः। कया=कियत्या। अपि वेलया=समयेन। किमपि=किञ्चित्। अध्वानम्=मार्गम्। अतिक्रम्य=पारं गत्वा। क्वापि=कुत्रापि। अपरिमितपतन्निर्झरजलतुषारस्पर्शमञ्जरितपादपपुष्पपरिमलमिलन्मधुकरझङ्कारहारिणि—अपरिमितस्य=पर्याप्तस्य, पततः निर्झरस्य=प्रवहणस्य, जलतुषारस्पर्शेन=हिमसदृशशीतलजलस्पर्शेण मञ्जरितानाम्=पुष्पितानाम्, पादपानाम्=वृक्षाणाम्, यानि पुष्पाणि=कुसुमानि, तेषां परिमलाय=सुगन्धप्राप्त्यै, मिलतः मधुकराणाम्=भ्रमराणां, झङ्कारान्=मधुकररवान् हरतीति तादृशि। रममाणशबरमिथुनसम्मर्दमृदितामन्दमृदुशाद्वले—रममाणानाम्=विहरमाणानाम्, शिविरमियुनानाम्=भिल्लयुगलानाम्, सम्मर्दनेन, मृदितानि=दलितानि, अमन्दमृदुशाद्वलानि=कोमलदुर्वाङ्कुराणि, यत्र तादृशे। जलस्थलीप्रदेशे=जलयुक्तस्थाने। श्रान्तसैनिकानुकम्पया—श्रान्तेषु=क्लान्तेषु सैनिकेषु=वीरेषु, अनुकम्पया=दयया। प्रयाणविच्छेदम्=यात्राभङ्गम्। अकरोत्=चकार।

**हिन्दी**—इस प्रकार देवाधिदेव का अभिवादन कर विजयी गजराज पर आरोहण कर आगे-आगे अनेकों हाथियों तथा घोड़ों पर सवार परिजनों के चलते हुए, समक्ष पुरोहित द्वारा महानदीयाग कर लेने पर हजारों युगों से परिवर्तन के समाचार को बतलाने वाली निरन्तर ब्रह्मर्षियों द्वारा तपस्या कर रहे तथा प्रतिष्ठित शिवलिंग से रुद्ध तट वाली, अनेक सुरसुन्दरियों से सेवित, तटवर्ती संकेतलता मण्डपों से युक्त, जिसमें निरन्तर वन्य गज आनन्दित होकर स्नान कर रहे हैं तथा उनके मद जल की सुगन्ध से लहरें भी सुगन्धित हो उठती हैं, जो कि दूसरी गंगा के सदृश हैं, ऐसी साक्षात् दूसरी समुद्र पत्नी, मार्कण्डेय मुनि की मानों दूसरी तपःसिद्ध सखी भगवती मेकलकन्या नर्मदा नदी को पार कर उत्फुल्ल पल्लवित अङ्कोर, सल्लकी, सरल, साल, सर्ज, अर्जुन, निम्ब, कदम्ब, जामुन, स्तम्ब, गूलड़, खैर, करञ्ज, अञ्जन, अशोक तथा सौभाञ्जनक बहुल वृक्षों से युक्त, मतङ्गजों के प्रिय स्थल, मयूरों द्वारा सर्वाधिक पसन्द किये हुये, तरङ्ग वायु से अतिशीतल नन्दन वन सदृश, मञ्जरीयुक्त लताजाल वाले दक्षिण भागीय पवित्र नर्मदा तीरवर्ती विन्ध्याटवी का भ्रमण किया।

उस अटवी में गगनवीथियाँ, जैसे सिंह राशि से शोभित हो रही हैं, उत्कृष्ट पतङ्ग (सूर्य) से युक्त हैं। वहाँ विच्छू डंक उठाये घूमते हैं, आर्द्र शृङ्गवेर, रोहिणी, तथा मूल नामक पौधों से शोभित हैं। जिस प्रकार छन्दो वर्ग शार्दूलविक्रीडित, हरिणी, मन्दाक्रान्ता, वसन्ततिलका तथा चम्पकमाला से मनोरम होता है। वैसे ही

वह शार्दूलों ( सिंहों ) के विलास से युक्त मनोहर हरिणियों द्वारा मन्दतापूर्ण आक्रान्त हैं। निरन्तर वसन्त तथा तिलक वृक्षों से प्रफुल्लित, अतिविचित्र चम्पक-पंक्तियों से मण्डित हैं, सीता जैसे बहुकोट ( अतिकुटिल ) रावण द्वारा घिर गई थीं तथा कुशलव को उत्पन्न किया था वैसे ही वह बहु कोटर ( अनेक खोखलों ) से आवृत कुश के लव ( अंश ) को उत्पन्न करती हैं। लङ्का जैसे संचरद् ( घूम रहे ) द्विगुण पञ्चानन ( दशमुख ) रावण से युक्त थी वह चारु ( रुचिर ) पुष्पक विमान वाली आकाण्डाडम्बरित ( असमय में आडम्बर युक्त ) मेघनाद के गर्जन से व्याप्त रहती हैं वैसे ही सञ्चरद् ( घूमते हुये ) विगुण ( बन्धनहीन ) पञ्चानन ( सिंहों ) से विभीषण ( भयङ्करी ) बनी हुई है तथा सुन्दर पुष्पों और असमय गरजने वाले मेघों से युक्त है।

जिस प्रकार गीतविद्या तत ( वीणा का शब्द ) अवनद्ध ( पौष्कर ध्वनि ) घन ( झाल की ध्वनि ) सुषिर ( वेणु की आवाज ) अनेक ताल तथा निषाद, मध्यम, ग्राम आदि स्वरों से युक्त होती है वैसे ही विन्ध्याटवी तत ( विस्तृत ) अवनद्ध ( एक दूसरे से सटे ) घनसुषिर ( बहुत से छिद्रों से युक्त ) वंशस्वन ( बांसों की आवाजों ) के कारण मनोहर तथा अनेक तालवृक्षों से युक्त निषादों ( किरातों ) तथा मध्यम ग्राम ( मध्यवर्ती गाँवों ) से शोभित है। चित्र विद्या की भाँति वह अनेक कण्टक ( काँटे ) पत्र ( पत्ते ) लतास्थानक ( थलहों ) के कारण ऊँची और सीधी तापसों के आगमन से युक्त हैं। कलियुग के शिवशासन के समान महाव्रतिक ( बड़े-बड़े वृक्षों ) के मध्य कालमुख ( लंगूर ) बन्दरों से संकीर्ण हैं तथा वहाँ विविध स्रोत ( झरने ) बह रहे हैं। कापालिक की खट्वागयष्टि ( शिवजी का एक अस्त्र ) जिस प्रकार समुद्रोपकण्ठ लग्ना ( मूठ पर हड्डी लगी हुई ) होती है। वैसे ही वह समुद्र के किनारे तक फैली हुई है। शम्बरराक्षसाधिष्ठित शाम्बरी माया के समान वह शम्बर ( हिंसक जीवों ) से अधिष्ठित है। मरुभूमि जैसे करील तथा सरि के प्रसव ( पुष्पों ) के कारण असंचरणीय होती है वैसे विन्ध्याटवी करीर ( करी= हाथियों के ईर=ईरण—चीत्कार वाली ) तथा सिंह शावकों के कारण अगम्य है।

वह अतिसुन्दर चन्दन, गोरोचन, अक्षत दुर्वा घासयुक्त भूमि तथा आरम्भ किये गये मङ्गलाचारों और तृण स्थलियों से सुशोभित है जो कि अनेक प्रकार के व्याधों से परिपूर्ण है। इस प्रकार की विन्ध्याटवी का परिभ्रमण करता हुआ मेष ( भेड़ों ) वृष ( बैलों ) के जोड़ों को लिए हुये सधनुष ( धनुष लिये हुए ) सकुम्भ ( जलकलशों सहित ) एकत्र राशिभूत गिरिग्रामों के निवासियों का अवलोकन करने लगा।

यह गगनवीथी के समान चित्रशिखण्डियों ( विविध वर्ण के मयूरों ) से सुशोभित नदीतट की भूमि, अनेक तरङ्गों से उपशोभित नदी के समान गोष्ठ वसति ( पशु-बहुल गाँव ) नक्षत्र मध्यगता होकर भी विशाखा ( शाखा रहित, विशाखा नक्षत्र ) वृक्ष पंक्तियों वाली नहीं है। वह पुष्पवती ( फूलों से परिपूर्ण ) होकर भी रजस्वला जैसी दूषित स्पर्श वाली लता से युक्त नहीं है। यह सन्निकृट मधुदा ( समीप पुष्परस

देने वाली ) नूतन छत्तों से युक्त बाँसों के झुरमुटों के कारण हरिप्रिया ( सिंहों के लिए प्रिय ) है। मातङ्गों के साहचर्य से युक्त होने पर भी, द्विज ( पक्षियों व ब्राह्मणों ) से रहित सल्लकी वृक्ष पंक्तियों वाली नहीं है।

ये कोई शिखण्डी युक्त ( मोरों से युक्त ) महावृक्षों वाले, कोई कटे कीचक (वांस-विशेष ) तथा भेड़ियों को अपनी गुफाओं में छिपाये रखने वाले पर्वत शिखर वैसे ही हैं जैसे कीचक राजा के वंश का उन्मूलन कर देने वाले वृकोदर ( भीमसेन )। पाण्डु-सन्तानक ( युधिष्ठिर आदि ) जैसे पुण्डरीकाक्ष ( विष्णु ) के साथ थे वैसे ही कुछ शिखर पाण्डु ( पीले रंग के ) सन्तानक नाम के वृक्षों से युक्त हैं। जैसे महा-वराह ( वराहवतारी भगवान् विष्णु ) ने भूमि का उद्धार किया था उसी प्रकार कुछ शिखर महावराहों (भयङ्कर शूकरों) से युक्त हैं। कुछ शिखर उत्कृष्ट सुरभि ( उत्तम सुगन्धिचम्पा—उत्तम कामधेनु) श्रीद्रुम ( पीपल—पारिजात ) आदि पदार्थ समूह को प्राप्त करने के लिए हरि-कर ( बन्दरों—भगवान् विष्णु के हाथों ) से पन्नग (वासुकि नाग) रूप नेत्र को आकृष्ट करने वाले (मन्थन रस्सी खींचने वाले) मणि-भित्तियों से चमचमाते अमन्द राग (मन्दराचल पर्वत जैसे) मालूम पड़ते हैं। कोई शिखर सस्थाणु ( वृक्षयुक्त ) तथा दुर्गाश्रय ( दुर्गा देवी का आश्रय स्थल—दुर्गम स्थानों वाले ) हैं। कैलास पर्वत सदृश ऊँचे पर्वत-शिखर गुफाओं से युक्त हैं जिनमें हाथियों की चीत्कारें सुनाई पड़ती हैं।

इस प्रकार मन्त्रिपुत्र श्रुतशील के साथ वार्तालाप करते हुये राजकुमार कुछ देर में मार्ग पार कर कहीं निरन्तर बह रहे निर्झरों के हिम शीतल जल-स्पर्श से उगे वृक्ष पुष्पों के पराग के लिए झूमते हुए मधुकरों की मनोरम झङ्कार वाले, रमण कर रहे शबरमिथुनों द्वारा रौंदी गई अमन्दकोमल दूब वाले जल तथा स्थल वाले प्रदेश में थके हुए सैनिकों पर कृपा करके यात्रा को स्थगित किया।

**टिप्पणी**—( १ ) गीतविद्या में तत-अवनद्ध-पौष्कर-घन-सुषिर आदि मनोरम ध्वनियाँ होती हैं। आचार्य भरतमुनि के अनुसार—ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम्। घनं कांस्यकृतं प्रोक्तं सुषिरं वांश्यमेव च॥ अर्थात् तत—तन्त्री शब्द अव-नद्ध पौष्करशब्द, घन झालध्वनि तथा सुषिर वेणुध्वनि होती है।

( २ ) चित्र विद्या में कलिका, कण्टक, शाखा तथा त्रिभङ्गी चार पत्रावयव होते हैं। इनके मिश्रण से शिशु, सकल, स्वस्तिक, वर्धमान तथा सर्वतोभद्र पाँच पत्र निष्पन्न होते हैं।

( ३ ) शिव के उपासकों का एक वर्ग कापालिक ( अघोरी ) होता है। इस मत के अनुयायी मृत मनुष्य की खोपड़ी हाथ में रखते हैं। उसी में वह भोजन करते तथा जल पीते हैं। शिव जी के समान ही वह खट्वांग अस्त्र ( टेढ़ी-मेढ़ी हड्डी युक्त छड़ी ) भी धारण करते हैं।

**तैस्तैश्चिरन्तनवासरव्यापारैरहःशेषसहितामतिवाह्य तामपि निशामन-न्तरमुन्मिषत्पक्ष्मपक्षिपक्षावधूनितपवनैरिवापनीयमानेषु गगनचत्वरचर्चा-**

**प्रकरपाण्डुपुष्पपुञ्जकेषु नक्षत्रेषु, स्वविरहोत्पन्नतमःकलङ्ककलुषितानि मनाक्कुङ्कुमपत्रपिञ्जरैः करैः परामृश्य प्रसादयति दिननाथे दिङ्मुखानि, पुनः पूर्वक्रमेण प्रस्थानमकरोत् ।**

**सुधा**—तैस्तैरिति । तैः तैः=तथाविधैः । चिरन्तनवासरव्यापारैः—चिरन्तनानि =पुरातनानि, वासरस्य=दिवसस्य, व्यापाराणि=कार्याणि, तैः । अहःशेषसहिताम्= दिनशेषयुक्ताम् । ताम्=उपर्युक्ताम् । निशाम्=क्षपाम् । अतिवाह्य=व्यतीत्य । अनन्तरम्=पश्चात् । उन्मिषत्पक्ष्मपक्षिपक्षावधूनितपवनैः—उन्मिषन्ति पक्ष्माणि येषां तथाविधानाम् । पक्षीणां=खगानाम्, पक्षैः=पुंखैः । अवधूनिताः ये पवनाः=वाता- स्तैरिव । गगनचत्वरचर्चाप्रकरपाण्डुपुष्पपुञ्जकेषु—गगनम्=आकाशम्, एव चत्व- रम्=चतुष्पथम्, तत्र यो चर्चाप्रकरः=वार्तासमूहः, तद्वत्पाण्डुपुष्पपुञ्जकेषु=श्वेत- कुसुम-राशि-सदृशेषु । नक्षत्रेषु=उडुगणेषु । स्वविरहोत्पन्नतमःकलङ्ककलुषितानि— स्वविरहेण=निजवियोगेन, उत्पन्नम्=सञ्जातम् यत्तमः=अन्धकारम्, तदेव, कलङ्कम्, तेन कलुषितानि=अन्धकारयुक्तानि, दिङ्मुखानि=दिशामुखानि । कुङ्कुमपत्र- पिञ्जरैः=परागसदृशपीतवर्णैः । करैः=मयूखैः । परामृश्य=स्पृष्ट्वा । दिननाथे= सूर्ये । प्रसादयति=प्रकटिते सति । पुनः=भूयः । पूर्वक्रमेण=पूर्वानुसारम् । प्रस्था- नम्=प्रयाणम् । अकरोत्=चकार ।

**हिन्दी**—उन-उन चिरन्तन दैनिक कार्यों से अवशिष्ट दिन तथा रात्रि व्यतीत कर, तदनन्तर पंख फैलाते हुये पक्षियों के परों को फड़फड़ाने से उत्पन्न पवन से मानों आकाशरूप चौराहे में फैले श्वेतपुष्पराशि रूपी नक्षत्रों में अपने विरह से उत्पन्न अन्ध- कार कालिमा से दिशाओं को कुङ्कुमरज-सी पीली किरणों से कुछ-कुछ स्पर्श कर सूर्य के निकलने पर पुनः पूर्ववत् प्रस्थान किया ।

**एवमपसरन्मार्गान्मार्गान्नीवारीणि वारीणि सहंसनिनदान् नदान् सक- रेणुरेणुस्थलमाच्छादितदिशि खराणि शिखराणि लङ्घयन् सुनीरागान् गिरि- गहनग्रामाँस्तपस्विनश्च मानयन्नेकदा नातिदूर इवोत्ककादम्बकदम्बचुम्ब्य- मानाम्बुजराजिरजोरञ्जिताम्भसि सरित्तीरे तरुतलोपविष्टमेकमध्वश्रान्त- मध्वनीनमिदं चारुश्लोकयुगलमतिमधुरगीततरङ्गरङ्गिताक्षरं गायन्त- मद्राक्षीत् ।**

**एवमिति** । एवम्=इत्थम् । मार्गान्मार्गान् अपसरसन्=मार्गादीनां लङ्घनादिकं कुर्वन् । पक्षे—अपसरत् सैन्यभयान्निवर्तमानम्, मार्गम्=मृगसमूहो येभ्यस्तांस्तथोक्तान् । निवारीणि—निवारोऽस्त्येतेषु तादृशानि । वारीणि=जलानि । सहंसनिनदान्—सह हंसनिनादैरिति तादृशान्=हंसध्वनिसदृशान् । नदान्=जलधारान् । सकरेणुरेणुस्थलम्— सह=साकम्, करेणुभिः=हस्तिनीभिः इति, तथाविधम् । रेणुस्थलम्=बालुकाबहुल- स्थानम् । आच्छादितदिशि—आच्छादिताः=आवृताः, दिशः=दशसंख्यकाशाः येन- तस्मिन् । खराणि=तीक्ष्णानि । शिखराणि=शृङ्गाणि । लङ्घयन्=पारयन् । सुनी-

रागान्—सुष्ठु नीरं सुनीरम्=सुजलम्, अगाः=तरवश्च येष्विति। पक्षे—सुष्ठु निर्गत-रागान्=वैराग्यपूर्णान्। गिरिगहनग्रामान्=सघनपर्वतग्रामान्। तपस्विनः=तपस्विजनान्। मानयन्=पूजयन्। एकदा=एकस्मिन्नवसरे। नातिदूरे=समीप एव यथा। उत्ककादम्बकदम्बचुम्ब्यमानाम्बुजराजिरजोरञ्जिताम्भसि—उत्केन=उत्कण्ठितेन, कादम्बानाम्=हंसानाम्, कदम्बेन=समूहेन, चुम्ब्यमाना या अम्बुजराजिः=कमलपंक्तिः, तस्याः रजोभिः=परागकणैः, रञ्जितम्=शोभितम्, अम्भः=वारि यत्र तथाविधे। सरित्तीरे=नदीतटे। तरुतलोपविष्टम्=वृक्षच्छायोपविष्टम्। एकम्=अद्वितीयम्। अध्वश्रान्तम्—अध्वनि=मार्गे, श्रान्तः=क्लान्तस्तम्। अध्वनीनम्=अध्वानमलंगामी इत्यध्वनीनस्तम्=पथिकम्। चारुश्लोकयुगलम्—चारु=रुचिरम् श्लोकयुगलम्=श्लोकयुग्मम्। अतिमधुरगीततरङ्गरङ्गिताक्षरम्—अतिमधुरगीतस्य=अतिरुचिरगायनस्य, तरङ्गेषु=वीचिषु, रङ्गितानि=रञ्जितानि, अक्षराणि यस्य तत्। गायन्तम्=आलपन्तम्। आद्राक्षीत्=अपश्यत्।

**हिन्दी**—इस प्रकार सैन्य-भय से भाग रहे मृगसमूहवाले, नीवार से सम्पन्न जल को हंसध्वनि युक्त, नदों को गजयुक्त, बालुकामय स्थल को तथा दिशाओं को आच्छादित किये हुए, तीक्ष्ण शिखरों को पार करते हुए ही पूर्ण वैराग्य युक्त सुन्दर जल तथा अगवृक्षों वाले, गहन पर्वतों के समूहों पर रहने वाले तपस्वियों को सम्मानित करते हुए, एक बार थोड़ी ही दूर पर उत्कण्ठित हंस समूह के द्वारा चुम्ब्यमान अम्बुज राजि के परागकणों से रञ्जित जलवाले नदीतट पर वृक्ष के तले बैठे एक मार्ग में थके पथिक को अतिमधुर गीत की तरङ्गों से रञ्जित अक्षरों वाले रुचिर श्लोकद्वय गाते हुए देखा।

**तव सुहृदुपभुक्तश्रीफलः कामकेलिं**
**जनयति वनितानां कुङ्कुमालोहितानाम्।**
**श्रयति स च समूहो मेखलाभूषितः सन्**
**जनयति वनितानां कुङ्कुमालोऽहितानाम्॥ १२॥**

**अन्वयः**—तव सुहृदुपभुक्तश्रीफलः, कुङ्कुमालोहितानां वनितानां, कामकेलिं जनयति, मेखलाभूषितः सन् च स अहितानां समूहः कुमालः कुं श्रयति॥१२॥

**सुधा—तवेति।** तव=त्वत्सम्बन्धी। सुहृदुपभुक्तश्रीफलः—सुहृत्=प्रियजनः, उपभुक्तश्रीफलः—उपभुक्तं श्रीफलम् येन सः अनुभूतलक्ष्मीफलः, भुक्तबिल्वफलो वा। कुङ्कुमालोहितानाम्—कुङ्कुमेन=कुङ्कुमरागेण, आलोहितानाम्=रञ्जितानाम्। वनितानाम्=कान्तानाम्। कामकेलिम्=मदनक्रीडाम्, जनयति=उत्पादयति। मेखला-भूषितः=मेखलया शोभितः, मेखलायां=मेखलाभुवि, गिरिमध्यभुवि वा भूषितः=अधिवसन् सन्। सः=असौ। अहितानाम्=शत्रूणाम्। समूहः=यूथः। कुमालः=कुत्सितस्रक् सन्। कुम्=भूमिम्। श्रयति=आश्रयति। अत्र प्रथमतृतीयपादौ विशेषणगतश्लेषेणालङ्कृतौ द्वितीयचतुर्थौ तु यमकेन। मालिनीवृत्तम्॥ १२॥

हिन्दी—( मित्र पक्ष में ) तुम्हारा मित्र वर्ग लक्ष्मी के फल का उपभोग करता हुआ, कुङ्कुम रंग से रंगी कामिनियों की कामक्रीड़ा को उत्पन्न करता है और मेखला से अलंकृत होते हुए वह वनिताओं की भूमिका को उत्तर आता है।

( शत्रु पक्ष में ) तुम्हारा शत्रु समूह पर्वतमध्यभूमि पर बसता हुआ बिल्व फलों का उपभोग कर कुमालाएँ धारण करता है तथा यति ( सन्यासी ) और बनी ( वनवासी ) भाव ( धर्म ) को धारण करता है ॥ १२ ॥

**अपि च—**

**त्वत्तो भयेन नृप पश्य जनो वनेषु**
**कान्त्या जितस्मर तिरोहितवानरीणाम् ।**
**शाखामृगश्चपल एष गिरेरुपत्य-**
**कां त्याजितः स्मरति रोहितवानरीणाम् ॥ १३ ॥**

**अन्वयः**—जितस्मर नृप ! पश्य, त्वत्तः भयेन अरीणां जनः कान्त्या तिरोहितवान् । एषः चपलः शाखामृगः गिरेः उपत्यकां त्याजितः रोहितवानरीणाम् स्मरति ॥ १३ ॥

**सुधा—त्वत्त इति** । जितस्मर—जितः=विजितः, स्मरः=कामो येन, तत्सम्बुद्धौ । नृप=राजन् ! पश्य=अवलोकय । त्वत्तः=भवत्तः । भयेन=भिया। अरीणाम् जनः=शत्रूणां लोकः । कान्त्या=दीप्त्या । तिरोहितवान्=अष्टो जातः। एषः=अयम् । चपलः=चञ्चलः । शाखामृगः=वानरः । गिरेः=पर्वतस्य । उपत्यकायाम्=घाट्याम् । त्याजितः=वियोजितः । रोहितवानरीणाम्=रक्तमुखमर्कटीनाम् । स्मरति=स्मरणं करोति । अत्र द्वितीयचतुर्थचरणयोः यमकम्। वसन्ततिलका वृत्तम् ॥ १३ ॥

हिन्दी—कामदेव को जीत लेने वाले हे राजन् ! आपके भय से शत्रुओं के लोग अन्धकार में छिप गये हैं। यह चञ्चल शाखामृग ( वानर ) पर्वत की घाटी से निकाला ( भगाया ) गया, लाल मुख वाली वानरियों को याद कर रहा है ॥ १३ ॥

**'अहो नु खल्वयमनल्पशास्त्रीयसंस्कारामृतसम्पर्कपल्लवितप्रज्ञाङ्कुरः कोऽपि कुशलः काव्यवक्रोक्तिषु पथिकयुवा योग्यः, सम्भाषणस्य' इत्यवधारयति राजनि ससम्भ्रममुत्थाय स्थित्वा च पुरः स पान्थः सप्रणाममिमं श्लोकमपाठीत् ।**

**सुधा—अहो न्विति** । अहो नु खलु=निश्चयेनाश्चर्यम् । अयम्=एषः । अनल्पशास्त्रीयसंस्कारामृतसम्पर्कपल्लवितप्रज्ञाङ्कुरः—अनल्पम्=पर्याप्तम्, शास्त्रीयसंस्काररूपं यद् अमृतम्=सुधा, तस्य सम्पर्केण=साहचर्येण । पल्लवितानि=दलयुक्तानि, प्रज्ञाङ्कुराणि=बुद्धिरूपाङ्कुराणि यस्य सः । कोऽपि=कश्चिदपि । काव्यवक्रोक्तिषु=व्यङ्ग्यात्मकभाषणेषु । कुशलः=दक्षः । पथिकयुवा=तरुणपान्थः । सम्भाषणस्य=वार्तालापस्य । योग्यः=अनुकूलः । इति=इत्थम् । राजनि=नृपे । अवधारति=

निश्चयति सति। ससम्भ्रमम्=सभयम्। उत्थाय। पुरः=समक्षं च। स्थित्वा=अवस्थाय। सः=असौ। पान्थः=पथिकः। सप्रणामम्=साभिवादनम्। इमम्=एतम्। श्लोकम्=पद्यम्। अपाठीत्=पपाठ।

हिन्दी—"अहा, निश्चय ही यह पर्याप्तशास्त्रीय संस्कार रूपी अमृत से सींचे जाने के कारण पल्लवित बुद्धिरूपी अङ्कुरों वाला कोई काव्यवक्रोक्ति में कुशल पथिक युवा है। अतः इससे बातचीत करनी चाहिए।" इस प्रकार राजा के निश्चय करने पर सहसा वह पथिक उठ कर और सामने आकर खड़ा हो यह श्लोक पढ़ने लगा।

**'वेधा वेदनयाश्लिष्टो गोविन्दश्च गदाधरः।**
**शम्भुः शूली विषादी च देव केनोपमीयसे'** ॥ १४॥

अन्वयः—देव! वेधा वेदनया आश्लिष्टः, गोविन्दः च गदाधरः, शम्भुः शूली विषादी च, केन उपमीयसे ॥ १४॥

**सुधा—वेधेति।** देव=राजन्! वेधा=विधाता। वेदनया=पीडया। अश्लिष्टः=सम्बद्धः। पक्षे—वेदनयेन=वेदशब्देन, आश्लिष्टः। गोविन्दः=विष्णुदेवः। गदाधरः-गदेन=रोगेण, अधरः=विधुरः। पक्षे—गदाधरः=कौमोदकीगदाधारी। शम्भुः=शिवः। शूलमस्येति=रोगविशेषयुक्तः। पक्षे—त्रिशूलधारी। विषादी—विषादमस्येति=खेदयुक्तः। पक्षे—विषम्=गरलम् कालकूटं नाम। अत्तीति=कालकूटविषपायी। केन=देवेन समम्। उपमीयसे=तुलना क्रियसे। अत्र श्लेषालङ्कारः अनुष्टुव्वृत्तम् ॥ १४॥

**हिन्दी**—हे देव! वेधा (ब्रह्मा) वेदना से पीड़ित, गोविन्द (विष्णु) गद (रोग) युक्त तथा शम्भु शूल और विषाद से आक्रान्त हैं अतः आपकी तुलना किससे की जाय!

(पक्ष में) हे देव! ब्रह्मा वेदनय शब्द से आश्लिष्ट, विष्णु गदाधारी तथा शिव त्रिशूलधारी एवम् कालकूट विषपान करने वाले हैं। अतः आपकी तुलना किस देवता से की जाय ॥ १४॥

**राजा तु तदाकर्ण्य क्षणमाग्रहोपरोधविस्मयहर्षरसैः समकालमाप्लावितमनाः प्रथममुत्फुल्लया दृशा, ततो मुग्धस्मितार्घ्येण, तदनु सर्वाङ्गीणभूषणप्रदानेन, तमभ्यर्च्य 'पान्थ, कथय केयमुत्तुङ्गकल्लोलदोलाधिरूढानुच्चचञ्चूत्क्षिप्तमृणालवलयान्कूजतः कलहंसानक्षसूत्रिणः प्रवर्त्तितब्रह्मयज्ञोद्गारमुखरमुखांस्तीरतापसानिव विभ्रमारोपयितुमुद्वहन्ती सरित्, तरुणतरुतलमलङ्कुर्वाणः प्रसन्नसरस्वतीकः कश्च भवान्' इति सप्रणयमपृच्छत्।**

**सुधा—राजेति।** राजा तु=नृपस्तु। तत् आकर्ण्य=तच्छ्रुत्वा। क्षणम्=किञ्चित्कालम्। आग्रहोपरोधविस्मयहर्षरसैः—आग्रहस्य, उपरोधस्य=बन्धनस्य, विस्मयस्य=आश्चर्यस्य, हर्षस्य=आमोदस्य, रसैः=आनन्दैः। समकालम्=एकमेव

समयम् । आप्लावितमनाः—आप्लावितम्=आसिक्तम्, मनः=चेतः, यस्य सः । प्रथमम्=प्राक् । उत्फुल्लया=प्रफुल्लया । दृशा=दृष्ट्या । ततः=तदनन्तरम् । मुग्धस्मिताघ्र्येण—मुग्धेन=मधुरेण, स्मितेन=हासेन, एव अर्घ्येण=अर्घ्यदानेन । तदनु=तत्पश्चात् । सर्वाङ्गीणभूषणप्रदानेन—सर्वाङ्गीणानि=सम्पूर्णशरीरसम्बन्धीनि आभूषणानि=आभरणानि, तेषां प्रदानेन=दानेन । तम्=पन्थानम् । अभ्यर्च्य=सम्पूज्य । पान्थ=अयि पथिक ! कथय=वद ; इयम्=एषा उत्तुङ्गकल्लोलदोलाधिरूढान्=उच्चतरङ्गरूपदोलाधिरूढान् । उच्चावञ्चूत्क्षिप्तमृणालवलयान्—उच्चावञ्चुभिः=उन्नतचञ्चुभिः उत्क्षिप्तानि=ऊर्ध्वं प्रक्षिप्तानि मृणालवलयानि यैस्तान् । कूजतः=कूजनम् कुर्वतः । कलहंसान्=मरालान् । अक्षसूत्रधारिणः=अक्षसृग्विभ्रतः । प्रवर्तितब्रह्मयज्ञोद्गारमुखरमुखान्—प्रवर्तितः=प्रारब्धः, ब्रह्मयज्ञस्य=वेदाध्ययनस्य, उद्गारः=उच्चारः, तेन मुखराणि=ध्वनियुक्तानि, मुखानि=आननानि येषां ते तान् । तापसान्=तपस्विजनान् इव । दिवम्=स्वर्गम् । आरोपयितुम्=आरोढुम् । उद्वहन्ती—उत्=ऊर्ध्वम्, वहन्ती=प्रवहन्ती । सरित्=पयस्विनी । तरुणतरुतलम्—तरुणतरोः=नूतनवृक्षस्य, तलम्=अधोभागम् । अलङ्कुर्वाणः=शोभितं कुर्वाणः । प्रसन्नसरस्वतीकः=विद्वान् । भवान्=श्रीमान् । कः अस्ति । इति=एवम् । सप्रणयम्=सप्रेम । अपृच्छत्=प्रपच्छ ।

**हिन्दी**—यह सुन कर राजा ने क्षण भर आग्रह, बन्धन, आश्चर्य तथा हर्ष के आनन्द से एक साथ प्रसन्न होकर सर्वप्रथम उत्फुल्ल दृष्टि से, तदनन्तर मधुर मुस्कान से, और तत्पश्चात् सम्पूर्ण शरीर के आभूषणों के दान से उसका सम्मान कर प्रेम से उससे पूछा कि हे पथिक ! बतलाओ—यह नदी कौन है जो अपनी उत्तुङ्ग तरङ्गों रूपी हिण्डोले पर आरूढ़, ऊँची ( उठी हुई ) चोंचों से कमल तन्तुओं को ऊपर फेंक कर कलरव करते हुए, अक्षसूत्र धारण किये, वेदाध्ययन की ध्वनि से मुखरित मुख वाले तपस्वियों के समान इन कलहंसों को स्वर्ग पहुँचाने के लिए बह रही है।

**सोऽपि 'सभ्रमरया कूलकीचकवेणुलतया सदृशी नावा तरणयोग्या किमियमप्रसिद्धा महापदी देवस्य' इत्यभिधाय कथयितुमारब्धवान् ।**

**सुधा**—सोऽपीति । सः=असौ । पथिकः अपि । कूलकीचकवेणुलतया सदृशी—कूलस्य=तटस्य, कीचकवेणुलता=छिद्रबहुलवंशविशेषलता, तया सदृशी=तत्समा, नावा=नौकया । तरणयोग्या=अवतरणानुकूला । इयम्=एषा । सभ्रमरया=सावर्तवेगा । महापदी=विशाला नदी । किं देवस्य=भवतः । अप्रसिद्धा=सामान्या । अस्ति । इति=एवम् । अभिधाय=उक्त्वा । कथयितुम्=गदितुम् । आरब्धवान्=प्रारभत ।

**हिन्दी**—वह भी "तटवर्ती छिद्रबहुल बांसों की लता के समान, नाव द्वारा पार किये जाने योग्य यह भँवर तथा वेग से युक्त महानदी आपके लिए क्या अप्रसिद्ध ( साधारण-सी ) है" । यह कह कर इस प्रकार कहने लगा—

**भानोः सुता संवरणस्य भार्या तापी सरित्सेयमघस्य हन्त्री।**
**यस्याः कुरुः सूनुरभूत्स यस्य नाम्ना कुरुक्षेत्रमुदाहरन्ति ॥ १५ ॥**

अन्वयः—भानोः सुता संवरणस्य भार्या अघस्य हन्त्री सा इयम् तापी यस्याः सः कुरुः सूनुः अभूत् यस्य नाम्ना कुरुक्षेत्रम् उदाहरन्ति ॥ १५ ॥

**सुधा—भानोरिति।** भानोः=सूर्यस्य। सुता=दुहिता। संवरणस्य=संवरणनाम्ना राज्ञः। भार्या=पत्नी। अघस्य=पापस्य। हन्त्री=विनाशिका। सा=तथाविधा। इयम्=एषा। तापी—तपनस्य पुत्री=यमुना नदी। अस्ति। यस्याः सः=असौ। प्रसिद्धः कुरुः=कुरुनामकः। सूनुः=सुतः। अभूत्=अभवत्। यस्य=कुरोः। नाम्ना=अभिधानेन। कुरुक्षेत्रम्=तन्नामक्षेत्रविशेषम्। जनाः। उदाहरन्ति=कथयन्ति। इन्द्रवज्रावृत्तम्। तद्यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति ॥ १५ ॥

हिन्दी—सूर्य की पुत्री तथा नृप संवरण की भार्या, पापों का विनाश करनेवाली यह वही यमुना नदी है जिसके पुत्र कुरु के नाम से कुरुक्षेत्र कहलाता है ॥ १५ ॥

**एतस्याः सलिलावगाहसमये कुर्वन्ति नित्यं नृणां**
**नीरन्ध्रोन्नतकर्कशस्तनतटीसंघट्टपिष्टोर्मयः।**
**भ्राम्यद्भृङ्गनिभालकैः क्षणमिव व्यालोलनेत्रैर्मुखै-**
**रुत्फुल्लोत्पलगर्भपङ्कजवनभ्रान्तिं महाराष्ट्रिकाः ॥ १६ ॥**

अन्वयः—एतस्याः सलिलावगाह समये नित्यं नीरन्ध्रोन्नतकर्कशस्तनतटीसंघट्टपिष्टोर्मयः महाराष्ट्रिकाः भ्राम्यदभृङ्गनिभालकैः व्यालोलनेत्रैः मुखैः नृणाम् उत्फुल्लोत्पलगर्भपङ्कजवनभ्रान्तिं कुर्वन्ति ॥ १६ ॥

**सुधा—एतस्या इति।** एतस्याः=अस्या यमुनायाः। सलिलावगाहसमये—सलिले=जले, अवगाहस्य=निमज्जनस्य, समये=अवसरे। नित्यम्=सदा। नीरन्ध्रोन्नतकर्कशस्तनतटीसंघट्टपिष्टोर्मयः—नीरन्ध्रे=सघने, उन्नते=उच्छ्रिते, कर्कशे=कठोरे, च स्तने=पयोधरे, त एव तटे यस्यास्तस्याः संघट्टनेन=संघर्षणेन, पिष्टाः=चूर्णीकृतायाः ऊर्मयः=तरङ्गाः, ताः। महाराष्ट्रिकाः=महाराष्ट्रप्रदेशभवाः सुन्दर्यः। भ्राम्यद्भृङ्गनिभालकैः—भ्राम्यद्भिः=इतस्ततः गच्छद्भिः, भृङ्गनिभैः=अलिसदृशैः अलकैः=केशैः। व्यालोलनेत्रैः—व्यालोले=चञ्चले, नेत्रे=नयने येषां तैः। मुखैः=आननैः। नृणाम्=जनानाम्। उत्फुल्लोत्पलगर्भपङ्कजवनभ्रान्तिम्—उत्फुल्लानि=विकसितानि, उत्पलानि=कमलानि, गर्भे=अन्तरे, तथाविधस्य, पङ्कजवनस्य=कमलकाननस्य, भ्रान्तिम्=भ्रमम्। कुर्वन्ति=विदधन्ति। अत्र भ्रान्तिमानलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

**हिन्दी—**इस ( यमुना ) के जल में स्नान करने के समय नित्य महाराष्ट्र प्रदेश की कामिनियाँ अपने सघन उन्नत तथा कठोर पयोधर-तटी की लहरों को चकनाचूर

करती हुई, उड़ रहे भ्रमरों के समान काली अलकों, चञ्चल नेत्रों एवं मुखों से लोगों को विकसित कमलों वाले सरोजवनों की भ्रान्ति उत्पन्न करती हैं ॥ १६ ॥

**अपि च—**

**यद्येतस्याः सकृदपि मरुन्नर्तिताम्भोजराजि-**
**प्रेङ्खत्पत्रव्यजनविधुतं वारि निहारहारि ।**
**रोधोभाजां पिबति कुसुमैर्वासितं पादपानां**
**पीयूषाय स्पृहयति ततः किं क्वचिन्नाकिलोकः ॥ १७ ॥**

**अन्वयः**—रोधोभाजाम्, पादपानां कुसुमैः वासितं मरुन्नर्तिताम्भोजराजिप्रेङ्खत्-पत्रव्यजनविधुतं एतस्याः निहारहारिवारि नालिकोकः यत् सकृत् अपि पिबति ततः किं क्वचित् पीयूषाय स्पृहयति ॥ १७ ॥

**सुधा—यद्येतस्या इति ।** अपि च=अन्यच्च रोधोभाजाम्—रोधः=तटम्, भजन्ति =सेवन्त इति तथाविधानाम्=तटवर्तिनाम् । पादपानाम्=वृक्षाणाम् । कुसुमैः= पुष्पैः, वसितम्=सुगन्धितम् । मरुन्नर्तिताम्भोजराजिप्रेङ्खत्पत्रव्यजनविधुतम्— मरुद्भिः=पवनैः, नर्तिताः=आन्दोलिताः, या अम्भोजराजिः=कमलपंक्तिः, तस्या, प्रेङ्खिद्भिः=चञ्चलैः, पत्रव्यञ्जनैः=दलरूपव्यजनैः, विधुतम्=कम्पितम् । एतस्याः=अस्याः । नीहारहारि=तुषारकणशोभि । वारि=जलम् । नाकिलोकः =स्वर्गिकजनः । यत् सकृदपि=यद्येकवारमपि । पिबति=पानं करोति । ततः= तदनन्तरम् । किम्=किमिति । क्वचित्=क्वापि । पीयूषाय=अमृताय । स्पृहयति =अभिलषति । स्रग्धरा वृत्तम् । तद्यथा—'म्रभ्नैर्याणां त्रयेण त्रिमुनियतियुतं स्रग्धरा कीर्त्तितेयम् ॥ १७ ॥

**हिन्दी**—और भी—तटवर्ती वृक्षों के पुष्पों से सुवासित पवन द्वारा हिलाई गई ( झकझोरी गई ) कमलराशि के चञ्चल दलरूपी पंखों द्वारा कम्पित इस सरिता का नीहारकणों की शोभा हरने वाला जल पी लेने पर क्या कहीं स्वर्गिकजन अमृत लेने के अभिलाषा करता है ? ॥ १७ ॥

**मामपि पुष्कराक्षनामानं वार्तिकमवगच्छतु देवः ।**

**सुधा—मामिति ।** माम्=मा अपि । पुष्कराक्षनामानम्=पुष्कराक्षाभिधम् । वार्तिकम्—वार्तायाम्=वार्तालापे नियुक्तस्तम् । देवः=श्रीमान् । अवगच्छतु=जानातु ।

**हिन्दी**—मुझे भी आप पुष्कराक्ष नामक वार्तालाप में नियुक्त व्यक्ति समझें ।

**तथाहि—**

**स्थित्वा त्वदागमनमार्गमुखे गवाक्षे**
**वार्ताविशेषमधिगन्तुमिहायताक्ष्या ।**
**सम्प्रेषितो निषधनाथ तथास्मि यस्याः**
**क्रीडागिरिस्त्वमसि मुग्धमनोमृगस्य ॥ १८ ॥**

अन्वयः—निषधनाथ ! त्वदागमनमार्गमुखे गवाक्षे इह स्थित्वा वार्ताविशेषम् अधिगन्तुं तया आयताक्ष्या सम्प्रेषितः अस्मि, यस्याः मुग्धमनोमृगस्य त्वं क्रीडागिरिः असि ॥ १८ ॥

सुधा—स्थित्वेति । निषधनाथ—निषधायाः=तन्नामनगर्याः, नाथः=प्रभुः तत्सम्बुद्धौ । त्वदागमनमार्गमुखे—त्वत्=तव, आगमनस्य, मार्गे=वर्त्मनि, मुखम्=आननम् यस्य तथाविधे । गवाक्षे=वातायने । इह=अत्र । स्थित्वा=अवस्थाय । वार्ताविशेषम्=समाचारविशिष्टम् । अधिगन्तुम्=प्राप्तुम् । तया=दमयन्त्या । आयताक्ष्या—आयते=विशाले, अक्षिणी=नेत्रे यस्याः, तया । सम्प्रेषितः=सम्प्रहितः । अस्मि । यस्याः=दमयन्त्याः । मुग्धमनोमृगस्य—मुग्धम्=प्रसन्नम्, मनः=चेतः, तदेव मृगस्तस्य । त्वम्=श्रीमान् । क्रीडागिरिः=लीलापर्वतः । मृगो हि गिरौ रमते मनश्चापि तथैव त्वयीति भावः । असि=भवसि । वसन्ततिलका वृत्तम् ॥ १८ ॥

हिन्दी—और भी—हे निषधनाथ ! आपके आगमनमार्ग के सामने वाली खिड़की पर यहाँ बैठा हुआ, आपके विशेष-समाचार को पाने के लिए उसके द्वारा मैं भेजा गया हूँ । उस दमयन्ती रूपी मृगी के आप क्रीड़ापर्वत हैं अर्थात् जिस प्रकार मृग का मन कीडा-पर्वत पर लगता है उसी प्रकार दमयन्ती का मन भी आप में ही रम रहा है ॥ १८ ॥

**एष्यति च श्वस्तनेऽहनि मार्गश्रमक्लान्तमितो नातिदूर इवोत्तुङ्गसरलसालसर्जार्जुननिचुलनिचयान्तरचलच्चटुलचकोरमयूरहारीतहंसकुलकोलाहलिनि पयोष्णीपुलिनपरिसरे स्थितं तया प्रहितमाप्तं क्रीडाकिन्नरमिथुनम् ।**

सुधा—एष्यतीति । मार्गश्रमक्लान्तम्—मार्गे=पथि, श्रमेण क्लान्तम्=खिन्नम् । इतः=अस्मात् स्थानात् । नातिदूरे=पार्श्वे एव उत्तुङ्गसरलसालसर्जार्जुननिचुलनिचयान्तरचलच्चटुलचकोरमयूरहारीतहंसकुलकोलाहलिनि—उत्तुङ्गाः=उन्नताः सरलाः=ऋजवश्च, ये सर्जार्जुननिचुलाः=सर्ज-अर्जुन-निचुल-नामवृक्षाः, तेषां निचयः=समूहस्तस्यान्तरे=तन्मध्ये, चलन्तः=परिभ्रमन्तः ये चटुलाः=चपलाश्चकोराः, मयूरा=केकिनः, हरीताः हंसाः=मरालाश्च, तेषाम् कुलम्=वृन्दम्, तस्य कोलाहलः=कलरवो यत्र तथाविधे । पयोष्णीपुलिनपरिसरे—पयोष्ण्याः=तन्नाम नद्याः, पुलिनस्य=तटस्य, परिसरे=प्रदेशे । स्थितम्=अवस्थितम् । तया=दमयन्त्या । प्रहितम्=प्रेषितम् । आप्तम्=प्राप्तम् । क्रीडाकिन्नरमिथुनम्=लीलाकिंपुरुषयुगलम् । श्वस्तनेऽहनि=श्वस्तने दिवसे, एष्यति=गामिष्यति । भवानिति शेषः ।

हिन्दी—मार्ग में चलने से थके यहाँ से थोड़ी ही दूर पर ऊँचे सीधे सर्ज, अर्जुन तथा निचुल वृक्षों के मध्य से घूमते हुए चञ्चल चकोर, मयूर, हरियल तथा हंस पक्षियों के समुदाय के कोलाहल वाले पयोष्णी नदी के तट-प्रदेश में बैठे, उस ( दमयन्ती ) द्वारा भेजे हुए क्रीडा किन्नर युगल के पास आप पहुँचेंगे ।

**इयं च वाच्यतां तया स्वहस्तकिसलयलिखिताक्षरगर्भा भूर्जपत्रिका' इत्यभिधाय पुरोऽस्य लेखपत्रिकां व्यसृजत् ।**

सुधा—इयमिति । इयम्=एषा पत्रिका । वाच्यताम्=पठ्यताम् । तया= दमयन्त्या । स्वहस्तकिसलयलिखिताक्षरगर्भा—स्वस्य=आत्मनः, हस्तकिसलयेन= करपल्लवेन, लिखितानि, अक्षराणि=वर्णानि, गर्भे=अन्तरे यस्यास्ताम् । भूर्जपत्रिका =भूर्जपत्रे लिखिता पत्रिका । इति=एवम् । अभिधाय=कथयित्वा । अस्य=एतस्य । निषधराजस्य । पुरः=समक्षम् । लेखपत्रिकाम्=भूर्जपत्रिकाम् । व्यसृजत्=अमुञ्चत् ।

हिन्दी—"यह उस ( दमयन्ती ) द्वारा अपने हाथ रूपी किसलय से लिखे अक्षरों वाली भूर्जपत्रिका पढ़िये" । यह कह कर उस निषधराज के सम्मुख लेख-पत्रिका ( चिट्ठी ) को रख दिया ।

**राजापि पार्श्वपरिजनेनोत्क्षिप्यार्पितां तामतिबहलपुलकाङ्कुरकण्टकितप्रकोष्ठकाण्डेन पाणिना स्वयमुन्मुच्य सादरमवाचयत् ।**

सुधा—राजेति । राजा=नृपः अपि । पार्श्वपरिजनेन—पार्श्वस्थ=समीप-वर्तिनः, परिजनेन=सेवकेन । उत्क्षिप्य=उत्थाय । अर्पिताम्=प्रदत्ताम् । ताम्= भूर्जपत्रिकाम् । अतिबहलपुलकाङ्कुरकण्टकितप्रकोष्ठकाण्डेन—अतिवहलेन=पर्याप्तेन, पुलकाङ्कुरेण=रोमाञ्चेन, कण्टकितप्रकोष्ठकाण्डम्=मणिबन्धम् यस्य तादृशेन । पाणिना=करेण । स्वयम्=आत्मनैव । उन्मुच्य=उद्घाटच । सादरम्=आदर-पूर्वकम् । अवाचयत्=अपठत् ।

हिन्दी—राजा भी समीपवर्ती अनुचर के द्वारा उठाकर दी गई उस भूर्जपत्रिका को पर्याप्त रोमाञ्च के कारण कण्टकित कलाई वाले हाथ से स्वयम् खोलकर सादर वाँचने लगा ।

**नलोऽपि मां प्रत्यनलोऽसि यत्तद्भवादृशां नैषध नैष धर्मः ।**
**तथाबलनां बलवद् ग्रहीतुं न मानसं मानसमुद्रयुक्तम् ॥ १९ ॥**

अन्वयः—नैषध ! नलः अपि मां प्रति अनलः असि यत् तत् एषः धर्मः न। तथा अबलानां मानसं वलवद् गृहीतुं मानसमुद्रयुक्तं न ॥ १९ ॥

सुधा—नलोऽपीति । नैषध=निषधायां भवः नैषधस्तत्सम्बुद्धौ=हे निषधराज ! नलः=नलाभिधः अपि । माम् प्रति=दमयन्तीं प्रति । त्वम् । अनलः=वह्नि-सदृशः । दाहकः=सन्तापदायकः असि । तत्=तत्कर्म । भवादृशाम्=भवद्विधानाम् महापुरुषाणाम् । एषः=अयम् । धर्मः=कर्तव्यं नैवास्ति । तथा अबलानाम्= नारीणाम् । मानसम्=चेतः । बलवत्=बलात् । गृहीतुम्=आदातुम् । मानसमुद्र-युक्तम्—मानरूपेण समुद्रेण=सागरेण, युक्तम्=सम्पन्नम् । त्वाम् । न=नोचितम् । अत्र मानसमद्रेत्येतेन सबलानामेव पराजयो नाबलानाम् । अत्र विरोधाभास-यमका-लङ्कारौ । उपेन्द्रवज्रा वृत्तम् ॥ १९ ॥

हिन्दी—हे निषधराज ! नल होकर भी आप मेरे प्रति अनल सदृश ( सन्ताप देने वाले ) हो । यह आप जैसे महापुरुषों का धर्म नहीं है तथा समान रूपवाले समुद्र

से युक्त आपको हठात् अबलाओं के मन को इस प्रकार ग्रहण करना ठीक नहीं है ॥ १९ ॥

**अपि च—**

**निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन।**
**बलवति न यथा तथाबलानां प्रभवति कृष्टशरासनो मनोभूः ॥ २० ॥**

अन्वयः—दैवं किल दुर्बलेषु निपतति तत् ननु अवितथम्। येन कारणेन कृष्टसरासनः मनोभूः बलवति न तथा प्रभवति तथा अबलानाम् प्रभवति ॥ २० ॥

**सुधा—**निपततीति। दैवं=भाग्यम्। किल=खलु। दुर्बलेषु=अशक्तेषु। निपतति=पतति। तत्=असौ तु। ननु=नूनम्। अवितथम्= सत्यम्। अस्तीति। येन कारणेन=यतो हि। कृष्टशरासनः—कृष्टम्=आकृष्टम्, शरासनम्=धनुर्येन सः। मनोभूः=मदनः। बलवति=सशक्ते जने। न तथा प्रभवति=तेन प्रकारेण प्रभावशाली न भवति। यथा अबलानाम्=नारीणाम्, अशक्तानां च प्रभवतीति। अत्र यमकालङ्कारः ॥ २० ॥

हिन्दी—और भी—भाग्य वास्तव में दुर्बलों को ही सताता है यह एक निश्चित सत्य है। इसी कारण से धनुष खींचे हुए मदन बलशाली पर वैसा प्रभाव नहीं डालता है जैसा कि अबलाओं तथा अशक्तों को सताता है ॥ २० ॥

**अपि च—**

**कदा किल भविष्यन्ति कुण्डिनोद्यानभूमयः।**
**उत्फुल्लस्थलपद्माभभवच्चरणभूषिताः ॥२१॥**

अन्वयः—किल कदा कुण्डिनोद्यानभूमयः उत्फुल्लस्थलपद्माभभवच्चरणभूषिताः भविष्यन्ति ॥ २१ ॥

**सुधा—**कदेति। किल=खलु। कदा=कस्मिन् काले। कुण्डिनोद्यानभूमयः—कुण्डिनस्य=कुण्डिनपुरस्य, उद्यानस्य=उपवनस्य, भूमयः=स्थलानि। उत्फुल्लस्थलपद्माभभवच्चरणभूषिताः—उत्फुल्लानाम्=विकसितानाम्, स्थलपद्मानाम्=स्थलकमलानाम्, आभेवाभा=कान्तिर्ययोस्ताभ्यां भवच्चरणाभ्याम्=श्रीमत्पद्भ्याम्, भूषिताः=शोभिताः। भविष्यन्ति। अनुष्टुब्वृत्तम् ॥ २१ ॥

हिन्दी—और भी—निश्चय ही कब कुण्डिनपुर की उद्यानभूमि पूर्णविकसित स्थलकमल की कान्ति सदृश कान्ति वाले आपके चरणों से भूषित हो सकेगी ॥ २१ ॥

**इति लेखलिखितप्रणयसुभाषितामृतरसप्लवेनाप्लावितहृदयः, 'विधे, विधेहि मे पक्षिण इव पक्षयुगलमुड्डीय येन तां पश्यामि' इति चिन्तयन्नरपतिः पुरतः स्थितं तं प्रियावार्तिकमाश्लिष्यन्निवोच्चरोमाञ्चनिचयेन, पिबन्निवाभिलाषतृषितया दृशा, स्नपयन्निव मधुरस्मितामृतरसेन, पुनः पुनः सादरमभाषत।**

**सुधा—**इति लेखेति। इति=इत्थम्। लेखलिखितप्रणयसुभाषितामृतरसप्लवेन—

लेखे=पत्रे, लिखितम्=अङ्कितम्, यत्प्रणयसुभाषितम्=प्रेमवार्ताकथनम्, तदेवामृतरसः=सुधारसः, तस्य प्लवेन=प्रवाहेण। अप्लावितहृदयः—आप्लावितं हृदयम्=उरः मनो वा यस्य सः। विधे=भाग्य! मे=मम। पक्षिण इव=खगस्येव। पक्षयुगम्=पुंखद्वयम्। विधेहि=कुरु। येन=पक्षयुगलेन। उड्डीय=उड्डयनं कृत्वा। ताम्=दमयन्तीम्। पश्यामि=अवलोकयामि। इति=एवम्। चिन्तयन्=विचारयन्। नरपतिः=भूपतिः। पुरतः=समक्षम्। स्थितम्=अवस्थितम्। तम्=उक्तम्। प्रियवार्त्तिकम्=प्रियवार्तानियुक्तं जनम्। उच्चरोमाञ्चनिचयेन—उच्चेन=ऊर्ध्वभूतेन, रोमाञ्चनिचयेन=रोमाञ्चसमूहेन। आश्लिष्यन्=आलिङ्गन्। इव। अभिलाषतृषितया—अभिलाषेण=कामनया, तृषिता=पिपासिता, या दृक्=दृष्टिस्तया। पिबन्निव=आस्वादयन्निव। मधुरस्मितामृतरसेन—मधुरम्=मृदु, स्मितम्=मन्दहसितम्, तदेवामृतरसः=सुधारसस्तेन। स्नपयन्निव=अभिषिञ्चन्निव। पुनः पुनः=भूयो भूयः। सादरम्=आदरसहितम्। अभाषत=अकथयत्।

**हिन्दी**—इस प्रकार पत्र में लिखे प्रणय सुभाषित रूपी अमृत रस के प्रवाह से आप्लावितहृदय होकर—"विधे! मेरे पक्षी के समान दो पंख बना दो, जिनसे उड़ कर उस (प्रिया) को देख लूँ" इस प्रकार सोचते हुए नृपति नल सामने बैठे उस प्रिय समाचार को बतलाने वाले व्यक्ति को मानों उच्च रोमाञ्चसमूह द्वारा आलिङ्गन कर, अभिलाषतृषितदृष्टि से मानो पीता हुआ, मृदु मुस्कानरूपी अमृत रस से सराबोर करता हुआ, बारम्बार सादर कहने लगा।

**'पुष्कराक्ष, सा सर्वथा विजयते राजपुत्री। यस्याः प्रसन्नमुदारसत्कान्तिश्लिष्टं सुकुमारमनेकालङ्कारभाजनं वयो वचनं च, सप्रश्रयः प्रगल्भो विवेकवान्विदग्धबुद्धिर्भवद्विधः परिजनश्च'।**

**सुधा**—पुष्कराक्ष इति। पुष्कराक्ष=अयि पुष्कराक्ष नाम वार्तिक! सा राजपुत्री=राजकुमारी दमयन्ती। सर्वथा=सर्वप्रकारेण। विजयते=उत्कृष्टा अस्ति। यस्याः=राजपुत्र्याः। प्रसन्नम्=प्रमुदितम्। उदारसत्कान्तिश्लिष्टम्—उदारम्=रम्यम्, सत्कान्ति=तेजस्वि, श्लिष्टम्=सुविभक्तसर्वावयवम्। सुकुमारम्=सुकोमलम्, अनेकालङ्कारभाजनम्=बहुभूषणपात्रम्। वयः=आयुः। वचनम्=वाणी। वयःशब्देन तदाधारभूतं शरीरम्। पक्षे—प्रसन्नम्=झटिति अर्थप्रतीतिकृत्। उदारम्=महार्थम्। कान्तिः=औज्ज्वल्यम्। सप्रश्रयः=सानुनयः। प्रगल्भः=चतुरः। विवेकवान्=ज्ञानशीलः। विदग्धबुद्धिः=कुशलधीः। भवद्विधः=श्रीमत्समः=सेवकः। अत्रोपमालङ्कारः।

**हिन्दी**—हे पुष्कराक्ष! वह राजपुत्री सर्वथा उत्कृष्ट है जिसका प्रसन्न, उदार, सत्कान्तियुक्त, सुकुमार, बहुविध अलङ्कारभाजन, आयु तथा वचनों वाला और आप जैसा नम्र, चतुर, विवेकवान्, चतुरबुद्धि वाला जिसका परिजन है।

**तत्कथय 'कथनीयकीर्तिः क्वास्ते कथमास्ते कं विनोदमनुतिष्ठति केन**

**व्यापारेण परिणामयति वासरं वाऽसौ भवत्स्वामिसुता' इत्येवमुक्तः स पुनः पल्लवयन्ननुरागकन्दलं नलमलपत् ।**

**सुधा—तदिति ।** तत्=अतः । कथय=वद । कथनीयकीर्तिः—कथनीया= वर्णनीया । कीर्तिः=यशः यस्याः सा । क्व=कुत्र । आस्ते=वर्तते । कथम्=केन प्रकारेण । कं विनोदम्=कं मनोरञ्जनम् । अनुतिष्ठति=अनुवर्तते । केन व्यापारेण=केनोद्यमेन । वा=अथवा । भवत्स्वामिसुता—भवतः=श्रीमतः, स्वामिनः= नृपतेः, सुता=दुहिता । असौ=सा । वासरम्=दिवसम् । परिणामयति=यापयति । इति । एवम्=इत्थम् । उक्तः=कथितः । सः=असौ । पुनः=भूयः । अनुरागकन्दलम्—अनुरागस्य=प्रेम्णः, कन्दलानि=अङ्कुराणि यस्मिन् सः तम् । नलम्= नलनृपतिम् । पल्लवयन्=आनन्दयन् । अलपत्=अवोचत् ।

**हिन्दी**—अतः बतलाओ—तुम्हारी वह वर्णनीय कीर्ति वाली नृपसुता दमयन्ती कहाँ है, कैसी है, किस वस्तु से मन बहलाती है तथा किस व्यापार के द्वारा अपने दिन व्यतीत कर रही है ? इस प्रकार पूछे जाने पर वह (पुष्कराक्ष) पुनः अनुरागाङ्कुर वाले राजा नल को पल्लवित ( आनन्दित ) करता हुआ कहने लगा ।

**त्वद्देशागतवायसाय ददती दध्योदनं पिण्डितं**
**त्वन्नाम्नः सदृशे दृशं निदधती वन्येऽपि मुग्धा नले ।**
**त्वत्सन्देशकथार्थिनी मृगयते तान् राजहंसान्पुनः**
**क्रीडोद्यानतरङ्गिणीतरुतलच्छायासु वापीषु च ।। २२ ।।**

**अन्वयः**—त्वद्देशागतवायसाय पिण्डितं दध्योदनम् ददती, त्वन्नाम्नः सदृशे वन्ये नले अपि दृशम् निदधती, मुग्धा त्वत्सन्देशकथार्थिनी पुनः कीडोद्यानतरङ्गिणी तरुतलच्छायासु वापीषु च तान् राजहंसान् मृगयते ।। २२ ।।

**सुधा—त्वद्देशेति ।** त्वद्देशागतवायसाय—त्वत्=तव, देशात्=वासस्थानात्, आगताय=समागताय, वायसाय=काकाय । पिण्डितम्=पिण्डवत्कृतम् । दध्योदनम्= दधिभक्तम् । ददती=प्रयच्छती । त्वन्नाम्नः=तवाभिधानकथनात् । सदृशे=समाने । वन्ये=जाङ्गलीये । नले=नलनामघासविशेषे अपि । दृशम्=दृष्टिम् । निदधती= धारयन्ती । मुग्धा=प्रेमविह्वला । त्वत्सन्देशकथार्थिनी=तव सन्देशवार्ताभिलाषिणी । दमयन्ती । पुनः=बारम्बारम् । क्रीडोद्यानतरङ्गिणीतरुतलच्छायासु—क्रीडोद्यानतरङ्गिणीषु=लीलावाटिकासु नदीषु तरुतलच्छायासु=वृक्षाधःछायासु । वापीषु ='वाउली' इत्येतासु च । तान्=कथितान् । राजहंसान्=राजमरालान् । मृगयते =अन्वेषयति । शार्दूलविक्रीडितं वृत्तम् ।। २२ ।।

**हिन्दी**—आपके देश की ओर से आए हुये कौवे को पिण्ड बनाकर दही भात देती ( खिलाती ) है, आपके नाम की समानता रखने वाली नल नाम की जंगली घास पर टकटकी बाँध कर देखने लगती है। प्रेम विह्वल, आपकी सन्देशवार्ता की

इच्छुक दमयन्ती बार बार क्रीडोद्यानों, नदियों तथा वृक्षों की छायाओं व बाउलियों ( जलाशयों ) पर उन राजहंसों को खोजती रहती है ॥ २२ ॥

**अपि च । साम्प्रतं तथा—**

**त्वद्देशागतमारुतेन मृदुना संजातरोमाञ्चया**
**त्वद्रूपाञ्चितचारुचित्रफलके निर्वापयन्त्या दृशम् ।**
**त्वन्नामामृतसिक्तकर्णपुटया त्वन्मार्गवातायने**
**नीचैः पञ्चमगीतिगर्भितगिरा नक्तंदिनं स्थीयते ॥ २३ ॥**

अन्वयः—त्वद्देशागतमारुतेन मृदुना सञ्जातरोमाञ्चया, त्वद्रूपाञ्चितचारुचित्रफलके दृशं निर्वापयन्त्या, त्वन्मार्गवातायने त्वन्नामामृतसिक्तकर्णपुटया, नीचैः पञ्चम-गीतगर्भितगिरा नक्तं दिनं स्थीयते ॥ २३ ॥

**सुधा**—त्वद्देशेति । साम्प्रतम्=इदानीम् । त्वद्देशागतमारुतेन=तव निवासस्थानादायातेन पवनेन । मृदुना=शीतलेन । सञ्जातरोमाञ्चया—सञ्जातम्=सम्भूतम्, रोमाञ्चं यस्याः सा तया । त्वद्रूपाञ्चितचारुचित्रफलके=तव रूपानुकृतौ रुचिरचित्रपटले । दृशम्=दृष्टिम् । निर्वापयन्त्या=प्रक्षिपन्त्या । त्वन्मार्गवातायने=तव गमनमार्गगवाक्षे । त्वन्नामामृतसिक्तकर्णपुटया=तव नामरूपसुधासिक्तकर्णपुटया । नीचैः=मन्दम् । पञ्चमगीतिगिरा=पञ्चमस्वरवाण्या गायन्त्या । नक्तंदिवम्=अहोरात्रम् । स्थीयते=स्थिरीभूयते । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

हिन्दी—और भी—तुम्हारे निवास स्थान की ओर से आने वाली मृदुल वायु से उसे रोमाञ्च हो उठता है, तुम्हारे रूप की प्रतिकृति वाले सुन्दर चित्र फलक पर वह टकटकी बाँधे रहती है । तुम्हारे आने की मार्ग की खिड़की पर तुम्हारे ही नाम रूपी अमृत रस से कर्ण पुटों से खींचती हुई धीरे धीरे पञ्चम स्वरयुक्त वाणी से गुनगुनाती हुई रात दिन बैठी रहती है ॥ २३ ॥

**एवमनुगुणमनुरागस्य, सदृशं शृङ्गारस्य, सहोदरमादरस्य, प्रियं प्रेमप्रपञ्चस्य, प्रोत्साहनमनङ्गस्य, अनुकूलमुत्कण्ठायाः, समुचितमभिनिवेशस्य, कौतुकजननं जल्पति पुष्कराक्षे, श्रवणकुतूहलिनि विस्मृतान्यव्यापारे तन्मयतामिवानुभवति भूभुजि, जरठीभवत्सु पूर्वाह्णवेलालवेषु, गगनमध्यासन्नवर्त्तिनि व्रजति तीव्रतां ब्रध्नमण्डले, स्खलयति पथि पथिकानसह्योर्मिणि घर्मजाले, जलाशयाननुसरत्सु पिपासाकूततरलिततारकेषु श्वासिषु श्वापदेषु, पङ्किलकूलकर्दमविमर्दोद्यतेषु सरित्परिसरवनविहारिकरिवराहमहिषमण्डलेषु, विटपिकोटरकुटीरनीडनिलयनिलीयमानेषु संपुटितपक्षेषु पक्षिषु कूलकुलायकोणकूणितकोकूयमानकुक्कुहेषु गिरिसरित्सुरङ्गाङ्गणेषु रङ्गत्कुरङ्गचर्वितखर्वदूर्वानिलनीलनिम्नशाद्वलस्थलस्थितये हिण्डमानासु कारण्डवशिखण्डिमण्डलीषु, शिशिरनिवासवाञ्छया कूजत्सु करञ्जनिकुञ्जपुञ्जितकपिञ्जलकपोतपोतकेषु, वहति मनाङ्म्लानकोमलकुसुमकोशकोष्णा-**

**मन्दमकरन्दबिन्दूद्गारिणि तापीतीरतरङ्गस्पर्शसेव्ये मध्याह्नमरुति, श्रमवशविलोलमीलन्नयननीलोत्पलासु बहलतरुतलच्छायामश्रयन्तीषु सीदत्सैनिकनितम्बिनीषु प्रस्तावपाठकः पपाठ ।**

सुधा—एवमिति । एवम्=इत्थम् । अनुरागस्य=प्रेम्णः । अनुगुणम्=अनुकुलम् । शृङ्गारस्य सदृशम्=शृङ्गारानुकूलम् । आदरस्य=सम्मानस्य । सहोदरम्=बन्धुम् । प्रेमप्रपञ्चस्य=अनुरागप्रपञ्चस्य । प्रियम्=रुचिरम् । अनङ्गस्य=मदनस्य । प्रोत्साहनम्=उद्दीपकम् । उत्कण्ठायाः=उत्सुकतायाः । अनुकूलम्=अनुरूपम् । अभिनिवेशस्य=प्रवृत्तेः । समुचितम्=उपयुक्तम् । कौतुकजननम्=आश्चर्योत्पादकम् । पुष्कराक्षे=तन्नामपथिकजने । जल्पति=कथयति सति । श्रवणकुतूहलिनि—श्रवणे=आकर्णने, कौतूहलं यस्य तादृशि । विस्मृतान्यव्यापारे—विस्मृतम्=विस्मरणे नीतम्, अन्यत्=अपरम्, व्यापारम्=कर्म, यस्य तादृशि । भूभुजि=राजनि नले । तन्मयताम्=तल्लीनताम् । इव=समम् । अनुभवति=अनुभूतिं कुर्वति । पूर्वाह्णवेलालवेषु=पूर्वाह्णवेलायाः=प्रातःकालस्य, लवेषु=क्षणेषु । जरीभवत्सु=वृद्धत्वं गतेषु । गमनमध्यासन्नवर्तिनि—गगनमध्यस्य आकाशान्तरस्यासन्ने=निकटे, वर्तत इति तादृशि । ब्रध्नमण्डले=घर्ममण्डले । तीव्रताम्=प्रखरताम् । व्रजति=गच्छति । पथि=वर्त्मनि । पथिकान्=पथिकजनान् । असह्योष्मणि—असह्या=सोढुं, योग्या सह्याः न सह्या, असह्या उष्मा=उष्णता यत्र तस्मिन् । घर्मजाले=घर्मसमूहे । स्खलयति=पातयति । पीपासाकूततरलिततारकेषु—पिपासायाः=तृष्णायाः, आकूतेन=अभिप्रायेण, तरलिताः=चञ्चलाः, तारकाः=कनीनिकाः, यैस्तेषु श्वासिषु=द्रुतश्वसितेषु । श्वापदेषु=पशुषु । जलाशयान्=तडागानि । अनुसरत्सु=अनुगच्छत्सु । सरित्परिसरवनविहारिकरिवराहमहिषमण्डलेषु—सरिताम्=नदीनाम्, परिसरेषु=तटेषु, वनेषु च विहरन्तीति तादृशेषु करिणाम्=गजानाम्, वराहाणाम्=शूकराणाम्, महिषाणाञ्च, मण्डलेषु=वृन्देषु । पङ्किलकूलकर्दमविमर्दितोद्यतेषु—पङ्किलानि=कर्दमयुक्तानि, यानि कूलानि=नदीतटानि, तेषां कर्दमस्य=पङ्कस्य, विमर्दिताय=सम्मर्दनायोद्यतेषु=तत्परेषु । सम्पुटितपक्षेषु—सम्पुटितानि=संयुक्तानि, पक्षाणि=पुंखानि येषां ते, तेषु । पक्षिषु=खगेषु । विटपिकोटरकुटीरनीडनिलयनिलीयमानेषु—विटपिनाम्=वृक्षाणाम्, कोटराणि एव कुटीराणि तेषु नीडरूपाणि निलयानि=गृहाणि, तेषु निलीयमानेषु=प्रच्छन्नेषु । कूलकुलायकोणकूणितकोकूयमानकुक्कुटेषु—कूलानाम्=तटवर्तिनाम्, कुलायानाम्=नीडानाम्, कोणानि, तेषु कोकूयमाननि=कूजितानि कुक्कुटानि येषु तादृशेषु । गिरिसरित्सुरङ्गाङ्गणेषु—गिरीणाम्=पर्वतानाम्, सरिताम्=नदीनाम्, सुरङ्गाः=सन्धयस्तदङ्गणेषु । रङ्खत्कुरङ्गचर्वितखर्वदूर्वानलनीलनिम्नशाद्वलस्थलस्थितये—रङ्खद्भिः=पर्यटद्भिः, कुरङ्गैः=मृगैश्चर्वितेन=चर्वणेन, खर्वा=खण्डिता, दूर्वा=शाद्वला, नलनीलानि=नलनामवन्यनीलवर्णतृणानि च यत्र तादृशे, निम्नशाद्वलस्थले=निम्नघासप्रदेशे । स्थितये=निवासाय, कारण्डवशिखण्डिमण्डलीषु=वनकुक्कुट-मयूरवृन्देषु ।

हिण्डयमानासु=मृग्यमाणासु । शिशिरनिवासवाञ्छया—शिशिरे=शीतस्थले निवासाय वाञ्छा=अभिलाषा तया । करञ्जनिकुञ्जपुलिनकपिञ्जलकपोतपोतकेषु—करञ्जानाम्=करञ्जवृक्षाणाम्, निकुञ्जेषु=लतागुल्मेषु, पुलिनेषु=नदीतटेषु च, कपिञ्जलानाम्=कपोतानां च, पोतकाः=शिशवस्तेषु । कूजत्सु=कलरवं कुर्वत्सु । मनाङ्म्लानकोमलकुसुमकोशकोष्णामन्दमकरन्दबिन्दूद्गारिणि—मनाक्=किञ्चित्, म्लानेषु=मलिनेषु, कोमलकुसुमकोशेषु=मृदुपुष्पकोशेषु, कोष्णानि=ईषदुष्णानि, अमन्दानि च मकरन्दबिन्दूनि=मधुरसबिन्दूनि, तदुद्गारिणी=तद्वर्षिणि तापीतीरतरङ्गस्पर्शसेव्ये—ताप्याः=यमुनायाः, तीरस्य=तटस्य, तरङ्गाणाम्=वीचीनाम्, स्पर्शेन सेव्ये=सेवनीये । मध्याह्नमारुति=मध्यन्दिनस्य पवने । वहति=प्रवहति । श्रमवशविलोलमीलन्नयननीलोत्पलासु—श्रमवशात्=परिश्रमात्, विलोलानि=चञ्चलानि, मीलन्ति=निमीलन्ति, नयनानि=लोचनानि, तान्येवोत्पलानि=कमलानि, यासां तासु । सीदत्सैनिकनितम्बिनीषु—सीदन्ती=श्रमिताः याः सैनिकानाम्=योद्धनाम्, नितम्बिन्यः=कामिन्यस्तासु । बहलतरुतलच्छायायाम्—बहलतरूणाम्=सघनवृक्षाणाम्, तले=अधस्तात् या छाया तस्याम् आश्रयन्तीषु=विश्रान्तासु । प्रस्तावपाठकः=प्रस्तावस्य पाठकर्त्ता । पपाठ=अपठत् ।

**हिन्दी**—इस प्रकार अनुराग के अनुकूल, शृङ्गार के सदृश, आदर के समगुण, प्रेम-प्रपञ्च के प्रेमी, मदन के उद्दीपक, उत्कण्ठा के अनुकूल, प्रकृति के अनुरूप, कौतूहलवश अन्यथा बातों को भूलकर तन्मयता का अनुभव करने लगा। उस समय पूर्वाह्नवेला ढल चुकी थी। मध्याकाशवर्ती सूर्य-मण्डल प्रखर हो गया था। मार्ग में पथिक असह्य गर्मी वाले धूपसमूह में व्याकुल हो रहे थे। प्यास से आकुल चञ्चल कनीनिकाओं वाले लम्बी-लम्बी श्वासें खींचते ( हांफते ) हुए पशु जलाशयों की ओर जा रहे थे। नदियों के तटों तथा वनों में निवास करने वाले हाथी-शूकर तथा महिषों के वृन्द कीचड़युक्त तटों की कीचड़ को उछालने लगे थे। पंख समेटे हुए पक्षी वृक्षों के कोटरों में नीडरूपी कुटीरों वाले घरों में छिप गये थे। नदी तटों के घोंसलों के कोनों में बैठे हुये कुक्कुट कूँ कूँ कर रहे थे। पर्वतों तथा सरिताओं के सन्धि वाले भागों पर घूमते हुए हिरणों के द्वारा खाये जाने से टूटी दूब तथा नल-नामक विशेष घास के नीले तिनकों वाले निचले हरे भरे ( घासयुक्त ) मैदानों में ठहरने के लिए चक्कर काट रहे थे। शीतल स्थान पर रहने की कल्पना से कारण्डवों ( वनकुक्कुटों ) तथा मयूरों के झुण्ड कूज रहे थे। करञ्जवृक्षों के निकुञ्जों में कपिञ्जलों तथा कपोतों के शावक इकट्ठे हो चुके थे। कुछ कुछ म्लान कोयल पुष्पकोषों में मामूली गर्म तथा अमरन्द मकरन्द बिन्दुओं की वर्षा करने वाला तापी ( यमुना ) तट की तरङ्गों के स्पर्श से सेवन करने योग्य मध्याह्न-पवन बह रहा था। थकी हुई सैनिकों की रमणियाँ श्रमवश चञ्चल नयनरूपी नीलकमल बन्द करती हुई घने वृक्षों के नीचे छाया में विश्राम करने लगी थीं। इसी समय प्रस्ताव-पाठक ने पढ़ा—

**विचित्राः पत्त्रालीर्दलयति गलत्स्वेदसलिलै-**
**रमन्दं मृद्नाति प्रमदकरिकुम्भस्तनतटीः।**
**प्रबन्धेनाक्रामञ्जनजघनजङ्घोरुयुगलं**
**श्रमः सेनाङ्गेषु प्रसरति शनैः कामुक इव ॥ २४ ॥**

अन्वयः—सेनाङ्गेषु श्रमः कामुक इव शनैः प्रसरति। विचित्राः पत्त्रालीः गलत्स्वेदसलिलैः दलयति। प्रमदकरिकुम्भस्तनतटीः अमन्दं मृद्नाति। जनजघनजंघोरुयुगलं प्रबन्धेन आक्रामन् ( आस्ते ) ॥ २४ ॥

**सुधा—विचित्रा इति।** सेनाङ्गेषु—सेनायाः=बलस्य, अङ्गेषु=भागेषु। श्रमः =परिश्रमः। कामुक इव=कामासक्त इव। शनैः=मन्दम्। प्रसरति=विस्तारं याति। विचित्राः=चित्राः। पत्त्रालीः=वाहनावलीः। गलत्स्वेदसलिलैः—गलन्ति =प्रस्रवन्ति, यानि स्वेदसलिलानि=स्वेदबिन्दूनि, तैः। दलयति=पीडयति। प्रमदकरिकुम्भस्तनतटीः—प्रमदानाम्=मत्तानाम्, करिणाम्=गजानाम्, कुम्भस्तनानि, एव तटचस्ताः। अमन्दम्=मलिनम्। मृद्नाति=मर्दयति। जनजघनजंघोरुयुगलम्—जनस्य=कामिनीजनस्य, जघनजंघोरुयुगलम्—जघनजंघा-उरुद्वयम्। च प्रबन्धेन—प्रकृष्टो बन्धः प्रबन्धस्तेन=विशिष्टबन्धेन। आक्रामन्=आक्रमणं कुर्वन् आस्ते इति। शिखरिणी वृत्तम् ॥ २४ ॥

**हिन्दी**—सेना के विभिन्न अङ्गों में श्रम कामुक के समान धीरे-धीरे फैल रहा रहा है। वह विचित्र पत्रावलियों ( सवारियों ) को बह रहे पसीने की बूँदों से व्यथित कर रहा है। मत्तगजों के कुम्भस्थल रूपी स्तनतटों को मलिन कर रहा है। कामिनीजन के जघन-जंघा तथा दोनों उरुओं पर विशेष ( उत्कृष्ट ) बन्ध के साथ आक्रमण कर रहा है ( अर्थात् सेना के हाथी घोड़े सैनिक आदि सभी नितान्त थक चुके हैं ) ॥ २४ ॥

**अपि च—**

**कूजत्क्रौञ्चं चटुलकुररद्वन्द्वमुन्नादिहंसं**
**क्रीडत्क्रोडं निपतितलतापुष्पकिञ्जल्कहारि।**
**अस्याः सान्द्रद्रुमवनतलश्रान्तसुप्ताध्वनीनं**
**रोधः सिन्धोः स्थगयति भवत्सैनिकानां प्रयाणम् ॥ २५ ॥**

अन्वयः—कूजत्क्रौञ्चं चटुलकुररद्वन्द्वम् उन्नादिहंसं क्रीडत्क्रोडं निपतितलतापुष्पकिञ्जल्कहारि सान्द्रद्रुमवनतलश्रान्तसुप्ताध्वनीनं भवत्सैनिकानां प्रयाणं अस्याः सिन्धोः रोधः स्थगयति ॥ २५ ॥

**सुधा—कूजदिति।** कूजत्क्रौञ्चम्—कूजन्तः=कलरवं कुर्वन्तः, क्रौञ्चाः= क्रौञ्चपक्षिणः यत्र तत्। चटुलकुररद्वन्द्वम्—चटुलानाम्=चपलानाम्, कुरराणाम्= कुररपक्षिणाम्, द्वन्द्वानि=मिथुनानि, यत्र तत्। उन्नादिहंसम्—उत्=उच्चैः, नदन्तीति तादृशाः हंसाः=मरालाः यत्र तत्। क्रीडत्क्रोडम्—क्रीडन्तः=खेलन्तः,

क्रोडाः=शूकराः यत्र तत्। निपतितलतापुष्पकिञ्जल्कहारि—निपतताम्=पतनशीलानाम्, लतानाम्=वल्लरीणाम्, पुष्पाणाम्=कुसुमानाम्, किञ्जल्केन=परागेण, हारि=मनोरमम्, यत्र तत्। सान्द्रद्रुमवनतलश्रान्तसुप्ताध्वनीनम्—सान्द्रस्य=सघनस्य, द्रुमवनस्य=वृक्षसमूहस्य, तले, श्रान्ताः=क्लान्ताः, अत एव सुप्ताः=प्रसुप्ताः, अध्वनीनाः=पथिकाः यत्र तत्। भवत्सैनिकानाम्=भवतः वीराणाम्। प्रयाणाम्=प्रस्थानम्। अस्याः=एतस्याः यमुनायाः। सिन्धोः=नद्याः। रोधः=तटम्। स्थगयति=अवरोधयति। स्रग्धरा वृत्तम् ॥ २५ ॥

हिन्दी—जहाँ क्रौञ्चपक्षी कल कूजन कर रहे हैं, चञ्चल कुररपक्षियों के जोड़े हैं, हंस उच्च स्वर से कूजन कर रहे हैं, कोल ( शूकर ) क्रीड़ा कर रहे हैं, गिरे हुए लता-पुष्पों का पराग मनोरम लग रहा है। सघन वृक्ष वनों के नीचे थके हुए पथिक निद्रा का आनन्द ले रहे हैं ( वहाँ ) आपके सैनिकों का प्रयाण ( प्रस्थान ) इस नदी तट को अवरुद्ध कर रहा है ॥ २५ ॥

**राजा तु तदाकर्ण्य 'बाहुक, बाहूनां बहुमतो बाहूल्यादिहैव वासः, तद्वद सैनिकान्, अवतरत तापीतीरतरुतलाश्रयान्, आश्रयत श्रमच्छिदच्छायाः, कुरुत पटकूटीः, कारयत कायमानानि, मुञ्चतामन्दमृदुशाद्वलेषवबलान्बलीवर्दकान्, कूर्दयत कर्दमे महिषान्, खादयत वेसरीभिर्वंशकरीराङ्कुरान्, प्रचारयत क्रमेण क्रमेलकान्, अवगाहावसाने पृष्ठावकीर्णपुलिनपङ्कपांसवो विहरन्तु स्ववशं वंशस्तम्बेषु स्तम्बेरमाः, तरुबुध्नेषु बध्नीत तीव्रवेगान्वेगसरान्, अवतरन्तु तापीतीरतरङ्गेषु तुरङ्गाः, शिशिरतरङ्गानिलान्दोलितविविधविकचमञ्जरीजालजटिलेषूत्फुल्ललताखण्डमण्डपेषु मध्याह्नसमयमतिवाहयन्तु किन्नरमिथुनानि' इति सेनापतिमादिदेश।**

**सुषा—राजेति।** राजा तु=नृपस्तु। तत्=तथाविधम्। आकर्ण्य=श्रुत्वा। बाहुक=अयि बाहुक ! बहूनाम्=अधिकांशानाम्। बहुमतः=विचाराधिक्यम्। बाहुल्यात्=बहुमतत्वात्। इह=अत्र, सिन्धो रोधसि एव। वासः=अधिवासः भवेत्। तत्=अतः। सैनिकान्=भटान्। वद=भण। तापीतीरतरुतलाश्रयान्—तापीतीरस्य=यमुनानदीतटस्य, तरुतलाश्रयान्=पादपतलाश्रयान्। अवतरत=अवतरणं कुरुत। श्रमच्छिदच्छायाः—श्रमम्=परिश्रमम्, छिन्दन्तीति=नाशयन्तीति तादृश्यश्छायास्ताः। आश्रयत=आश्रयं कुरुतः। पटकुटीः=वस्त्रगृहाणि। कुरुत=रचयत। कायमानानि=तृणमयगृहाणि। कारयत। अमन्दमृदुशाद्वलेषु=हरितकोमलघासेषु। अबलान्=अशक्तान्। बलीवर्दकान्=वृषभान्। मुञ्चत=त्यजत। कर्दमे=पङ्के। महिषान् कूर्दयत=उच्चालयत। वेसरीभिः=गर्दभैः। वंशकरीराङ्कुरान्—वंशानाम्=कीचकानाम्, करीराणाम्=करीरवृक्षाणाञ्च, अङ्कुरान्=कन्दलीः। खादयत=खादनाय दत्त। क्रमेण=क्रमानुसारम्। क्रमेलकान्=उष्टान्। प्रचारयत=प्रचालयत। अवगाहावसाने=स्नानसमाप्तौ। प्रष्ठावकीर्णपुलिन-

पङ्कपांसवः—पृष्ठेषु=पृष्ठभागेषु, अवकीर्णाः=विकीर्णाः, पुलिनस्य=तटप्रदेशस्य, पङ्कपासवः=कदर्मरेणवः, यैस्तादृशाः गजाः। स्ववशम्=इच्छानुसारम्। वंशस्तम्बेषु=वेणुकाननेषु। विहरन्तु=विचरन्तु। तीव्रवेगान्=द्रुतगतीन्। वेगसरान्=मिश्रघोटकान्। तरुबुध्नेषु=वृक्षस्तम्भेषु। बध्नीत=बन्धने प्रापयत। तापीतीरतरङ्गेषु=यमुनातटविचिषु। तुरङ्गाः=अश्वाः। अवतरन्तु=अवतरणं कुर्वन्तु। किन्नरमिथुनानि=किम्पुरुषयुगलानि। शिशिरतरङ्गानिलान्दोलितविविधविकचमञ्जरीजालजटिलेषु—शिशिरतरङ्गाणाम्=शीतलवीचीनाम्, वातैः=पवनैः। आन्दोलितानि=कम्पमानानि, विविधविकचमञ्जरीजालजटिलानि=बहुविधविकसितमञ्जरीजालयुक्तानि, तेषु। उत्फुल्ललताखण्डमण्डपेषु—उत्फुल्लाताम्=विकसितानाम्, लताखण्डानाम्=वीरुधखण्डानाम्, मण्डपेषु=मण्डलेषु। मध्याह्नसमयम्=माध्यन्दिनकालम्। अतिवाहयन्तु=यापयन्तु। इति=एवम्। सेनापतिम्=बलाधिकृतम्। आदिदेश=आदेशं चकार।

**हिन्दी**—राजा ने यह सुन कर—'हे बाहुक! अधिकांश का बहुमत है कि यहीं पड़ाव किया जाय। अतः सैनिकों से कह दो कि तापी नदी के तटवर्ती वृक्षों की छाया में उतरें तथा श्रम (थकावट) दूर करने वाली छाया में आश्रय लें। पट कुटीरें (राउटियाँ) खड़ी कर लें। तृण कुटीरें बनायें। ताजी कोमल दूब पर थके (अशक्त) बैलों को छोड़ दें। भैंसों को कीचड़ में कुदाएँ। गधों को बाँस तथा करीरों के अंकुर खिलायें। क्रमशः ऊँटों को घुमा लें। स्नान कर लेने के पश्चात् अपनी पीठों पर नदी तट की कीचड़ तथा रेणु (धूल) को डाले हुए हाथी इच्छानुसार बाँसों के झुरमुटों में विहार करें। तीव्र वेग वाले खच्चरों को वृक्षों के तनों में बाँध दिया जाय। तापी नदी की तटवर्ती तरङ्गों में घोड़े उतरें। शीतल तरङ्गों वाले पवन से आन्दोलित अनेक प्रकार के विकसित मञ्जरी-जाल से जटिल प्रफुल्लित लताखण्ड-मण्डपों में किन्नर-युगल दोपहरी का समय व्यतीत करें''। इस प्रकार सेनापति को आदेश दिया।

**स्वयमपि पुष्कराक्षसूचितार्थपथश्रमखिन्नकिन्नरमिथुनदिदृक्षया कृतमृगयाविनोदव्यपदेशी दिशि दक्षिणस्यामाप्तस्तोकपरिवारपरिवृतो झरन्निर्झरक्षात्कारिवारिरमणीयासु रममाणपुलिन्दनितम्बिनीवदनचन्द्रबिम्बतासु सान्द्रद्रुमद्रोणीषु विचरितुमारभत।**

**सुधा—स्वयमिति।** स्वयमपि=आत्मनाऽपि राजा। पुष्कराक्षसूचितार्थपथश्रमखिन्नकिन्नरमिथुनदिदृक्षया—पुष्कराक्षेण=तन्नामपथिकेन, सूचिते=वर्णिते, अर्द्धपथे=अर्द्धमार्गे, एव, श्रमेण=परिश्रमेण, खिन्नेन=आकुलितेन, किन्नरमिथुनम्=किन्नरयुगलम्, दिदृक्षया=दृष्टुमिच्छया। कृतमृगयाविनोदव्यपदेशी—कृतः=विहितः, मृगयायाः=आखेटस्य, विनोदः=आमोदः, तस्य यो व्यपदेशः=व्याजो, येन सः। आप्तस्तोकपरिवारपरिवृतः—आप्तः=विश्वस्तः, स्तोकपरिवारः=अल्पपरिवारः,

तेन परिवृतः=आवृतः। दक्षिणस्यां दिशि=अवाच्यां दिशायाम्। झरन्निझर-झात्कारिवारिरमणीयासु—झरद्भिः=पतद्भिः, निर्झरैः=स्रोतोभिः, 'झात्' इति ध्वनिकारि यद् वारि तेन, रमणीयाः=मनोरमाः, यास्तादृशीषु। रममाणपुलिन्द-नितम्बिनीवदनचन्द्रबिम्बितासु—रममाणानाम्=रमणं कुर्वतीनाम्, पुलिन्दनितम्बिनी-नाम्=किरातस्त्रीणाम्, वदनचन्द्रम्=मुखचन्द्रम्, बिम्बितम्=प्रतिबिम्बितं यत्र तासु। सान्द्र-द्रुमद्रोणीषु=सघनवृक्षपर्वतगुहासु। विचरितुम्=भ्रमितुम्। आरभत =प्रारेभे।

**हिन्दी**—( राजा नल ने ) स्वयं भी पुष्कराक्ष द्वारा सूचित आधे मार्ग में ही परि-श्रम से थके किन्नरयुगल को देखने की इच्छा से आखेट के मनोरञ्जन के बहाने कति-पय प्रामाणिक पारिचारकों के साथ घने वृक्षों तथा पर्वतगुफाओं वाली दक्षिणी दिशा में विचरण करना आरम्भ कर दिया, जहाँ झर्झर् ध्वनि करने वाले मनोरम झरने बह रहे थे तथा रमण कर रही पुलिन्द सुन्दरियों के मुखचन्द्र उनमें प्रतिबिम्बित हो रहे थे।

**पुरः स्थितश्चास्य वर्त्म दर्शयन् जात्यतरतुरङ्गमारोपितः पुष्कराक्षोऽप्य-भाषत।**

**सुधा—पुर इति।** च=तथा। पुरस्थितः—पुरः=समक्षम्, स्थितः=अवस्थितः। पुष्कराक्षः=तन्नामकोऽपि। जात्यतरतुरङ्गमम्=उत्तमकोटिवाजिनम्। आरोपितः= आरूढः। अस्य=नृपस्य। वर्त्म=मार्गम्। दर्शयन्=अवालोकयन्। अभाषत=अवोचत्।

**हिन्दी**—सामने स्थित पुष्कराक्ष भी उत्तमकोटि के घोड़े पर बैठा हुआ उसका मार्ग दिखलाता हुआ कहने लगा।

**देव, मार्कण्डेयप्रमुखमहामुनिनिवासपवित्रिताः पुण्याः खल्विमाः पयोष्णीपरिसरवनभूमयः।**

**सुधा—देव इति।** देव=राजन्! मार्कण्डेय-प्रमुखमहामुनिनिवासपवित्रिताः— मार्कण्डेयप्रमुखाः=मार्कण्डेयादयः, महामुनयः=महर्षयः, तेषां निवासेन=आवासेन, पवित्रिताः=पवित्रीकृताः। खलु=किल। इमाः=एताः। पुण्याः=पूताः। पयो-ष्णीपरिसरवनभूमयः=काननभूमयः।

**हिन्दी**—हे राजन्! मार्कण्डेय आदि महामुनियों के निवास से पवित्र बनाई गई वास्तव में यह पुण्य पयोष्णी नदी की तटवर्ती भूमि है।

**तथाहि—श्रूयते किलास्मादुद्देशात्पूर्वदिग्भागे भगवतः पुराणपुरुषावता-रस्य परशुरामस्य जनयितुर्जमदग्नेराश्रमः। ततोऽपि नातिदूरेण सुरासुर-मौलिमालामुकुलमुक्तमकरन्दबिन्दुस्नपितपादारविन्दस्य भगवतः स्वस्वेद-प्रसरप्रवर्तितपयोष्णीप्रवाहस्य महावराहस्यायतनम्।**

**सुधा—तथाहीति।** तथाहि=यतो हि। किल=खलु। अस्मात्=एतस्मात्। उद्देशात्=भागात्। पूर्वदिग्भागे=पूर्वदिशास्थाने। पुराणपुरुषावतारस्य=विष्णो-

रवतारभूतस्य । परशुरामस्य=जामदग्न्यस्य । जनयितुः=पितुः । जमदग्नेः=जमदग्निमुनेः । आश्रमः=आश्रमस्थानम् । श्रूयते=आकर्ण्यते । ततः=तस्मात् अपि । नातिदूरे=समीप एव । सुरासुरमौलिमालामुकुलमुक्तमकरन्दबिन्दुस्नपितपादारबिन्दस्य—सुराणाम्=देवानाम्, असुराणाम्=दैत्यानाञ्च, यानि मौलिमालामुकुलानि =भालपङ्क्तिकलिकाः, तेभ्यः, मुक्तानि यानि मकरन्दबिन्दूनि=मधुकणानि, तैः स्नपिते =अभिषिक्ते, पादारविन्दे=चरणकमले यस्य, तस्य । भगवतः=प्रभोः । स्वस्वेदप्रसरप्रवर्तितपयोष्णीप्रवाहस्य—स्वस्य=आत्मनः, स्वेदस्य, यः प्रसरः=प्रवाहः, तेन प्रवर्तितः=परावर्तितः, पयोष्ण्याः=पयोष्णीनद्याः, प्रवाहः=प्रसरो, येन सः, तस्य । महावराहस्य=वराहावतारस्य, भगवतः विष्णोः । आयतनम्=स्थलम् अस्तीति ।

हिन्दी—क्योंकि—इस स्थान से पूर्व की ओर भगवान् पुराणपुरुषावतारपरशुराम जी के जन्मदाता जमदग्नि मुनि का आश्रम सुना जाता है । वहाँ से थोड़ी दूर पर देवताओं एवं दानवों के मौलिमालामुकुल से निकले मकरन्द बिन्दुओं से सराबोर चरणकमलों वाले, अपने पसीने के प्रवाह से पयोष्णी नदी के प्रवाह को परिवर्तित कर देने वाले भगवान् महावराह जी का आयतन है ।

**इतोऽप्यवलोकयतु देवः—**

**सैषा चलच्चन्द्रकिचक्रवाकचञ्चच्चकोराकुलकूलकच्छा ।**

**स्वःसीमसोपानसदृक्तरङ्गा गङ्गाप्रतिस्पर्धिपयाः पयोष्णी ॥ २६ ॥**

**इत इति ।** इतः अपि=अस्यां दिशि अपि, देवः=नृपः ! पश्यतु=अवलोकयतु—

**अन्वयः**—सा एषा चलच्चन्द्रकिचक्रवाकचञ्चच्चकोराकुलकूलकच्छा स्वःसीमसोपानसदृक्तरङ्गा गङ्गाप्रतिस्पर्धिपयाः पयोष्णी ( अस्तीति ) ॥ २६ ॥

**सुधा—सैषेति ।** सा=असौ । एषा=इयम् । चलच्चन्द्रकिचक्रवाकचञ्चच्चकोराकुलकूलकच्छा—चलच्चन्द्रकिभिः=चञ्चलमयूरैः, चक्रवाकैः=चक्रवाकपक्षिभिः, चञ्चच्चकोरैः=चपलचकोरपक्षिभिश्च, आकुलम्=व्याप्तम्, कूलकच्छम्=तटवर्तिक्षेत्रम्, यस्यास्तादृशी । स्वःसीमसोपानसदृक्तरङ्गाः—स्वःसीमायाः=स्वर्गसीमायाः, सोपानसमास्तरङ्गाः=वीचयः, यस्याः सा । गङ्गाप्रतिस्पर्धिपयाः—गङ्गायाः=सुरनद्याः, प्रतिपर्धि=प्रतिद्वन्द्वि, पयः=जलम्, यस्यास्तादृशी । पयोष्णी=तन्नाम नदीः अस्तीति । इन्द्रवज्रावृत्तम् ॥ २६ ॥

**हिन्दी**—इस ओर भी महाराज देखें—वही यह चञ्चल मयूरों, चक्रवाकों तथा चपल चकोरों से व्याप्त तट-प्रदेश वाली, स्वर्ग की सीमा तक पहुँचने वाली सीढ़ियों के समान तरङ्गों वाली, जल में गङ्गा से होड़ करने वाली पयोष्णी नदी है ॥ २६ ॥

**यस्याः पश्यैते—**

**मुक्तास्रैः श्रूयमाणां सिकतिलपुलिनप्रान्तविश्रान्तपान्थै-**
**रुन्धानं मञ्जुगीतप्रियहरिणकुलान्यम्बुपानागतानि ।**
**सान्ध्यध्यानावसाने क्षणमिव मुनयः सन्निधौ पङ्कजाना-**
**मोङ्कारोच्चाररम्यं मधुकरमधुरध्वानमाकर्णयन्ति ॥ २७ ॥**

**यस्या इति ।** पश्य = अवलोकय । यस्याः = एतस्याः । एते = इमे—

**अन्वयः**— सिकतिलपुलिनप्रान्तविश्रान्तपान्थैः, मुक्तास्रैः श्रूयमाणाम्, अम्बुपानागतानि मञ्जुगीतप्रियहरिणकुलानि रुन्धानम्, सान्ध्यमध्यावसाने पङ्कजानां सन्निधौ ओङ्कारोच्चाररम्यं, मधुकरमधुरध्वानं क्षणम् इव मुनयः आकर्णयन्ति ॥ २७ ॥

**सुधा—मुक्तास्रैरिति ।** सिकतिलपुलिनप्रान्तविश्रान्तपान्थैः—सिकताऽस्यास्तीति सिकतिलम्, सिकतिलं यत् पुलिनप्रान्तम् = तटभागम्, तत् = रेणुकामयतटभागं, तत्र विश्रान्ताः = विश्रामं गताः, ये पान्थाः = पथिकास्तैः । मुक्तास्रैः = त्यक्तनयनाम्बुभिः । श्रूयमाणाम् = आकर्ण्यमानाम् । अम्बुपानागतानि—अम्बुपानाय = जलपानार्थम्, आगतानि = आयातानि । मञ्जुगीत-प्रियहरिणकुलानि—मञ्जुगीतानि = मधुरगायनानि, प्रियाणि = रुचिकराणि, येषां तेषाम्, हरिणानाम् = मृगाणाम्, कुलानि = यूथानि । रुन्धानम् = बाधमानम् । सान्ध्यध्यानावसाने—सन्ध्यायां भवं सान्ध्यम्, तस्मिन् ध्यानस्य—अवधानस्यावसाने = समाप्तौ । पङ्कजानाम् = पद्मानाम् । सन्निधौ = सन्निकटे । ओङ्कारोच्चाररम्यम्—ओङ्कारस्य = ॐ इत्यक्षरस्योच्चारः, तद्वद् रम्यम् = रमणीयम् । मधुकरमधुरध्वानम्—मधुकराणाम् = भ्रमराणाम्, मधुरम् = मनोरमम्, ध्वानम् = ध्वनिम् । क्षणम् = निमिषमात्रम् इव । मुनयः = मुनिजनाः । आकर्णयन्ति = शृण्वन्ति । स्रग्धरावृत्तम् । तद्यथा—म्रभ्नैर्याणां त्रयेण त्रिमुनियतियुतं स्रग्धरा कीर्तितेयम् ।

**हिन्दी**—देखो—जिस नदी के यह रेतीले पुलिन-प्रदेश में विश्राम करते हुए पथिक आँसू बहाकर सुनी जाने वाली, पानी पीने के लिए मधुर, आते समय संगीत के प्रेमी हिरणों के समुदायों को रोकने वाली, सन्ध्याकालीन ध्यान समाप्त होने पर पङ्कजों के समीप बैठे मुनिजन 'ओङ्कार' के उच्चारण जैसी मनोरम मधुकरों की मधुर ध्वनि को क्षण भर के लिए सुन रहे हैं ॥ २७ ॥

**टिप्पणी**—त्रयी तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिभवत्तीर्णविकृतिः ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तव्यस्तं त्वां शरणमगृणात्योमिति पदम् ।

अर्थात् ॐ शब्द तीनों ( ऋग् यजुः साम ) वेदों, तीनों वृत्तियों, त्रिभुवनों तथा तीनों ब्रह्मा-विष्णु-महेश देवताओं का विकार-रहित अकार-उकार-मकार तीन अक्षरों द्वारा सान्निध्य कराता है । यह ब्रह्म तेज के रूप में अखिल ब्रह्माण्ड में व्याप्त होकर ब्रह्मपद भी प्राप्त कराता है । ''ओमित्येतदक्षरमिदमिति'' मंत्र द्वारा उपनिषद् में भी वर्णन किया गया है ।

**राजा तु—नमस्याः खल्वमी महानुभावाः ।**

**सुधा**—राजेति । राजा तु = नृपस्तु । खलु = नूनम् । अमी = एते । महानुभावाः = मुनयः । नमस्याः = वन्दनीयाः ।

**हिन्दी**—राजा तो—नमस्कार करने योग्य वास्तव में ये महानुभाव हैं ।

**तथाहि**—

**मृगेषु मैत्री मुदितात्मद्रष्टौ कृपा मुहुः प्राणिषु दुःखितेषु ।**
**येषां न ते कस्य भवन्ति वन्द्याः कौशेयकौपीनभृतो मुनीन्द्राः ।। २८ ।।**

अन्वयः—येषां मृगेषु मैत्री, आत्मदृष्टौ मुदिता, दुःखितेषु प्राणिषु मुहुः कृपा, ते कौशेयकौपीनभृतः मुनीन्द्राः कस्य वन्द्याः न भवन्ति ।। २८ ।।

**सुधा—मृगेष्विति ।** येषाम्=मुनीनाम् । मृगेषु=हरिणेषु पशुषु वा । मैत्री=सख्यम् । आत्मदृष्टौ—आत्मनि दृष्टिः, आत्मदृष्टिः तस्मिन् । मुदिता=प्रसन्नता । दुःखितेषु=आकुलितेषु । प्राणिषु=जीवेषु । मुहुः=बारम्बारम् । कृपा=दया । अस्ति । ते=तथाविधाः । कौशेयकौपीनभृतः=पीतवल्कलवस्त्रधारिणः । मुनीन्द्राः=मुनीशाः । कस्य=कस्य जनस्य । वन्द्याः=पूजनीयाः । न भवन्ति=नैव सन्ति । अपि तु ते सर्वेषामेव वन्द्याः भवन्ति । उपजाति वृत्तम् ।। २८ ।।

**हिन्दी**—क्योंकि—मृगों से जिनकी मित्रता रहती है, आत्मदर्शन में जो सदैव मुदित रहते हैं, दुःखी प्राणियों पर जिनकी बार बार कृपा रहती है, ऐसे कौशेय-वल्कल वस्त्रधारण करने वाले मुनिराज किसके लिए वन्दनीय नहीं होते हैं ।। २८ ।।

**इत्यवधारयँस्तान्ववन्दे ।**

**सुधा—इतीति ।** इति=इत्थम् । अवधारयन्=निश्चयन् । सः । तान्=मुनीन् । ववन्दे=प्रणनाम ।

**हिन्दी**—ऐसा निश्चय कर ( उसने ) उन्हें प्रणाम किया ।

**मुनयोऽपि 'सोऽयं सोमपीथी निषधनाथः' इत्यनुध्यानादवगम्य प्रयुक्त-ब्रह्मोक्ताशिषः, अनुगृह्णन्त इवार्द्रार्द्रैर्दृष्टिपातैः, आश्वासयन्त इव प्रिय-स्वागतप्रश्नालापेन, स्नपयन्त इव दरहसितदन्तज्योत्स्नामृतप्लवेन, आह्लाद-यन्त इवादरेण, दत्त्वार्घ्यमनन्तरमिदमवोचन् ।**

**सुधा—मुनय इति ।** मुनयः अपि=मुनिजनाः अपि । सः=असौ । अयम्=एषः । सोमपीथी=सोमपानकर्ता । निषधनाथः=निषधदेशस्य राजा । इति=एवम् । अनु-ध्यानात्=अनुचिन्तनात् । अवगम्य=ज्ञात्वा । प्रयुक्तब्रह्मोक्ताशिषः—प्रयुक्ताः ब्रह्मोक्ताः=वेदोक्ताः, आशिषः यैस्ते=प्रयुक्तवेदोक्ताशीर्वादाः । आर्द्रार्द्रैः=अतिस्नेहपूर्णैः । दृष्टि-पातैः=चक्षुक्षेपैः । अनुगृह्णन्त इव=कृपां कुर्वन्तो यथा । प्रियस्वागतप्रश्नालापेन—प्रियस्य=स्वेष्टस्य, स्वागतप्रश्नानाम्=स्वागतपृच्छानाम् । आलापेन=कथनेन । आश्वासयन्त इव=धैर्यं धारयन्त इव । दरहसितदन्तज्योत्स्नामृतप्लवेन—दरम्=अर्द्धं यद् हसितं तेन, दन्तज्योत्स्ना=रदकान्तिः, सैवामृतप्लवस्तेन । स्नपयन्त इव=स्नानं कारयन्त इव । आदरेण=सम्मानेन । आह्लादयन्त इव=मोदयन्तो यथा । अर्घ्यम्=पूजार्थं जलम् । दत्वा=प्रदाय । अनन्तरम्=पश्चात् । इदम्=एतत् अवोचन्=ऊचुः ।

**हिन्दी**—मुनिजन भी—'यही वह सोमपानकर्ता निषधराज हैं' यह ध्यानशक्ति द्वारा समझकर वेदोक्त आशीर्वाद देकर स्नेहार्द्र दृष्टिपात से मानो अनुग्रह करते हुये,

प्रियजन के स्वागत-प्रश्न की बातचीत से मानों आश्वासन देते हुए, अधहँसे दाँतों की कान्ति रूपी अमृतधारा से मानों सराबोर करते हुए, आदर से मानों प्रसन्न करते हुए अर्घ्य देकर इस प्रकार कहने लगे।

**आयुष्मन्, अस्मदीयमिह धर्मोपदेशप्रदानमेव प्रथममातिथेयमतिथिजनेष्वतोऽभिधीयसे। पुण्यं पयोऽस्याः सरितः तदेतदवगाह्य कुरु पुण्यमयमात्मानम्।**

**सुधा**—आयुष्मन्निति। आयुष्मन्=अयि दीर्घजीविन्! इह=अत्र। अस्मदीयम्=अस्माकम्। धर्मोपदेशप्रदानम् एव=धार्मिकशिक्षाप्रदानमात्रम्। प्रथमम्=प्राथमिकम्। आतिथेयम्=आतिथ्यम्। अतिथिजनेषु=अभ्यागतेषु। अतः अभिधीयसे=कथ्यसे। अस्याः=एतस्याः। सरितः=नद्याः। जलम्=वारि। पुण्यम्=पवित्रम्। तत्=अतः। एतत्=नद्याः जलम्। अवगाह्य=निमज्य। आत्मानम्=निजम्। पुण्यमयम्=पुण्ययुक्तम्। कुरु=विधेहि।

**हिन्दी**—आयुष्मन्! यहाँ हमारा धर्मोपदेश देना ही सर्वप्रथम अतिथिजनों में आतिथ्य सत्कार कहा जाता है। अतः हम कह रहे हैं। इस सरिता का जल पवित्र है। अतः इसमें स्नान कर अपने को पवित्र कर लो।

**तथाहि—**

**पर्वतभेदिपवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।**
**हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी॥ २९॥**

**अन्वयः**—पयोष्णी पश्यत। पर्वतभेदिपवित्रं नरकस्य जैत्रं बहुमतङ्गहनं हरिम् इव हरिम् इव हरिम् इव पयः वहति॥ २९॥

**सुधा—पर्वतेति।** पयोष्णी=तन्नामनदीः। पश्यत=अवलोकयत। पर्वतभेदिपवित्रम्—पर्वतम्=गोवर्द्धनगिरिम्, पक्षे—नगम्, भिनत्तीति, तम्=पर्वतविदारकम्। पवित्रम्=पावनम्। नरकस्य=नरकलोकस्य, दुर्गतेर्वा। जैत्रम्=पराभविष्णुः। बहुमतम्=बहुमान्याम्। गहनम्=अगाधम्। पयः=जलम्। हरिम् इव=विष्णुमिव। वहति=प्रवहति। पक्षे—पर्वतभेदि=गिरिविदारकः, यः पविः=वज्रम्, तं त्रायते=धारयत इति वज्रधरम्, हरिम्=इन्द्रम् इव। जैत्रम्=अभिभावुकम्। पक्षे—पर्वतभेदिषु=पर्वतवासिषु। पवित्रम्=पावनम्। नरकस्य=मानवस्य। जैत्रम्=जयशीलम्। बहुमतङ्गहनम्—बहून्=अनेकान्, मतङ्गान्=गजान्, हन्तीति तम्=अनेकगजसंहारकम्। हरिम्=सिंहम् इव। पयः=जलम्। वहति=प्रवहति। अत्रोपमायमकालङ्कारो।

**हिन्दी**—( **विष्णुपक्षमें** ) आपलोग पयोष्णी नदी देखें। पर्वत ( गोवर्द्धन ) को विदारण करने वाले, दुर्गति या नरक को पराज़ित करने वाले भगवान् विष्णु के समान पवित्र इसका जल बह रहा है

( **इन्द्रपक्ष में** ) पर्वतों के विदारक पवि ( वज्र ) को धारण करने वाले विजयी इन्द्र के समान जल बह रहा है

( सिंहपक्ष में ) पर्वतों ( गुफाओं ) में रहने वाले, मनुष्य का संहार करने वाले तथा अनेक गजों का विनाश करने वाले सिंह के समान यह जल बह रहा है ॥ २९ ॥

**राजापि—एवमेतत्—**

**महावराहाङ्गविनिर्गतायाः किमन्यदस्याः परतः पवित्रम् ।**
**यदीयमालोकनमप्यघानि निहन्ति पुंसां चिरसंचितानि ॥ ३० ॥**

**राजापीति ।** राजापि=नृपोऽपि । एवमेतत्=इत्थमेवेदम्—

**अन्वयः**—महावराहाङ्गविनिर्गतायाः अस्याः परतः अन्यत् किं पवित्रम्, यदीयम् आलोकनम् अपि पुंसां चिरसञ्चितानि अघानि निहन्ति ॥ ३० ॥

**सुधा—महावराहेति ।** महावराहाङ्गविनिर्गतायाः—महावराहस्य=वराहावतारस्य भगवतः विष्णोः, अङ्गात्=शरीरात्, विनिर्गतायाः=विनिःसृतायाः । अस्याः =एतस्याः पयोष्ण्याः । परतः=अधिकम् । पवित्रम्=पावनम् । अन्यत्=अपरम् किम् अस्ति । यदीयम्=यस्याः, जलम् । आलोकनम्=दर्शनम् । पुंसाम्=जनानाम् । चिरसञ्चितानि=बहुकालसंगृहीतानि । अघानि=पापानि । निहन्ति=नाशयति । वंशस्थं वृत्तम् ॥ ३० ॥

**हिन्दी**—राजा भी—ऐसा ही है। आदिवराह भगवान् से उत्पन्न हुई इस पयोष्णी से बढ़कर पवित्र और क्या है ? जिसका दर्शनमात्र मनुष्यों के चिर-सञ्चित पापों को नष्ट कर देता है ॥ ३० ॥

**तदेष करोमि भवतामादेशम्, इत्यभिधाय यथाविधिस्नानाय सरिन्मध्यमवातरत् ।**

**सुधा—तदिति ।** तत्=अतः । एषः=अयम् । भवताम्=श्रीमताम् । आदेशः=निर्देशः । करोमि=पालयामि । इति=एवम् । अभिधाय=कथयित्वा । यथाविधिस्नानाय—विधिपूर्वकमज्जनाय । सरिन्मध्यम्=पयोष्णीमध्यम् । अवातरत्=अवततार ।

**हिन्दी**—अतः यह आपका आदेश पालन कर रहा हूँ। यह कहकर विधिपूर्वक स्नान करने के लिए नदी में उतर गया।

**अवतीर्य च मन्त्रमार्जनप्राणसंयमसन्ध्यासूक्तजपपितृतर्पणादिसमुचिताह्निकावसाने रक्तकमलगर्भमर्घ्याञ्जलिमुत्क्षिप्य भगवतो भास्करस्य स्तुतिमकरोत् ।**

**सुधा—अवतीर्येति ।** अवतीर्य=पयोष्णीमध्ये गत्वा । मन्त्रमार्जनप्राणसंयमसन्ध्यासूक्तजपपितृतर्पणादिसमुचिताह्निकावसाने—मन्त्रमार्जनम्=मन्त्रस्नानम्, प्राणसंयमः=श्वासप्रश्वासरोधः, सन्ध्यासूक्तम्=करन्यासोऽङ्गन्यासश्च यत्र विद्यते तत्सन्ध्यासूक्तम्, जपः=मन्त्रजापः, पितृतर्पणम्=पितृभ्यो जलाञ्जलिदानम्, इत्यादिसमुचितानाम् =उपयुक्तानाम्, आह्निकानाम्=दिवसकृत्यानाम्, अवसाने=समाप्तौ । रक्तकमलगर्भमर्घ्याञ्जलिम्—रक्तकमलम्=अरुणाम्बुजम्, गर्भम्=अन्तरे, यस्य तथाविधम्, अर्घ्याञ्जलिम्=अर्घ्यम् । उत्क्षिप्य=दत्त्वा । भगवतो भास्करस्य=देवस्य सवितुः । स्तुतिम्=स्तवनम् । अकरोत्=चकार ।

हिन्दी—पयोष्णी नदी के जल में घुस कर मन्त्रों द्वारा स्नान, प्राणायाम, सन्ध्या, पाठ जप तथा पितृतर्पणादि समुचित दैनिक कार्यों के समाप्त होने पर अरुणकमल से अर्घ्य देकर भगवान् भास्कर की स्तुति की।

**जयति जगदेकचक्षुर्विश्वात्मा वेदमन्त्रमयमूर्तिः।**
**तरणिस्तरणतरण्डकमघपटलपयोनिधौ पुंसाम् ॥ ३१ ॥**

**अन्वयः**—जगदेकचक्षुः, विश्वात्मा, वेदमन्त्रमयमूर्तिः, पुंसाम् अघपटलपयोनिधौ तरणतरण्डकं तरणिः जयति ॥ ३१ ॥

**सुधा—जयतीति।** जगदेकचक्षुः—जगतः=संसारस्य, एकम्=एकमात्रम्, चक्षुः =नयनम्, योऽसौ। विश्वात्मा—विश्वस्य=जगतः, आत्मा=हृदयरूपः। वेदमन्त्रमयमूर्तिः=वेदमन्त्रयुक्तस्वरूपः। पुंसाम्=लोकानाम्। अघपटलपयोनिधौ—अघपटलस्य =पापपुञ्जस्य, पयोनिधौ=सागरे। तरणतरण्डकम्=तारकरूपः। तरणिः= सविता। जयति=सर्वोत्कृष्टो भवति। आर्यावृत्तम् ॥ ३१ ॥

**हिन्दी**—संसार के एकमात्र नयन रूप, विश्व के हृदय, वेदमन्त्रयुक्त स्वरूप वाले, लोगों के पाप पुञ्जरूपी सागर में तारक ( पार करने वाली नौका ) स्वरूप भगवान् सूर्य सर्वोत्कृष्ट हैं ॥ ३१ ॥

**तदनु च चटुलचञ्चरीककुलाकुलितकमलकुड्मलगलद्बहलमकरन्दसुरभिततरङ्गमुत्पतत्कपिञ्जलं जलमवगाह्य चिरमुत्तीर्य तीरमापृच्छ्य मुनिजनमभिवाद्य च पुनः पुलिनपालिपर्यटनाय प्रस्थितः प्रणयादनुव्रजतो मुनीन्निवर्तयन्निदमवादीत्।**

**सुधा—तदन्विति।** तदनु च=तत्पश्चाच्च। चटुलचञ्चरीककुलाकुलितकमलकुड्मलगलद्बहलमकरन्दसुरभिततरङ्गम्—चटुलेन=चञ्चलेन, चञ्चरीककुलेन=अलिवृन्देन, आकुलितेभ्यः=व्याप्तेभ्यः, कमलकुड्मलेभ्यः=कमलकोरकेभ्यो, गलत्=स्रवत्, यद् बहलमकरन्दम्=बहुमधुरसम्, तस्य सुरभिः=सुगन्धः, तेन युक्तास्तरङ्गाः यत्र तथाविधम्। उत्पतत्कपिञ्जलम्—उत्पतन्ति कपिञ्जलानि यत्र तत्=उड्डीयत्कपोतम्। जलम्=अम्भः। चिरम्=बहुकालम्। अवगाह्य=निमज्य। तीरम्=तटम्। उत्तीर्य =अवतीर्य। मुनिजनम्=तापसजनम्। आपृच्छ्य=पृष्ट्वा। अभिवाद्य=प्रणम्य च। पुनः=भूयः। पुलिनपालिपर्यटनाय—पुलिनस्य=तटस्य, पाल्याम्=पङ्क्तौ, पर्यटनम् =भ्रमणम्, तदर्थं प्रस्थितः=प्रचलितः। प्रणयात्=प्रेम्णा। अनुव्रजतः=अन्वागच्छन्तः। मुनीन्=तापसान्। निवर्तयन्=परावर्तयन्। इदम्=एतत्। आह=उवाच।

**हिन्दी**—तदनन्तर चपल भ्रमरकुल से व्याप्त कमलकलिकाओं से गिर रहे ( टपक रहे ) अत्यधिक मकरन्दरस से सुगन्धित तरङ्गों वाले, जिसके ऊपर कपिञ्जल ( कबूतर ) उड़ रहे थे, ऐसे जल में बहुत देर तक स्नान कर तट पर निकल कर मुनिजनों के सम्बन्ध में पूछ-ताछ कर तथा उन्हें प्रणाम कर पुनः तट पंक्ति पर घूमने के लिए वह चल पड़ा। स्नेह से पीछे-पीछे आ रहे मुनिजनों को लौटाते हुए वह इस प्रकार कहने लगा—

**'चक्रधरं विषमाक्षं कृतमदकलराजहंससञ्चारम् ।**
**हरिहरविरञ्चिसदृशं भजत पयोष्णीतटं मुनयः' ॥ ३२ ॥**

**अन्वयः**—मुनयः ! चक्रधरं विषमाक्षं कृतमदकलराजहंससञ्चारं हरिहरविरञ्चिसदृशं पयोष्णीतटं भजत ॥ ३२ ॥

**सुधा—चक्रधरमिति ।** मुनयः=अयि मुनिजनाः ! ( यूयम् ) चक्रधरम्=चक्रवाकधरम् । विषमाक्षम्—विषमम्=असमं विशालं वा, अक्षम्=रुद्राक्षिपादपं यत्र तत् कृतमदकलराजहंससञ्चारम्—कृतः=विहितः, मदकलराजहंसानाम्=मत्तरुचिरराजहंसपक्षिणां सञ्चारो येन तथाविधम् । हरिः=विष्णुः । चक्रम्=सुदर्शनं, धारयति । हरः=शिवः । विषमाक्षः=त्रिनेत्रः । विरञ्चिः=विधाता । कृतमदकलराजहंससञ्चारः । अतः देवत्रयसमं पावनम् । पयोष्णीतटम्=तन्नामनद्यास्तीरम् । भजत=सेवध्वम् । अर्थात् इहेव वसत इति । आर्यावृत्तम् ॥ ३२ ॥

**हिन्दी**—हे मुनिजनो ! चकई चकवों से युक्त, रुद्राक्षादि वृक्षों वाले, जहाँ मतवाले सुन्दर राजहंस इधर-उधर घूमते फिरते हैं, ऐसे पयोष्णी नदी के तट को आपलोग चक्रधारी भगवान् विष्णु, विषम नेत्रों वाले भगवान् शिव तथा राजहंस का वाहन बनाये हुये भगवान् ब्रह्माजी के समान सेवन करें, अर्थात् मेरा अनुगमन करने का कष्ट न करें ॥ ३२ ॥

**एवमुक्तास्तेऽप्यार्द्रहृदयाः स्वल्पपरिचयेनाप्युपचितोचितप्रणयाः प्रियंवदतया प्रियमाशशंसुः ।**

**सुधा—एवमिति ।** एवम्=इत्थम् । उक्ताः=कथिताः । ते=मुनयः । अपि । आर्द्रहृदयाः—आर्द्राणि=दयाद्रवितानि, हृदयानि=चेतांसि, येषां ते=दयार्द्रचेतसः । स्वल्पपरिचयेनापि=न्यूनकालपरिचयेनापि । उपचितोचितप्रणयाः—उपचितः=कृतः, उचितः=उपयुक्तः, प्रणयः=प्रीतिः, यैः ते । प्रियंवदतया=मिष्टभाषित्वहेतुना । प्रियम्=रुचिरम् । आशशंसुः=प्रशशंसुः ।

**हिन्दी**—राजा के ऐसा कहने पर दयालु हृदय तथा थोड़े परिचय से भी गाढ़ स्नेह युक्त उन मुनिजनों ने मधुरभाषिताद्वारा प्रिय आशीर्वाद दिये ।

**'सुगमस्तवास्तु पन्थाः क्षेमा दिग्देवताः शिवाः शकुनाः ।**
**अभिलषितमर्थमचिरात्साधयतु भवानविघ्नेन' ॥ ३३ ॥**

**अन्वयः**—तव पन्थाः सुगमः अस्तु, दिग्देवताः क्षेमाः, शकुनाः शिवाः ( सन्तु ) । भवान् अविघ्नेन चिरात् अभिलषितम् अर्थम्, साधयतु ॥ ३३ ॥

**सुधा—सुगम इति ।** तव=ते नृपस्य । पन्थाः=मार्गम् । सुगमः=सुकरः । अस्तु=भवतु । दिग्देवताः=दिगीशाः । क्षेमाः=कल्याणकराः । शकुनाः=लक्षणानि । शिवाः=क्षेमकराः सन्तु । भवान्=श्रीमान् । अविघ्नेन=निर्विघ्नतया । चिरात्=बहुकालात् । अभिलषितम्=आकांक्षितम् । अर्थम्=हितम् । साधयतु=पूरयतु ॥ ३३ ॥

**हिन्दी—राजन् !** तुम्हारा मार्ग सुगम बने, दिग्देवता कुशल करें, शकुन कल्याण कर होवें, चिरकाल से अभिलषित वस्तुएँ आप निर्विघ्न प्राप्त करें ॥ ३३ ॥

**इत्यभिधाय व्यावृत्तेषु मुनिषु कौतुकादितस्ततः सञ्चरच्चटुलषट्चरण-चक्रचुम्बनाकूततरलितपुष्पपरागपटलपांसुलिततरुतलेषु वहत्सुरभिशिशिर-कोमलपवनेषु वनेषु, वनेचरमिथुनमन्मथक्रीडानुकूलेषु कलेषु, पुलिन्दडिम्भ-काध्यासितफलितवदरीषु दरीषु, पुञ्जितकुञ्जरेषु, निकुञ्जेषु दुर्दर्शभानुषु सानुषु, सानुचरश्चरन्नेकस्मिन्नतिनिबिडसन्धिसन्निवेशे शिलान्तरालप्रदेशे, प्रियतममुद्दिश्य पठन्त्याः किन्नर्याः साश्चर्यमार्यागीतिमिमामश्रृणोत् ।**

सुधा—इत्यभिधायेति । इति=एवम् । अभिधाय=उक्त्वा । मुनिषु=तापसेषु । व्यावृत्तेषु=परावृत्तेषु । कौतुकात्=कौतूहलात् । इतस्ततः=चतुर्दिक्षु । सञ्चरच्चटुल-षट्चरणचक्रचुम्बनाकूततरलितपुष्पपरागपाटलपांसुलिततरुतलेषु–सञ्चरत्=भ्रमत्, यच्च-टुलम्=चपलम्, षट्चरणचक्रम्=भ्रमर-समूहम्, तस्य, चुम्बनाकूतेन=चुम्बनो-त्कण्ठया, तरलितम्=कम्पितम्, पुष्पपरागपाटलम्=कुसुमकेसरपाटलम्, तेन पांसु-लितम्=रजोयुक्तम्, तरुतलम्=वृक्षतलम्, यत्र तेषु । वहत्सुरभिशिशिरकोमलपवनेषु—वहन्तः=चलन्तः, सुरभिशिशिराः=सुगन्धिशीतलाः, कोमलपवनाः=मृदुवाताः, यत्र तेषु । वनेषु=काननेषु । वनेचरमिथुनमन्मथक्रीडानुकूलेषु—वनेचरमिथुनानाम्=आरण्यकयुगलानाम्, मन्मथक्रीडायाः=मदनलीलायाः, अनुकूलेषु=उपयुक्तेषु । कूलेषु=तटेषु । पुलिन्दडिम्भकाध्यासितफलितवदरीषु—पुलिन्दडिम्भैः=भिल्लशिशुभिः, अध्यासितासु=आवसितासु, तासु फलवद्वदरीषु । तथा दरीषु=पर्वतकन्दरासु । पुञ्जितकुञ्जरेषु—पुञ्जिताः=एकत्रिताः, कुञ्जराः=गजाः, यत्र तादृशेषु । निकु-ञ्जेषु=वीथिसु । दुर्दर्शभानुषु—दुर्दर्शः=दुःखेनावलोक्यः, भानुः=सूर्यः, यत्र तथा-विधेषु । सानुषु=पर्वतशिखरेषु । सानुचरः=सपरिजनः । चरन्=विचरन् । एकस्मिन्=कस्मिन्नपि । अतिनिविडसन्धिसन्निवेशे=अतिसघनसन्धियुक्ते । शिलान्तरालप्रदेशे—शिलायाः, अन्तरालप्रदेशे=मध्यभागे । प्रियतमम्=प्रियम् । उद्दिश्य=अभिलक्ष्य । पठन्त्याः=पाठं कुर्वन्त्याः । किन्नर्याः=किन्नरीजनस्य । इमाम्=एताम् । आर्यागीतिम्=आर्याश्लोकम् । साश्चर्यम्=आश्चर्येण सह । अश्रृणोत्=सुश्राव ।

**हिन्दी**—यह कहकर मुनियों के लौट जाने के पश्चात् कौतुक से इधर-उधर घूम रहे चञ्चल चञ्चरीकवृन्द के चुम्बनों की उत्कण्ठा से तरलित पुष्प-पराग-पुञ्ज से धूसरित वृक्षतलों वाले बह रहे सुगन्ध से शीतल कोमल पवनयुक्त वनों में किरात युगल की काम-क्रीड़ा के अनुकूल तटों वाले, जहाँ बेर फलों वाली गुफाओं में भीलों के बच्चे बैठे हुए थे तथा निकुञ्जों में हाथी इकट्ठे हो रहे थे, जहाँ ऊँचे पर्वत-शिखरों के कारण सूर्य के दर्शन तक दुर्लभ थे, ऐसे प्रदेश में अनुचरों सहित घूमते हुए एक अति सघन पर्वत-सन्धि से युक्त शिला के मध्यभाग में अपने प्रियतम को उद्देश्य कर पढ़ती हुई किन्नरी की इस आर्या गीति को आश्चर्य के साथ सुना ।

**'विपिनोद्देशं सरसं केतकमकरन्दवासितवियत्ककुभम् ।**
**ग्राममिमं वा सर संकेतकमकरन्दवासितवियत्ककुभम्' ॥ ३४ ॥**

**अन्वयः**—सरसं केतकमकरन्दवासितवियत्ककुभं विपिनोद्देशं वा संकेतमकरन्दवासितवियत्ककुभं इमं ग्रामं सर ॥ ३४ ॥

**सुधा—विपिनेति**। सरसम्=सजलम्। केतकमकरन्दवासितवियत्ककुभम्—केतकमकरन्देन वासितम्, वियत्=नभः, ककुभः=दिशश्च, येन तथाभूतम्। विपिनोद्देशम्=अरण्यप्रदेशम्। वा=अथवा। सङ्केतकमकरन्दवासितवियतककुभम्—संकेतयति=निवासयति, अनुकूलत्वान्निवासहेतुर्भवतीति संकेतकम्, अकरम्—न विद्यते करो राजग्रहोंऽशः यत्र। पर्वतीयत्वादकरम्। आसनमासितं सद्भावः। दवस्यासिताद् वियन्तः=विश्लिष्यन्तः, कुकुभाः=तरवो यत्र, यद्वा सिताः=सम्बद्धाः, दवेनासिताः=असम्बद्धाः वयः पक्षिणो यत्र। तथा यद् वहत् कम्=पयो यस्यां सा चासौ कुश्च, तया भातीति तथाविधम्। इमम्=पुरोवर्तिनम्। ग्रामम्=वसतिम्। सर=चल। अत्र यमकालङ्कारः ॥ ३४ ॥

**हिन्दी**—सजल केतकी के मकरन्द से सुगन्धित आकाश एवम् दिशाओं वाले अरण्य प्रदेश को अथवा निवास योग्य, कर रहित, दव (जंगल) से असित (असम्बद्ध) पक्षियों वाले तथा बहते हुए जल और भव्य भूभाग वाले इस गाँव को चलो ॥ ३४ ॥

**तदनु पुनस्तत्प्रतिवादिना किन्नरेण च पठ्यमानामिमामार्यामश्रौषीत्।**

**सुधा—तदन्विति**। तदनु=तदनन्तरम्। पुनः=भूयः। तत्प्रतिवादिना=तत्प्रतिद्वन्द्विना। किम्=किञ्चित्, नरेण=पुरुषेण, किन्नरेण=किंपुरुषेण वा। पठ्यमानाम्=उच्यमानाम्। इमाम्=एताम्। आर्याम्=आर्यागीतिम्। अश्रौषीत्=अशृणोत्।

**हिन्दी**—तदनन्तर पुनः उसके प्रतिवादी किसी व्यक्ति अथवा किन्नर द्वारा पढ़ी जा रही इस आर्या को सुना।

**'अजनि रजनिः किमन्यत्तरणिस्तरतीव पश्चिमपयोधौ।**
**घनतरुणि तरुणि विपिने क्वचिदस्मिन्नेव निवसामः' ॥ ३५ ॥**

**अन्वयः**—तरुणि! रजनिः अजनि। अन्यत् किम्, तरणिः पश्चिमपयोधौ तरति इव। घनतरुणि अस्मिन्नेव विपिने क्वचित् निवसामः ॥ ३५ ॥

**सुधा—अजनीति**। तरुणि=अयि युवति! रजनिः=रात्रिः। अजनि=अजायत। अन्यत्=अपरम्। किम्=किमिति वक्तव्यम्। तरणिः=सूर्यः। पश्चिमपयोधौ=प्रतीचीसागरे। तरति इव=तरणं करोतीव। घनतरुणि—घना=निविडास्तरवः=पादपाः यस्मिंस्तत्र। अस्मिन् एव=एतस्मिन्नेव। विपिने=कानने। क्वचित्=कुत्रापि। निवसामः=निवासं विधास्यामः। अत्र यमकालङ्कारः। आर्यावृत्तम् ॥ ३५ ॥

**हिन्दी**—हे युवति! रात्रि हो चुकी है। अधिक क्या कहें, सूर्य पश्चिम दिशा (सागर) में तैरने लगा है। (अतः) घने वृक्षों वाले इसी वन में कहीं पर हम निवास कर लें ॥ ३५ ॥

**एवमन्योन्यालापमाकर्ण्य किन्नरमिथुनस्य विस्मितो नरपतिः अहो मान-**

**नीयमहिमोद्दामा दमयन्ती यस्याः परिचारिणः पक्षिणोऽपि श्रवणस्पृहणीया-मेवंविधसुभाषितामृतमुचं वाचमुच्चारयन्ति ।**

**सुधा—एवमिति ।** एवम्=इत्थम् । अन्योऽन्यम्=परस्परम् । आलापम्=वार्तालापम् । किन्नरमिथुनस्य=किम्पुरुषयुगलस्य । आकर्ण्य=श्रुत्वा । विस्मितः=आश्चर्यचकितः । नरपतिः=भूपतिः । अहो=आश्चर्यम् । माननीयमहिमोद्दामा—माननीयः=पूजनीयः, यो महिमा=गौरवम्, तेन उद्दामा=उद्दीप्ता । दमयन्ती=भैमी। यस्याः=एतस्याः दमयन्त्याः । परिचारिणः=पार्श्ववर्तिनः । पक्षिणः=खगाः । अपि। श्रवणस्पृहणीयाम्=आकर्णनमनोरमाम् । एवंविधसुभाषितामृतमुचः—एवं विधा=एतादृशी सुभाषितरूपममृतं मुञ्चतीति, तादृशी । तां वाचम्=वाणीम् । उच्चारयन्ति=कथयन्ति ।

**हिन्दी**—इस प्रकार किन्नर-युगल की पारस्परिक वार्ता को सुन कर विस्मित होकर राजा सोचने लगे—अहा ! दमयन्ती माननीय महिमा से कान्तिमयी है जिसके परिचारक पक्षी भी कर्णमनोरम इस प्रकार की सुभाषित रूपी अमृत बरसाती हुई वाणी बोलते हैं ।

**प्रथममिह तावदाभिजात्यवित्तविद्याविवेकविभवैरनाकुले कुले जन्म ततोऽप्यनुरूपपसम्पत्तिस्तदनु श्लाघानुगुणगुणलाभस्ततोऽपि च शुचिविदग्ध-स्निग्धपरिजनावाप्तिरिति महती भाग्यपरम्परा, इति चिन्तयन्ननतिदूर-वर्त्तिनः पुष्कराक्षस्य मुखमवलोकयाञ्चकार ।**

**सुधा—प्रथममिति ।** इह=अत्र । प्रथमम्=पूर्वं तावत् । आभिजात्यवित्तविद्या-विवेकविभवैः—आभिजात्यम्=उत्तमपरम्परा, वित्तम्=धनम्, विद्या=शिक्षा, विवेकः=ज्ञानम्, विभवः=ऐश्वर्यश्च एतैः सर्वैः । अनाकुले=अहङ्कारशून्ये । कुले=वंशे । जन्म=उत्पत्तिः । ततोऽपि=तस्मादपि । अनुरूपरूपसम्पत्तिः—अनुरूपा=अनुकूला, रूपपम्पत्तिः=रूपसम्पदा । तदनु=तदनन्तरम् । श्लाघानुगुणगुणलाभः—श्लाघानुगुणम्=प्रशंसाऽनुरूपम्, गुणलाभः=गुणानां प्राप्तिः । ततोऽपि च=तदनन्तर-मपि । शुचि=पवित्रे । विदग्धस्निग्धपरिजनावाप्तिः—विदग्धानाम्=बुद्धिमताम्, स्निग्धानाम्=स्नेहयुक्तानाञ्च, परिजनानाम्=सेवकानाम्, अवाप्तिः=प्राप्तिः । इति=एषा । महती=विशाला । भाग्यपरम्परा=भाग्यस्य, परम्परा=परिपाटी । शृङ्खला वा । इति चिन्तयन्=एवं विचारयन् । अनतिदूरवर्तिनः=पार्श्ववर्तिनः । पुष्क-राक्षस्य=तन्नामजनस्य । मुखम्=आननम् । अवलोकयाञ्चकार=अपश्यत् ।

**हिन्दी**—सर्व-प्रथम तो उत्तम परम्परा, धन, विद्या, विवेक तथा वैभव से सम्पन्न होकर भी अभिमान रहित कुल में जन्म, इसके पश्चात् अनुरूप रूपसम्पदा तथा तदनन्तर प्रशंसा के अनुकूल गुणों की प्राप्ति यह बहुत बड़ी भाग्य की शृंखला है यह सोचते हुए थोड़ी दूर पर स्थित पुष्कराक्ष के मुँह को देखने लगा ।

**पुष्कराक्षोऽपि पुरःसृत्य तं किन्नरमभाषत । सुन्दरक, कान्तामुखावलोक-नासक्तः समीपमागतानप्यस्मान्न पश्यसि । तदितो दत्तदृष्टिर्भव ।**

**सुधा—पुष्कराक्ष इति।** पुष्कराक्षः=तदभिधः जनोऽपि। पुरःसृत्य=अग्रे उपगम्य। तम्=उपर्युक्तम्। किन्नरम्=किंपुरुषम्। अभाषत=अवोचत। सुन्दरक=अयि सुन्दरक! कान्तामुखावलोकनासक्तः—कान्तायाः=प्रियायाः, मुखम्=आननम्, अवलोकने=दर्शने, आसक्तः=अनुरक्तः। समीपम्=पार्श्वम्। आगतान्=उपस्थितान् अपि। अस्मान्, न पश्यसि=नावलोकयसि। तत्=अतः। इतः=अस्मात्। दत्तदृष्टिः—दत्ता दृष्टिर्येन सः=प्रदत्तचक्षुः। भव=एधि।

हिन्दी—पुष्कराक्ष भी आगे बढ़कर उस किन्नर से कहने लगा—हे सुन्दरक! प्रिया का मुख देखने में आसक्त होने से समीप आये हुए हमलोगों को भी नहीं देख रहे हो। अतः जरा इधर तो देखिये—

**स एष निषधेश्वरः कुसुमचापचक्रं विना**
**प्रसादितमहेश्वरः स्मर इवागतो मूर्तिमान्।**
**विलोकय विलोचनामृतसमुद्रमेनं नृपं**
**विधेहि नयनोत्सवं कुरु कृतार्थतामात्मनः॥ ३६॥**

**अन्वयः**—सः एषः निषधेश्वरः कुसुमचापचक्रं विना प्रसादित-महेश्वरः मूर्तिमान् स्मरः इव आगतः विलोचनामृतसमुद्रम् एतम् नृपं विलोकय। आत्मनः नयनोत्सवं कृतार्थं विधेहि॥ ३६॥

**सुधा—स एष इति।** सः=असौ। एषः=अयम्। निषधेश्वरः=निषधनृपः नलः। कुसुमचापचक्रं विना—कुसुमान्येव चापचक्रम्=धनुर्मण्डलम् तेन विना। प्रसादितमहेश्वरः—प्रसादितः=प्रसन्नीकृतः। महेश्वरः=शिवो येन सः। मूर्तिमान्=साकारः। स्मरः=मदनः। इव=समानः। आगतः=आयातः। विलोचनामृतसमुद्रम्—विलोचनाभ्याम्=नेत्राभ्याम्, अमृतस्य=सुधायाः, समुद्रः=सागरस्तम्। एनम्=इमम्। नृपम्=राजानम्। विलोकय=अवलोकय। आत्मनः=स्वस्य। नयनोत्सवम्=नेत्रोत्सवम्। कृतार्थम्=सफलम्। विधेहि=कुरु। अत्र व्यतिरेकालङ्कारः॥ ३६॥

हिन्दी—वही यह निषधराज नल पुष्पधनुर्मण्डल के बिना ही शिवजी को प्रसन्न करने वाले साक्षात् कामदेव के समान आये हैं। नयनों के लिए सुधासागर जैसे इन नरेश का दर्शन करो। इस प्रकार अपने नयनोत्सव को सफल बनाओ॥ ३७॥

**त्वमपि विहङ्गवागुरे परमरहस्यसखी देव्याः सा हि त्वच्चक्षुषा पश्यति, त्वत्कर्णाभ्यामाकर्णयति, त्वन्मनसा मनुते।**

**सुधा—त्वमिति।** विहङ्गवागुरे=अयि पक्षिमोहिके! त्वम्=भवती अपि। देव्याः=दमयन्त्याः। परमरहस्यसखी—परमरहस्ये=नितान्तमेकान्ते, सखी=सहचरी। हि=यतः। सा=देवी दमयन्ती। त्वच्चक्षुषा=तव दृष्ट्या। पश्यति=अवलोकयति। त्वत्कर्णाभ्याम्=तव श्रोत्राभ्याम्। आकर्णयति=शृणोति। त्वन्मनसा=तव चेतसा। मनुते=निश्चयति।

हिन्दी—हे पक्षिमोहिके ! तुम भी देवी दमयन्ती की एकान्त में साथ रहने वाली सखी हो, क्योंकि वह तुम्हारी दृष्टि से ही देखती है, तुम्हारे कानों से ही सुनती तथा तुम्हारे मनपसन्द को ही पसन्द करती है ।

**तदिह दमयन्तीमनोरथपान्थपिपासाच्छिदि लावण्यपुण्यह्रदेऽस्मिन् राजनि निर्वापय चक्षुः, इति किन्नरमिथुनमभिमुखीकृत्य नरपतिमवादीत् ।**

**सुधा**—तदिहेति । तत्=अतः । इह=अत्र । दमयन्तीमनोरथपान्थपिपासाच्छिदि—दमयन्त्याः=भैम्याः देव्याः, मनोरथमेव पान्थः=कामनापथिकस्तस्य, या पिपासा= तृष्णा, ताम् छिनत्तीति तस्मिन् । लावण्यपुण्यह्रदे—लावण्यस्य=सौन्दर्यस्य पुण्यह्रदमिव=पुण्यसरोवरमिव यस्तस्मिन् । अस्मिन्=एतस्मिन् । राजनि=नृपे । चक्षुः= नेत्रम् । निर्वापय=प्रक्षिप । इति=एवम् । किन्नरमिथुनम्=किम्पुरुषयुगलम् । अभिमुखीकृत्य=सम्मुखीनं विधाय । नरपतिम्=राजानं नलम् । अवादीत्=अकथयत् ।

हिन्दी—'अत एव इस दमयन्ती के मनोरथ रूपी पथिक की पिपासा बुझाने वाली, सौन्दर्य के पवित्र सरोवर-सदृश इन महाराज नल की ओर देखो ।' यह कह कर किन्नर-मिथुन को सामने कर राजा से कहा—

**देव, तदेतत्किनरमिथुनम्, इदं हि द्वितीयमिव हृदयं देव्याः, प्रियं प्राणेभ्योऽपि प्रेम्णा प्राभृतमेतत्प्रहितं तुहिनाचलचक्रवर्तिना देवस्य, देवेन देव्यै दत्तम् । तया च दमयन्त्याः समर्पितं परं पात्रं मन्त्रगीतेः ।**

**सुधा**—देव इति । देव=राजन् ! तत्=अतः । एतत्=असौ । किन्नरमिथुनम् =किंपुरुषयुगलम् । हि=यतः । इदम्=एतत् । देव्याः=दमयन्त्याः । द्वितीयम्= अपरम् । हृदयम् इव=चेत इव । प्राणेभ्योऽपि प्रियम्=अत्यन्तप्रियम् । प्रेम्णा= प्रीत्या । प्राभृतम्=एकान्तम् । तुहिनाचलचक्रवर्तिना—तुहिनाचलस्य=हिमालयस्य । चक्रवर्तिना=चक्रवर्तिनृपेण । देवस्य=महाराजस्य । प्रहितम्=प्रेषितम् । देवेन= प्रभुणा । देव्यै=दमयन्तीमात्रे । दत्तम्=समर्पितम् । तया=महाराज्ञ्या च । समर्पितम् =प्रदत्तम् । मन्त्रगीतेः=मन्त्राः गीयन्तेऽस्यामिति मन्त्रगीतिः तस्याः । परमपात्रम्= अत्युपयुक्तम् अस्तीति ।

हिन्दी—हे राजन् ! यही वह किन्नरमिथुन है जो कि महारानी के द्वितीय हृदय, प्राणों से भी प्रिय, हिमालय के चक्रवर्ती राजा ने प्रेम से महाराज के लिए भेजा था और महाराज ने देवी ( महारानी ) जी को दे दिया । महारानी जी ने गुप्त मन्त्रणा योग्य इसको दमयन्ती के लिए समर्पित कर दिया ।

**तथाहि—जातख्यातिः जातिषु, गीतयशो गीतकेषु, वर्धितमानं वर्धमानेषु, सारमासारितकेषु, निपुणं पाणिकासु, धाम साम्नाम्, आचार्यकमृचाम्, आलयः कलाविभेदानाम्, रसगीत्यामपि सुस्वरं स्वरालापेषु, अवग्राम्यं ग्रामरागेषु, विचित्रभाषं भाषासु, प्रवर्तकं नर्तनानाम्, कारणं करणमार्गस्य, वाद्येष्वपि प्रवीणं वीणावेणुषु, लब्धपाटवं पटहेषु, अप्रतिमल्लं झल्लरीषु ।**

**सुधा—जातेति ।** जातिषु—जातयः=नन्दयन्तीति प्रभृतयस्तेषु । जातख्यातिः—जाता=समुत्पन्ना, ख्यातिः—प्रसिद्धिर्यस्य तत्=सञ्जातख्याति । गीतकेषु=सङ्गीतेषु । गीतयशः—गीतम्=बहुचर्चितम्, यशः=कीर्तिर्यस्य तत् । वर्धमानेषु=प्रवर्धमानेषु । वर्धितमानम्—वर्धितं मानं यत् तत् । आसारितकेषु—आसारितकाः=प्रसादितास्तेषु । सारम्=तत्त्वम् । पाणिकासु=व्यापारिकक्रियासु । निपुणम्=कुशलम् । साम्नाम्=वेदानाम् । धाम=तेजः । ऋचाम्=वेदमन्त्राणाम् । आचार्यकम्=गुरुकल्पम् । कलादि-भेदानाम्=गीतवाद्यादिभेदानाम् । आलयः=निवासः । रसगीत्यामपि=रसगान-प्रसङ्गेऽपि । स्वरालापेषु—स्वराः=मध्यमादयः सप्तः, तेषामालापेषु=कथनेषु । सुस्वरम्=शोभनं स्वरम् । ग्रामरागेषु—ग्रामाः षड्ज-मध्यम-गान्धारादयस्तेषु । अव-ग्रामम्=निपुणम् । भाषासु=षट्त्रिंशद्भाषासु । विचित्रभाषम्=अद्भुतवाक् । नर्तनानाम्=नृत्य-प्रकाराणाम् । प्रवर्तकम्=आविष्कारकम् । करणमार्गस्य—करणानि=तल-पुष्प-पुटादीन्यष्टोत्तरशत-संख्यानि, तेषां मार्गस्य=वर्त्मनः । कारणम्=हेतुः । वाद्येषु=वीणादिवादनयन्त्रेषु । प्रवीणम्=कुशलम् । पटहेषु=दमदमादि-वाद्येषु । लब्धपाटवम्=पटुता-प्राप्तम् । झल्लरीषु=झालवाद्येषु । अप्रतिमल्लम्=अप्रतिमम् ।

**हिन्दी**—क्योंकि—किन्नर-मिथुन, नन्दयन्ती आदि जातियों में प्रसिद्ध, गीतप्रसङ्ग में बहुचर्चित, वर्धमानों में सम्मानित, आसारितकों में प्रमुख, पाणिकाओं में निपुण, सामगान में तेजस्वी, ऋचाओं के आचार्य, कलादिभेदों के घर, रसगान में भी स्वरा-लाप करने वालों में उत्तम स्वर वाले, षड्जमध्यम आदि ग्रामों में निपुण, भाषाओं में विचित्रभाषी, नृत्य प्रकारों के आविष्कारक, करणमार्ग के कारण, वीणा-वेणु आदि वाद्यों में प्रवीण, पटह (ढोल) आदि बजाने में पटु, झाल आदि बजाने में अद्वितीय है ।

**टिप्पणी**—संगीतशास्त्र में वर्धमान, आसारितक, पणिक, साम, ऋक् कला आदि गीत के विषय, मध्यम आदि सप्त स्वर, षड्ज-मध्यम-गान्धार तीन ग्राम, तल-पुष्प-पुटी आदि एक सौ आठ करण होते हैं ।

**किंबहुना—**

**कालमिव कलाबहुलं सर्वरसानुप्रवेशि लवणमिव ।**
**तव नृप सेवां कर्तुं किन्नरयुगलं तया प्रहितम् ॥ ३७ ॥**

**अन्वयः**—नृप ! कालम् इव कला-बहुलम्, लवणम् इव सर्वरसानुप्रवेशि तव सेवां कर्त्तुं तया किन्नर-युगलं प्रहितम् ॥ ३७ ॥

**सुधा—कालमिति ।** नृप=राजन् ! कालम्=कलागीतवाद्यादयः, मुहूर्त्त-भेदाश्च, विदन्त्यभिधीयते वा कलाः=कलविदः, तेषां समूहः कालम् इव=मुहूर्त्तविद्यायाः विद्वत्समूहमिव । कलाबहुलम्—कलासु बहुलम्=निष्ठम् । लवणम्=लवणसमम् । सर्वरसानुप्रवेशि—सर्वेषु=निखिलेषु, रसेषु=शृङ्गारादिषु, अनुप्रविशतीति तत् । तव=ते । सेवाम्=सपर्याम् । कर्त्तुम्=विधातुम् । तया=दमयन्त्या । किन्नर-युगलम्=किंपुरुषमिथुनम् । प्रहितम्=प्रेषितमस्तीति । आर्यावृत्तम् ॥ ३७ ॥

**हिन्दी**—अधिक क्या कहें—हे राजन् ! काल ( मुहूर्त्तविद्या के विद्वत्समूह के समान कलाओं में निपुण लवण के समान समस्त ( शृङ्गारादि ) रसों में गति रखने वाले इस किन्नर-युगल को उसने (दमयन्ती ने) तुम्हारी सेवा के लिए भेजा है ॥३७॥

**तदेतदात्मपरिग्रहेणानुगृह्यताम्, इत्यभिधाय विश्रान्तवाचि तस्मिन्स किन्नरयुवा किमप्युपसृत्य मृगमदमिलन्मलयजरसोल्लासिलेखालाञ्छित-ललाटपट्टार्पितकरकमलमुकुलं प्रणतिप्रेङ्खितमणिकर्णावतंसतया सह प्रियया प्रणाममकरोत्।**

**सुधा**—तदेतदिति। तत्=अतः। एतत्=किन्नरमिथुनम्। आत्मपरिग्रहेण—आत्मनः=स्वस्य, परिग्रहेण=स्वीकृतिविधानेन। अनुगृह्यताम्=अनुकम्प्यताम्। इति=एवम्। अभिधाय=उक्त्वा। विश्रान्तवाचि—विश्रान्ता=समाप्ता, वाक्=वाणी, यस्य सः तस्मिन्। तस्मिन्=पुष्कराक्षे। किन्नरयुवा=किंपुरुषतरुणः। किमपि=किञ्चित्। उपसृत्य=समीपं गत्वा। मृगमदमिलन्मलयजरसोल्लासिलेखालांछित-ललाटपट्टार्पितकरकमलमुकुलम्—मृगमदमिलता=कस्तूरीमिश्रितेन, मलयजरसेन=चन्दनेन, उल्लासिलेखालांछिते=मनोरमतिलकाङ्किते, ललाटपट्टे=भालपट्टे, अर्पितम्=समर्पितम्, करकमलम्=करकञ्जमेव, मुकुलम्=कोरकम्, यत् तत्। प्रणति-प्रेङ्खितमणिकर्णावतंसतया—प्रणत्या=अवनमत्वेन, प्रेङ्खिते=चञ्चले, कर्णावतंसे=कर्णाभरणे, तयोर्भावस्तया। प्रियया=प्रेयस्याः। सह=समम्। प्रणामम्=प्रणतिम्। अकरोत्=चकार।

**हिन्दी**—अतः इसे स्वीकार करने की कृपा कीजिए। यह कहकर उसके चुप हो जाने पर किन्नरयुगल ने कुछ आगे बढ़ कर कस्तूरी-मिश्रित चन्दन रस से शोभित तिलक वाले ललाटपट्ट पर करकमल जोड़कर मणिमयकर्णाभूषणों से सुशोभित अपनी प्रियतमा के साथ प्रणाम किया।

**उक्तवांश्च**—

**लब्धार्धचन्द्र ईशः कृतकंसभयं च पौरुषं विष्णोः।**
**ब्रह्मापि नाभिजातः केनोपमिमीमहे नृप भवन्तम् ॥ ३८ ॥**

**अन्वयः**—नृप ! ईशः लब्धार्धचन्द्रः। विष्णोः पौरुषं च कृतकंसभयम्। ब्रह्मा अपि नाभिजातः। भवन्तं केन उपमिमीमहे ॥ ३८ ॥

**सुधा**—लब्धेति। नृप=राजन् ! ईशः=हरः। लब्धार्धचन्द्रः—अर्द्धं चन्द्रस्येत्यर्धचन्द्रः, लब्धः अर्द्धचन्द्रो येन सः=प्राप्तगलापहस्तः। विष्णोः=हरेः। पौरुषम्=बलम् च। कृतकम्=कृत्रिमम्। सभयम्=भिया युक्तम्। पक्षे—कृतं कंसस्य भयं यत्र तद्=कृतकंसराक्षसभयं वा। ब्रह्मा=विरञ्चिरपि। न अभिजातः=न कुलीनः। पक्षे—नाभिजातः=नाभ्या उत्पन्नः। भवन्तम्=श्रीमन्तम्। केन=केन देवेन। उपमिमीमहे=उपमां दद्याम्। नास्ति भवत्समोऽन्यः कश्चिद्देव इत्याशयः। आर्यावृत्तम् ॥ ३८ ॥

हिन्दी—और बोला—भगवान् शिव अर्द्धचन्द्र ( गला दबाना ) प्राप्त किये हुये हैं, भगवान् विष्णु का पराक्रम कृत्रिम, भययुक्त अथवा कंस-भय से सम्पन्न है, ब्रह्माजी भी नाभिजात ( नाभि से उत्पन्न अथवा कुलीन नहीं ) हैं। ( अतः ) आपकी उपमा किससे दी जाय ॥ ३८ ॥

**इदं च—**

**अरुणमणिकिरणरञ्जितलिखिताक्षरमङ्गुलीयकाभरणम् ।**
**तस्याः करकिसलयमिव तव करकमले चिरं लगतु ॥ ३९ ॥**

अन्वयः—अरुणमणिकिरणरञ्जितलिखिताक्षरम् अङ्गुलीयकाभरणं तस्याः करकिसलयम् इव तव करकमले चिरं लगतु ॥ ३९ ॥

सुधा—अरुणेति। इदञ्च=एतच्च। अरुणमणिकिरणरञ्जितलिखिताक्षरम्—अरुणमणिः=पद्मरागादिः, तत्किरणैः=तत्कान्तिभिर्लिखितानि=अङ्कितानि, अक्षराणि यस्मिस्तथा, अङ्गुलीयकम्=अङ्गुलीयकमुद्रा, आभरणम्=अलङ्करणम्, यस्यास्तदिव। तस्याः=दमयन्त्याः। करकिसलयम्=पाणिपल्लवम्। तव=ते। करकमले=पाणिपद्मे। चिरम्=बहुकालम्। लगतु=संलग्नं भवतु ॥ ३९ ॥

हिन्दी—और यह—पद्मरागादि मणियों की किरणों से शोभित अंकित अक्षरों वाली अंगूठी युक्त उस दमयन्ती का करकिसलय चिरकाल तक आपके करकमल को अलङ्कृत करे ॥ ३९ ॥

**अनया च—**

**तव सुभग रम्यदशया तयेव रक्तान्तनेत्रमण्डनया ।**
**चीनांशुकयुगलिकया क्रियतामङ्गे परिष्वङ्गः ॥ ४० ॥**

अन्वयः—सुभग ! रम्यदशया, रक्तान्तनेत्र-मण्डनया चीनांशुकयुगलिकया इव तया तव अङ्गे परिष्वङ्गः क्रियताम् ॥ ४० ॥

सुधा—तवेति। सुभग=सौम्य ! रम्यदशया—रम्या=मनोरमा, दशा=वस्त्रान्त-सूत्रम्, अवस्था वा यस्यास्तस्याः। रक्तान्तनेत्रमण्डनया—रक्तान्तम्=अरुणप्रान्तम्, नेत्रमण्डनम्=नयनशोभनम् यस्याः, तया। अथवा रक्तान्तम्—अरुणप्रान्तम् नेत्रम्=चित्रवस्त्रविशेषम्, मण्डनम्=अलङ्करणम्, यस्यास्तया। चीनांशुकयुगलिकया=सूक्ष्म-वस्त्रयुग्मिकया। तया=दमयन्त्या इव। अङ्गे=शरीरे। परिष्वङ्गः=आलिङ्गित-शरीरः। क्रियताम्=विधीयताम्। आर्यावृत्तम् ॥ ४० ॥

हिन्दी—हे सुभग ! मनोरमदशावाली, रक्तान्त नेत्रों से शोभित अथवा लाल चित्रवस्त्रों से अलङ्कृत चीनांशुकयुगलिका ( झीने रेशमी वस्त्रयुगल वाली—अथवा वस्त्रों की जोड़ी ) दमयन्ती के समान तुम्हारे अङ्ग में आलिङ्गन करे ॥ ४० ॥

**अयं च—**

**उज्ज्वलसुवर्णपदकस्तस्याः सन्देशकथनदूत इव ।**
**रुचिरमणिकर्णपूरः श्रयतु श्रवणान्तिकं भवतः ॥ ४१ ॥**

अन्वयः—उज्ज्वलसुवर्णपदकः, तस्याः रुचिरमणिकर्णपूरः भवतः श्रवणान्तिकं सन्देशकथनदूत इव श्रयतु ॥ ४१ ॥

सुधा—उज्ज्वलेति । उज्ज्वलसुवर्णपदकः—उज्ज्वलम्=कान्तिमत्, सुवर्णम्=स्वर्णनिर्मितम्, पदं यस्य सः । पक्षे—उज्ज्वलानि=अग्राम्याणि, सुवर्णानि=शोभनवर्णानि, पदानि=वचनानि यत्र तथा । तस्याः=दमयन्त्याः । रुचिरमणिकर्णपूरः—रुचिरमणेः=मनोरममणेः, कर्णपूरः=कर्णाभरणम् । सन्देशकथनदूत इव=सन्देशवाहक इव । भवतः=तव । श्रवणान्तिकम्=कर्णसमीपम् । श्रयतु=आश्रयतु ॥४१॥

हिन्दी—और यह उज्ज्वल सुवर्ण पद ( स्वर्णनिर्मित--सुन्दरवर्णों वाला ) उसका सुन्दर मणि का कर्णपूर ( झुमका ) आभूषण सन्देशवाहक दूत के समान आपके कानों का आश्रय बने ॥ ४१ ॥

किञ्चान्यत्—

**आनन्ददायिनस्ते कुण्डिननगरे कदा भविष्यन्ति ।**
**त्वन्मुखकमलविलोलन्नागरिकानयनषट्पदा दिवसाः ॥ ४२ ॥**

अन्वयः—ते आनन्ददायिनः, त्वन्मुखकमलविलोलन् नागरिकानयनषट्पदाः दिवसः कुण्डिननगरे कदा भविष्यन्ति ॥ ४२ ॥

सुधा—आनन्देति । ते=तथाविधाः । आनन्ददायिनः=सुखदाः । त्वन्मुखकमलविलोलन्नागरिकानयनषट्पदाः—तव मुखकमलम्=मुखमेव कमलम्, तस्मिन्, विलोलन्तः=चञ्चलाः नागरिकानयनषट्पदाः=सभ्यजनानयनभ्रमरा इव । दिवसाः=दिनानि । कुण्डिननगरे=कुण्डिनपुरे । कदा=कस्मिन् काले । भविष्यन्ति । आर्यावृत्तम् ॥ ४२ ॥

हिन्दी—वे आनन्ददायक दिवस कुण्डिन नगर में कब होंगे जब तुम्हारे मुखकमल पर सभ्यजनों के चञ्चल नयन भ्रमरों जैसे मँडरायेंगे ॥ ४२ ॥

**एवमाविर्भावितप्रश्रयमुज्ज्वलितानुरागमुदीरितादरमाप्यायितप्रणयमभिधाय स्थितवति किन्नरे, नरेश्वरो दमयन्तीप्रहितप्राभृतानि स्वयमादरेण गृहीत्वा, 'सुन्दरक, तस्याः सन्देश एवास्माकं कर्णपूरः, परिकरोऽयं मणिकर्णावतंसः, तस्याः सुगृहीतेन नाम्नैव वयं मुद्रिताः प्रपञ्चोऽयमङ्गुलीमुद्रालङ्कारः, तदनुरागेणैव वयमाच्छादिताः पुनरुक्तमाच्छादनयुगलमपरं च युवां प्रेषयन्त्या तया किं न प्रहितमस्माकम्, किमन्यत्त्वत्तोऽपि प्रियं प्राभृतं भविष्यतीति । तदेहि शिबिरमनुसरामः' इत्यभिधाय बहु मानयन् किन्नरमिथुनमतिचपलकपिकुलान्दोलिततरुशिखराग्रगलितशिलास्फालनस्फुटत्फलरससुगन्धिता स्रवत्कुसुममकरन्दद्रवार्द्रितपांसुपटलेन वर्त्मना निजावासमुदचलत् ।**

सुधा—एवमिति । एवम्=इत्थम् । आविर्भावितप्रश्रयम्—आविर्भावितम्=प्रकटितम्, यत्प्रश्रयम्=नम्रत्वम्, तत् । उज्ज्वलितानुरागम्=प्रस्फुटितानुरागम् । उदीरितादरम्=उच्चारितसम्मानम् । आप्यायितप्रणयम्=आप्लावितानुरागम् । अभि-

धाय=उक्त्वा। किन्नरे=किंपुरुषे। स्थितवति=अवस्थिते। नरेश्वरः=नृपो नलः। दमयन्तीप्रहितप्राभृतानि—दमयन्त्या, प्रहितानि=प्रेषितानि, प्रभृतानि= उपहारवस्तूनि। स्वयम्=आत्मना। आदरेण=सम्मानेन। गृहीत्वा=अधिगृह्य। सुन्दरक=अयि सुन्दरक! तस्याः=दमयन्त्याः। सन्देशः=समाचारः एव। अस्माकम्=प्रेमिजनानाम्। कर्णपूरः=श्रोत्राभरणम्। अयम्=एषः। परिकरः=परिजनवर्गः। मणिकर्णावतंसः=मणिश्रोत्राभरणम्। तस्याः=प्रेयस्याः। सुगृहीतेन नाम्ना=नामग्रहणमात्रेणैव। वयं मुद्रिताः=मुद्रिकायुक्ताः। अयम्=एषः। अङ्गुलीमुद्रालङ्कारः =अङ्गुलीयकाभरणम्। प्रपञ्चः=वञ्चनामात्रम्। तदनुरागेण एव=तस्याः प्रेम्णैव। आच्छादितः=आवृताः। अपरम्=अन्यत्। आच्छादनवस्त्रयुगलम्=आवरणवासोमिथुनम्। पुनरुक्तम्=पुनर्भाषितम्, यथा अस्ति। युवाम्=किन्नरयुगलम्। प्रेषयन्त्या प्रहितवत्या। तया=देव्या दमयन्त्या। अस्माकम्=अस्मदीयम्। किं न प्रहितम्= किन्न प्रेषितम्। अपितु सर्वं प्रहितमिति। त्वत्तः=भवत्तः अपि। अन्यद्=अपरम्। प्रियम्=रुचिकरम्। प्राभृतम्=उपहारवस्तु। किं भविष्यति। इति। तद्=अतः। एहि=आगच्छ। शिविरम्=आवासस्थलम्। अनुसरामः=अनुगच्छामः। इत्यभिधाय=एवं कथयित्वा। किन्नरमिथुनम्=किं पुरुषयुगलम्। मानयन्=सभाजयन्। अतिचपलकपिकुलान्दोलिततरुशिखराग्रगलितशिलास्खलनस्फुटत्फलरससुगन्धितास्रवत्कुसुममकरन्दद्रवार्द्रितपांसुपटलेन—अतिचपलैः=महच्चञ्चलैः, कपिकुलैः= वानरवृन्दैरान्दोलिताः=कम्पायमानाः, ये तरवः=पदपाः, तेषां शिखरेभ्यः=शिखराग्रभागेभ्यः, स्फालनेन=पतनेन, स्फुटन्ति,=प्रस्फुटन्ति, फलानि, तेषां रसेन सुगन्धितम् तथा चास्रवताम्=अपतताम्, कुसुमानाम्=पुष्पाणाम्, मकरन्दम्=मधुरसम्, तदेव द्रवम्, तेनार्द्रितम्=आर्द्रीकृतम् यस्य पांसुलपटलम्=रजःपटलम्, तथाविधेन। वर्त्मना= मार्गेण। निजवासम्=स्वनिवासस्थलम्। उदचलत्=उच्चचाल।

**हिन्दी**—इस प्रकार नम्रता-प्रार्थना सहित उज्ज्वल अनुराग, आदरपूर्वक कथन, तथा प्रगाढ़ प्रेमपूर्वक बातें कर किन्नर के चुप हो जाने पर नृप नल दमयन्ती द्वारा भेजे गये उपहारों को आदर से स्वयम् ग्रहणकर—"हे सुन्दरक! उनका सन्देश ही हमारे लिए कर्णपूर आभूषण जैसा है, यह परिजन ही मणिकर्णाभूषण है। उनके नाम लेने मात्र से ही हम मुद्रित हैं। यह अङ्गुलीयक मुद्रा (अँगूठी) आभूषण तो प्रपञ्च (झञ्झट) हैं। उनके अनुराग से ही हम आच्छादित हो चुके हैं। यह दूसरा आच्छादन वस्त्रयुगल तो पुनरुक्त है। आप दोनों को भेज देने पर उन्होंने हमें क्या नहीं भेज दिया! क्या आप से बढ़कर भी कोई और प्रिय उपहार होगा! अतः आओ, शिविर को हम चलते हैं।" यह कहकर और किन्नर का सत्कार करते हुये नरपति ऐसे मार्ग से अपने निवास स्थान को उठकर चल दिये जो अत्यन्त चपल वानरवृन्द द्वारा झकझोरे गये वृक्षों के शिखराग्र से गिरे तथा शिलातल की चोट से फूटे फलों के रस सौरभ से सुगन्धित था, तथा झड़ रहे पुष्प-मकरन्द रस से जहाँ की धूल गीली बन गई थी।

**उच्चलिते च पश्चिमाम्भोनिधिसलिलक्षालितपादपल्लवे वासार्थिनीवास्तगिरिगह्वरं विशति वियद्वीथीपान्थे विवस्वति, क्रमेण तस्यां दिशि दिनकररथचक्रचङ्क्रमणचूर्णनोच्चलन्मन्दरगिरिगैरिकाधूलिपटलोल्लोल इवोल्लास सन्ध्यारागः।**

**सुधा**—उच्चलित इति। पश्चिमाम्भोनिधिसलिलक्षालितपादपल्लवे—पश्चिमे=प्रतीच्यां दिशि, अम्भोनिधेः=जलनिधेः, सलिले=पयसि, क्षालिते=धौते, पादलल्लवे=चरणदले, यस्य तादृशे। वासार्थिनि इव=निवासाकांक्षिणि समम्। वियद्वीथीपान्थे—वियद्वीथ्याः=अकाशवीथ्याः, पान्थः=पथिकः, तस्मिन्। विवस्वति=भास्करे। अस्तगिरिगह्वरम्=अस्ताचलगुहाम्। प्रविशति=विशति सति। क्रमेण=क्रमानुसारम्। तस्यां दिशि=प्रतीचीदिशायाम्। दिनकररथचक्रचङ्क्रमणचूर्णनोच्चलन्मन्दरगिरिगैरिकाधूलिपटलोल्लोल इव—दिनकरस्य=सूर्यस्य, रथचक्रस्य=स्यन्दनचक्रस्य, चङ्क्रमणेन=भ्रमणेन, चूर्णनेन=पिष्टेन, अत उच्चलतः=उद्गच्छतः, मन्दरगिरिगैरिकाधूलेः—मन्दराचलगैरिकारेणोः, पटलस्य=पट्टस्य, य उल्लासः=अरुणत्वम्, तथा। उल्लासः=आनन्दः। सन्ध्यानुरागः=सान्ध्यारुणत्वम्। उदपतत्=उत्तिष्ठत्। इति।

**हिन्दी**—पश्चिम पयोनिधि जल में पादपल्लव धोकर निवासनिमित्त आकाशवीथी के पथिक भगवान् विवस्वान् ( सूर्यदेव ) के अस्ताचल चले जाते ही क्रमशः उसी दिशा ( पश्चिम ) में दिनकर के रथचक्र के चक्करों से पिसकर उड़ रही मन्दराचल पर्वत की गेरुई धूलपटल की लालिमा सदृश सान्ध्य लालिमा उमड़ पड़ी।

**तेन च संवलितानि विजृम्भितुमारभन्त जम्भनिसुम्भनककुभिविपीनजरत्कृकवाकुकन्धरारोमरोचींषि तमांसि।**

**सुधा**—तेनेति। तेन=सन्ध्यानुरागेण। विपिनजरत्कृकवाकुकन्धरारोमरोचींषि—विपिनस्य=काननस्य, जरत्कृकवाकवः=वृद्धमयूराः, तेषां कन्धरेषु=स्कन्धदेशेषु यानि रोमाणि=लोमानि, तद्वद्रोचींषि=रुचिराणि, तमांसि=अन्धकाराणि। सम्वलितानि=समृद्धानि। जृम्भनिसुम्भनककुभि—जृम्भनिसुम्भनस्य=शक्रस्य, ककुभि=दिशायाम्, पूर्वे। विजृम्भितुम्=व्याप्तुम्। अरभन्त=प्रारभन्त।

**हिन्दी**—इससे जङ्गल के वृद्ध कृकवाकु ( मयूर ) पक्षियों की गर्दन के बालों की कान्ति सदृश अन्धकार बढ़कर ऐन्द्री दिशा ( पूर्व ) में फैलने लगा।

**ततश्च नष्टचर्याक्रीडयेवादर्शनमायान्तीषु दिक्कन्यकासु, वनमुनिहोमधूमगन्धेन सन्तर्प्यमाणासु वनदेवतासु, निद्रान्धसिन्धुरयूथेष्विवोन्नतवप्रस्थलीषु परिणमत्सु शनैस्तिमिरेषु, जाते मनाग्भिन्नाञ्जनपत्रस्तबकिते निशामुखे, नरपतिस्तेन किन्नरमिथुनेन सार्धमर्धपथायातप्रज्वलितदीपिकापाणिपरिजनपरिकरितः शरणागतकपोतमुत्पतितोलूककृतशब्दं शिविमिव शिबिरसन्निवेशमविशत्।**

**सुधा**—ततश्चेति । ततश्च=तदनन्तरञ्च । नष्टचर्याक्रीडया इव—नष्टचर्या=शिशुक्रीड़ा, तयेव । दिक्कन्यकासु=दिग्बालासु । अदर्शनम्=अलक्षत्वम् । आयान्तीषु=आगच्छन्तीषु । वनमुनिहोमधूमगन्धेन—वने=आरण्ये, मुनिहोमस्य=मुनियज्ञस्य, धूमेन यो गन्धः=सुरभिस्तेन । वनदेवतासु=वनदेवीषु । सन्तर्प्यमाणासु=प्रसन्नासु । निद्रान्धसिंधुरयूथेषु—निद्रया अन्धाः ये सिन्धुराः=निद्राकुलितगजाः, तेषाम् यूथेषु=वृन्देषु, इव=यथा । उन्नतवप्रस्थलीषु उच्चस्थानेषु । शनैः=मन्दम् । परिणमत्सु=परिगच्छत्सु । मनाक्=किञ्चित् । भिन्नाञ्जनपत्रस्तबकिते=विकसिताञ्जन दलपुञ्जे । निशामुखे=सन्ध्यामुखे । जाते=सञ्जाते । नरपतिः=भूपतिर्नलः । तेन=उपर्युक्तेन । किन्नरमिथुनेन=किन्नरयुगलेन । सार्धम्=साकम् । अर्धपथायातप्रज्ज्वलितदीपिकापाणिपरिजनपरिकरितः—अर्द्धपथे=अर्द्धमार्गे आयाताः=समागताः प्रज्ज्वलिताः । दीपिकाः=दीप्त्यः ( 'मशाल' इति भाषायाम् ), पाणिषु=हस्तेषु, येषां तथाविधैः, परिजनैः=सेवकैः, परिकरितः=सर्वतोमण्डलीकृतः । शरणागतकपोतम्=शरणार्थिपारावतम् । उत्पतितः उलूकः=घूकस्तस्मै, कृतशब्दः—कृतः शब्दो येन=दत्ताभयो येन तथाविधम् । शिविम्=नृपशिविसदृशम् । शिविरसन्निवेशम्=आवाससन्निकटम् । अविशत्=प्राविशत् । निशासु हि कपोताः, शरणम्=नीडम् यान्ति उलूकाश्चोड्डीयन्ते । उपमाने तु "नारदकृतां शिविप्रशंसामसूयन्तौ कपोतोलूकवेषधारिणौ, शक्राग्नी देवौ सत्यं जिज्ञासमानौ शिविनृपमागतौ ।" इत्यागमः ।

**हिन्दी**—तदनन्तर बच्चों की विशेष-क्रीडा के समान ( डुकाडम्मर या लुकाछिपी खेल जैसी ) दिग्वधुओं के अलक्षित हो जाने पर बनवासी मुनिजनों के होमधूम की सुगन्ध से वनदेवियों के प्रसन्न हो जाने पर नींद से व्याकुल गजयूथों के उच्च स्थलों पर चले जाने के समय धीरे-धीरे अन्धकार के प्रभावशाली हो जाने पर कुछ-कुछ अञ्जन-पत्र के गुच्छों जैसे निशामुख ( सन्ध्या ) के आते ही नृपति ने उस किन्नर-मिथुन के साथ आधे मार्ग तक भेजने के लिए आये, हाथों में मशालें लिए परिजनों से घिरे हुए शरणागतकपोत के ऊपर झपटते हुए श्येन को दोनों की रक्षा का वचन देने वाले राजा शिवि के समान अपने शिविर में प्रवेश किया ।

**टिप्पणी—शिवि**—प्राचीन काल में महाराज शिवि की प्रशंसा सुनकर देवराज इन्द्र तथा अग्निदेव को ईर्ष्या हो उठी । यह दोनों क्रमशः श्येन एवं कपोत का वेष धारण कर शिवि की परीक्षा लेने के लिए गये । कपोत रक्षा हेतु शिवि की गोद में जा गिरा तथा श्येन पीछे से छपटता हुआ—भूखे की प्राणरक्षा हेतु कपोत को छोड़ देने के लिए राजा शिवि से याचना करने लगा । दयालु तथा शरणगतरक्षक राजा शिवि ने अपने शरीर के मांस को देकर धर्मरक्षा की । परीक्षा में सफल राजा शिवि को प्रसन्न होकर इन्द्र तथा अग्नि ने वरदान देकर पुनर्जीवित कर दिया । यह उपाख्यान महाभारत तथा अन्य अनेक पुराणों में आता है ।

**तत्र च क्रमेण कृतकरणीयस्त्वरमाणपाचकवृन्दोपनीतमुत्पतत्पाकपरिमलस्पृहणीयमत्युष्णमेदुरमांसोपदंशमाज्यप्राज्यमुपभुज्य पुष्कराक्षकिन्नर-**

**मिथुनाप्तजनैः सह मधुररससारमाहारम्, अनन्तरमाचान्तःशुचिचन्दनोद्वर्त्तितकरः कर्पूरपारीपरिकरितताम्बूलोज्ज्वलवदनारविन्दः 'सुन्दरक, कमपि प्रस्तारय विद्याविनोदं त्वयापि विहंगवागुरिके, गीयतां किमपि मधुरम्' इति मृदुमणिपर्यङ्किकासुखासीनः किन्नरमिथुनमादिदेश।**

सुधा—तत्रेति। तत्र=तस्मिन् शिविरे। क्रमेण=क्रमशः। कृतकरणीयः—कर्त्तुं योग्यं करणीयम्, कृतं करणीयम्=सम्पादिताह्निकं कर्म येन सः। त्वमाणपाचकवृन्दोपनीतम्—त्वरमाणेन=द्रुतगतिमानेन, पाचकवृन्देन=सूपकारसमूहेनोपनीतम्=प्रापितम्। उत्पतत्पाकपरिमलस्पृहणीयम्—उत्पतता=उद्गच्छता, पाकपरिमलेन=भोज्यसुगन्धेन, स्पृहणीयम्=मनोहरम्। उत्युष्णमेदुरमांसोपदंशम्=महदुष्णम्, मेदुरमांसोपदंशम्=पोषकमांसोपदंशम्। आज्यप्राज्यम्=घृतसिक्तं भोज्यपदार्थम्। पुष्कराक्षकिन्नरमिथुनाप्तजनैः—पुष्कराक्षेण किन्नरमिथुनेन, आप्तजनैः=सभ्यलोकैश्च। सह=समम्। मधुररससारम्=मधुरसयुक्तम्। आहारम्=भोजनम्। उपभुज्य=भुक्त्वा। अनन्तरम्=पश्चात्। आचान्तःशुचिचन्दनोद्वर्तितकरः—आचान्तः=आचमनान्ते शुचि=पवित्रम्, चन्दनम्=मलयजम्, तेनोद्वर्तितः करः=उद्वर्तितपाणिः यस्य सः। कर्पूरपारीपरिकरितताम्बूलोज्ज्वलवदनारविन्दः—कर्पूरपारी=कर्पूरखण्डम्, तेन परिकरितः=परिवृत्तः, ताम्बूलपत्रेण उज्ज्वलम्=शोभितम्, वदनारविन्दम्=मुखकमलम्, यस्य तम्। सुन्दरक=अयि सुन्दरकाभिध। कम् अपि=कञ्चिद् अपि। विद्याविनोदम्=विद्यामनोरञ्जनम्। प्रस्तारय=प्रसारय। विहङ्गवागुरिके=अयि पक्षिसुन्दरि! त्वया=भवत्या, अपि। किमपि मधुरम्=किञ्चित् मनोरम्। गीयताम्। इति=इत्थम्। मुदुमणिपर्यङ्किकासुखासीनः—मृदुमणिपर्यङ्किकायाम्=मृदुरत्नपीठिकायाम् सुखेन=आनन्देनासीनः=स्थितः नृपः। किन्नरमिथुनम्=किम्पुरुषयुगलम्। आदिदेश=आदिष्टवान्।

हिन्दी—वहाँ क्रमशः दैनिक कार्यों से निवृत्त होकर पुष्कराक्ष तथा किन्नरमिथुन एवं सभ्यजनों के साथ शीघ्रता से पाचकवृन्द द्वारा लाये गये, उड़ रही भोजन सुगन्ध के कारण रुचिकर अत्यन्त गर्म पोषक मांस को आस्वादित करते हुए, घी में तले, मधुरभोज्य पदार्थों का उपभोग करने के उपरान्त आचमन किया, फिर पवित्र चन्दन पर हाथ फेरकर कर्पूरखण्डयुक्त ताम्बूल से अपने मुखकमल को शोभित कर—"सुन्दरक, कुछ विद्याविनोद आरम्भ करो। हे पक्षिसुन्दरि! तुम भी कोई मधुर गीत गाओ।" इस प्रकार सुन्दर मणिजटिल चौकी पर सुखपूर्वक बैठे राजा ने किन्नरमिथुन को आदेश दिया।

**दर्शिते च वांशिकेन वंशमुखोद्गीर्णगान्धारपञ्चमरागस्थानके स्थिरीकृतमध्यमश्रुतिप्रसन्नप्रेङ्खोलनाप्रयोगमुचितस्थानकृतकांस्यतालमकठोरतारस्वरम्, आकर्षदिव हृदयम्, अभिषिञ्चदिवामृतेन श्रवणेन्द्रियम्, अस्तं नयदिवान्यविषयसन्धानम्, अनुच्चप्रपञ्चितपञ्चमं विपञ्चीस्वरसन्दर्भितमभूत्तत्किमपि गीतम्।**

**सुधा—दर्शित इति।** वांशिकेन—वंशीं वादयतीति वांशिकस्तेन। वंशमुखोद्-गीर्णगान्धारपञ्चमरागस्थानके—वंशमुखेन=मुरलिकया, उद्गीर्णम्=निर्गतम्, यद्-गान्धारपञ्चमरागस्थानकम्, तस्मिन्। दर्शिते=प्रदर्शिते, सति। स्थिरीकृतमध्यमश्रुति-प्रसन्नप्रेङ्खोलनप्रयोगम्—स्थिरीकृतम्=निर्धारितम्, मध्यमश्रुतिप्रसन्नप्रेङ्खोलनस्य=मध्यमस्वरप्रसादप्रेङ्खोलनस्याप्रयोगो यत्र तत्। उचितस्थानकृतकांस्यतालम्—उचित-स्थाने=उपयुक्तस्थले, कृतम्=विहितम्, कांस्यतालम् यत्र तत्। अकठोरतारस्वरम्=मृदुतारस्वरम्। हृदयम्=चेतः। आकर्षद् इव=आहरन्यथा। अमृतेन=सुधया। श्रवणेन्द्रियं=कर्णेन्द्रियम्। अभिषिञ्चद् इव=स्नापयन्निव। अन्यविषयसन्धानम्=अपरविषयचिन्तनम्। अस्तम्=समाप्तिम्। नयदिव=प्रापयन्निव। अनुच्चप्रपञ्चित-पञ्चमम्—अनुच्चम्=मन्दम्, प्रपञ्चितं, पञ्चमम्=पञ्चमस्वरम्, यत्र तत्। किमपि=किञ्चिदपि। गीतम्=सङ्गीतम्। विपञ्चीस्वरसन्दर्भितम्=तन्त्रीध्वनिसम्प्रकटितम्। अभूत्=बभूव।

**हिन्दी—**वंशी बजाने वाले बांसुरी के मुख से निकले गन्धारपञ्चम रागस्थान-वाले, मध्यमश्रुति-प्रसन्न, उपयुक्त स्थल पर झाल द्वारा ताल दिये जाने के कारण कोमल वीणा-स्वर-युक्त, मानों हृदय को खींच रहे तथा अमृत से कानों को सराबोर किये अन्य विषय के चिन्तन को समाप्त-सा कर रहे मन्द पञ्चम-स्वर-युक्त-गीत, तथा वीणा के स्वर से मिश्रित हो उठा।

**यत्र—**

**प्रसरति रणरणकरसः कुण्ठयति हठेन चित्तमुत्कण्ठा।**
**स्मरति स्मरोऽपि धनुषः प्रगुणीकृतनिशितबाणस्य॥४३॥**

**अन्वयः—**रणरणकरसः प्रसरति, उत्कण्ठा हठेन चित्तं कुण्ठयति, स्मरः अपि प्रगुणीकृतनिशितबाणस्य धनुषः स्मरति॥ ४३॥

**सुधा—प्रसरतीति।** यत्र=यस्मिन् संगीते। रणरणकरसः—रणरणस्य=उत्क-ण्ठायाः, रसः=आनन्दः। प्रसरति=विस्तारं याति। उत्कण्ठा=उत्सुकता। हठेन=बलेन। चित्तम्=मनः। कुण्ठयति=खिन्नं करोति। स्मरः=मदनः। अपि। प्रगुणीकृतनिशितबाणस्य—प्रगुणीकृताः=प्रत्यञ्चारोपिताः, निशितबाणाः=तीक्ष्ण-शराः यस्मिंस्तथाविधस्य, धनुषः=शरासनस्य। स्मरति=स्मृतिपथं नयति॥ ४३॥

**हिन्दी—**जहाँ उत्कण्ठा फैल रही थी, उत्सुकता हठात् मन को कुण्ठित कर रही थी, मदन भी प्रत्यञ्चा पर बाण चढ़ाये हुये धनुष को याद कर रहा था॥ ४३॥

**एवंविधे च व्यतिकरे वैतालिकः पपाठ—**

**'सकलविषयवृत्तीर्मुद्रयन्निन्द्रियाणां**
**हृदि विदधदवस्थां काञ्चिदुन्मादिनीं च।**
**ध्वनिरनुगतवीणानिक्वणः कोमलोऽयं**
**जयति मदनबाणः पञ्चमः पञ्चमस्य॥ ४४॥**

**सुधा—एवमिति।** एवंविधे व्यतिकरे=अवसरे। वैतालिकः=स्तुतिपाठकः। पपाठ=अपठत्—

**अन्वयः**—इन्द्रिणां सकलवृत्तीः मुद्रयन् हृदि काञ्चिद् उन्मादिनीम् अवस्थां च विदधन् अनुगतवीणानिक्वणः अयं कोमलः पञ्चबाणस्य पञ्चमः मदनबाणः ध्वनिः जयति ॥ ४४ ॥

**सकलेति।** इन्द्रियाणाम्=ज्ञानकर्मंहेत्विन्द्रियाणाम्। सकलविषयवृत्तीः=समस्तविषयप्रवृत्तीः। मुद्रयन्=नियन्त्रयन्। हृदि=चेतसि। काञ्चित=कामपि। उन्मादिनीम्=मत्तकारिणीम्। अवस्थाम्=दशाम् च। विदधन्=कुर्वन् धारयन् वा। अनुगतवीणानिक्वणः=तन्त्रीस्वरमिश्रितः। अयम्=एषः। कोमलः=मृदुः। पञ्चबाणस्य=मदनस्य। पञ्चमः=षड्जमध्यमादिषु पञ्चमसंख्यकः। मदनबाणः=कामशरः। ध्वनिः=स्वरः। जयति=सर्वोत्कृष्टः भवति। मालिनी वृत्तम् ॥ ४४ ॥

**हिन्दी**—और इस प्रकार के अवसर पर वैतालिक ने पढ़ा—

समस्त इन्द्रियों की विषय-प्रवृत्तियों को रोकता हुआ किसी मतवाली दशा को बना रहा यह वीणा-स्वर से मिश्रित कोमल पञ्चशर ( मदन ) का पञ्चम बाण सदृश स्वर धन्य है ॥ ४४ ॥

**अपि च—**

**प्रियविरहविषादस्यौषधं प्रोषितानां**
**विविधविधुरचिन्ताभ्रान्तिविश्रान्तिहेतुः।**
**अयममृततरङ्गः कर्णयोः केन सृष्टो**
**मधुररसनिधानं निःस्वनः पञ्चमस्य ॥ ४५ ॥**

**अन्वयः**—प्रियविरहविषादस्य औषधं, प्रोषितानां विविधविधुरचिन्ताभ्रान्तिविश्रान्तिहेतुः कर्णयोः अमृत-तरङ्गः मधुररसनिधानं। पञ्चमस्य अयं निःस्वनः केन सृष्टः ॥ ४५ ॥

**सुधा—प्रियेति।** प्रियविरहविषादस्य—प्रियस्य=प्रेमिजनस्य, पत्युः, विरहविषादस्य=वियोगजनितखेदस्य। औषधम्=निवारकम्। प्रोषितानाम्=विरहव्याकुलप्रियाणाम्। विविधविधुरचिन्ताभ्रान्तिविश्रान्तिहेतुः—विविधविधुराणाम्=अनेकविरहिजनानाम्, या चिन्ता भ्रान्त्यः=भ्रमाश्च, तेषाम् विश्रान्तिहेतुः=दूरीकारकः। कर्णयोः=श्रोत्रयोः। अमृततरङ्गः=सुधावीचिः। मधुररस-निधानम्—मधुररसस्य=आनन्दस्य, निधानम्=निकेतनम्। पञ्चमस्य=षड्जमध्यमादिषु पञ्चमसंख्यकस्य स्वरस्य। अयम्=एषः। निःस्वनः=मौनध्वनिः। केन सृष्टः=केनोत्पादितः। मालिनीवृत्तम् ॥ ४५ ॥

**हिन्दी—और भी**—प्रियतम के वियोगजनित विषाद को दूर करने वाली विरहिणियों की विविध वियोगजन्य चिन्ता तथा भ्रान्तियों को शान्त करने का कारण बनी हुई कानों में अमृततरङ्ग उत्पन्न कर देने वाली, आनन्द का निकेतन यह पञ्चम स्वर की मौन ध्वनि किसने उत्पन्न की है ॥ ४५ ॥

**अपि च—**

**अयं हि प्रथमो रागः समस्तजनरञ्जने।**
**यस्य नास्ति द्वितीयोऽपि स कथं पञ्चमोऽभवत् ॥ ४६ ॥**

**अन्वयः**—हि समस्तजनरञ्जने अयं प्रथमः रागः यस्य द्वितीयः अपि न अस्ति सः पञ्चमः कथम् अभवत् ॥ ४६ ॥

**सुधा—अयमिति।** हि=यतः। समस्तजनरञ्जने—समस्तजनानाम्=निखिल-लोकानाम्, रञ्जने=प्रियकरणे। अयम्=एषः। प्रथमः=प्रधानभूतः, रागः अस्ति। यस्य द्वितीयः=अपरः। अपि नास्ति, अद्वितीयत्वात्। सः=असौ। पञ्चमः=पञ्चम-संख्यकः। कथम्=केन प्रकारेण। अभवत्=बभूव। अनुष्टुब्वृत्तम् ॥ ४६ ॥

**हिन्दी**—और भी—समस्तजनों का मनोरञ्जन करने में प्रधान बना हुआ यह प्रथम राग है जिसका दूसरा तक नहीं है तो फिर यह पञ्चम कैसे हो गया ॥ ४६ ॥

**इति विविधमुदञ्चत्पञ्चमोद्गारगर्भं**
**पठति मधुरकण्ठे धाम्नि वैतालिकेऽस्मिन्।**
**अपहरति च चित्तं किन्नरद्वन्द्वगीते**
**सुखमय इव निद्रानिःस्पृहो लोक आसीत् ॥ ४७ ॥**

**अन्वयः**—इति विविधं पञ्चमोद्गारगर्भम् उदञ्चन् मधुरकण्ठे धाम्नि अस्मिन् वैतालिके पठति किन्नरद्वन्द्वगीते च चित्तम् अपहरति सुखमय इव निद्रानिःस्पृहः लोकः आसीत् ॥ ४७ ॥

**सुधा—इति विविधमिति।** इति=इत्थम्। विविधम्=बहुप्रकारम्। पञ्चमोद्-गारगर्भम्—पञ्चमस्य=पञ्चमस्वरस्योद्गारो गर्भं=अन्तरे यस्य तथाविधम्। उदञ्चन्=कथयन्। मधुरकण्ठे=कलकण्ठे। धाम्नि=तेजस्विनि। अस्मिन्=एत-स्मिन्। वैतालिके=वैतालनामदेवयोनिविशिष्टे। पठति=उच्चरति। किन्नरद्वन्द्वगीते—किन्नरद्वन्द्वस्य=किन्नरमिथुनस्य, गीतम्=गानम्, तस्मिंश्च। चित्तम्=मनः। अप-हरति=अपहरणं कुर्वति सति। सुखमय इव=परब्रह्मालोकनसमयसमुल्लासितसान्द्रा-नन्दमय इव। रहस्यं हि तत्त्वं परब्रह्मास्वादसोदरत्वं पूर्वाचार्यैः व्यचारयत्। 'सुखमय इव' 'निद्रा-निमीलित इव' इत्युभयत्रापीव-शब्दो योज्यः। अथवा सुखमयः सन्निद्रा-निमीलितः लोक इवेतीव शब्दो भिन्नक्रमे। आसीत्=बभूव। मालिनी वृत्तम् ॥४७॥

**हिन्दी**—इस प्रकार विविध विधियों से ( पञ्चम स्वर के सम्बन्ध में ) पञ्चम स्वर को उद्गार पूर्ण कथन करते हुए मधुर कण्ठ वाले, तेजस्वी इस वैतालिक के पाठ करने पर तथा किन्नरयुगल के गीतों द्वारा लोगों का चित्त आकृष्ट कर लेने पर सुखमय जैसे निद्रा के प्रति निःस्पृह जैसे सभी लोग हो गये ॥ ४७ ॥

**एवमनवरतमारोहावरोहमूर्च्छनाभङ्गिते गीतामृतस्रोतसि निमग्नमनसि कठोरितोत्कण्ठे रणरणकारम्भभाजि राजनि 'रजनि, किं न विरमसि। विवस! किं नाविर्भवसि। अध्वन्, किं न स्तोकतां व्रजसि। कुण्डिननगर,**

**किं न नेदीयो भवसि। श्रम, किमन्तरायोऽसि। विधे, किमुत्क्षिप्य न मां तत्र नयसि' इत्यनेकधा चिन्तयति स किन्नरयुवा प्रक्रमोचितश्लेषमिदमवादीत्।**

**सुधा**—एवमिति। एवम्=इत्थम्। अनवरतम्=निरन्तरम्। आरोहावरोहमूर्च्छनाभङ्गिते—आरोहेणावरोहेण मूर्च्छनाभिर्भङ्गितः=युक्तो यस्तथाविधे। गीतामृतस्रोतसि=गीतामृतमेव स्रोतः, तस्मिन्=गानसुधानिर्झरे। निमग्नमनसि—निमग्नम्=निमज्जितम्, मनः=चेतः, यस्य तादृशि। कठोरितोत्कण्ठे—कठोरिता=काठिन्ययुक्ता, उत्कण्ठा=उत्सुकता यस्य सः तस्मिन्। रणरणकारम्भभाजि—रणरणकस्य=उत्साहस्यारम्भभाजि=आरम्भशोभिनि। राजनि=नृपे। रजनि=हे रात्रि! किन्न विरमसि=किन्न समाप्ता भवसि। दिवस=हे अहः! किन्नाविर्भवसि=किन्नोदयसि। अध्वन्=हे वर्त्मन्! स्तोकताम्=अल्पीयताम्। किन्न व्रजसि=किन्न यासि। कुण्डिननगर=हे कुण्डिनपुर! नेदीयः=समीपस्थः। किन्न भवसि। श्रम=हे परिश्रम! अन्तरायः=बाधकः। किमसि=किमर्थमसि। विधे=अयि दैव! माम्=नृपं नलम्। उत्क्षिप्य=उत्क्षेपणं कृत्वा। तत्र=दमयन्तीपार्श्वे। किं न नयसि=किं न प्रापयसि। इति=इत्थम्। अनेकधा=बहुप्रकारम्। चिन्तयति=विचारयति। सः=असौ। किन्नरयुवा=किम्पुरुषतरुणः। प्रक्रमोचितश्लेषम्=प्रसङ्गानुकूलश्लिष्टम्। इदम्=एतत्। अवादीत्=अवोचत्।

**हिन्दी**—इस प्रकार निरन्तर आरोहावरोह मूर्च्छनाओं की लहरों वाले गीत रूपी अमृतस्रोत में डूबे मन वाले, उत्कण्ठा से कठोर बने हुए उत्सुकता के वेग से परिपूर्ण राजा के हो जाने पर—हे रात्रि! तू समाप्त क्यों नहीं हो जाती। रे दिवस! तू निकल क्यों नहीं आता। हे पथ! तू कम क्यों नहीं हो जाता। अरे कुण्डिनपुर! तू नजदीक क्यों नहीं आ जाता। रे परिश्रम! तू बाधक क्यों बन रहा है। विधातः! उछालकर मुझे उस स्थान पर क्यों नहीं ले चलते हो' इस प्रकार अनेकानेक बातें राजा के सोचने पर वह किन्नरयुवक प्रसङ्गानुकूल श्लेषयुक्तरूप से इस प्रकार कहने लगा—

**वर्धमानोल्लसद्रागा सुजातिमृदुपाणिका।**
**दमयन्ती च गीतिश्च कस्य नो हृदयंगमा॥ ४८॥**

**अन्वयः**—वर्धमानोल्लसद्रागा, सुजातिमृदुपाणिका दमयन्ती गीतिः च कस्य हृदयङ्गमा नो (भवति)॥ ४८॥

**सुधा**—वर्धमान इति। वर्धमानोल्लसद्रागा—वर्धमानः=प्रभविष्णुः, उल्लसन् रागः=अनुरागो यस्यां सा। सुजातिमृदुपाणिका—सुष्ठु=शोभना, जातिः=क्षत्रियाख्या यस्याः पाणिः=करः। पक्षे—वर्धमाने=तालविशेषे, उल्लसन् रागः=श्रीरागादिर्यत्र तथाविधाः, जातयः=नन्दयन्तीप्रभृतयः। पाणयः=समपाण्यादयः। दमयन्ती=भैमी। गीतिः=गायनं च। कस्य हृदयङ्गमा=कस्य चित्तव्यापिनी। नो=नैव भवती। अनुष्टुब्वृत्तम्॥ ४८॥

हिन्दी—वर्धमान सुन्दर अनुराग वाली, उत्तम क्षत्रिय जाति तथा कोमलकरों वाली दमयन्ती एवं बढ़ रहे अनुराग वाली व नन्दयन्ती आदि उत्तम जाति, समपाणि आदि गीतियों वाली यह गीति किसके हृदय को स्पर्श नहीं कर लेती है ॥ ४८ ॥

**अपि च—**

**साप्यनेककलोपेता साप्यलङ्कारधारिणी ।**
**सापि हृद्यस्वरालापा किन्त्वसाधारणा तव ॥ ४९ ॥**

अन्वयः—सा अनेककलोपेता अपि, सा अलङ्कारधारिणी अपि, सा हृद्यस्वरालापा अपि किन्तु तव असाधारणा ॥ ४९ ॥

**सुधा—साप्यनेकेति ।** सा=असौ, दमयन्ती गीतिश्च । अनेककलोपेता—अनेकाभिः =बह्वीभिः, कलाभिः=विज्ञानकौशलैः, उपेता=विभूषिता अपि । पक्षे—आवापादि-सप्तकलायुक्ता अपि । सा अलङ्कारधारिणी=आभरणधारिणी अपि । पक्षे—उपमा-रूपकाद्यलङ्कारिणी अपि । सा हृद्यस्वरालापा—हृद्यः=हृदयस्पर्शी, स्वरः=कण्ठ-शब्दः, आलापः=मिथोभाषणं च यस्याः सा अपि । पक्षे—हृदयहारिणः स्वराः=षड्-जादयः सप्त आलापः=आलप्तिर्यस्याः सा अपि । किन्तु=किञ्च । असाधारणा= असामान्या अनन्यविषयत्वादेकाश्रया । पक्षे—गीतिस्तु साधारणा जातिरसाधारणा चेति । अनुष्टुब्वृत्तम् ॥ ४९ ॥

हिन्दी—और भी—( दमयन्ती पक्ष में ) अनेक विज्ञानकौशलादि कलाओं से युक्त होती हुई आभूषणधारिणी होकर भी, हृदयस्पर्शी परस्पर वार्तालाप करने वाली होकर भी वह तुम्हारी होने के कारण असामान्य है । ( गीति पक्ष में ) आवाप आदि कलाओं से युक्त होकर भी, उपमा रूपकादि अलङ्कारों से युक्त होते हुए भी, हृदयहारी शब्दों से आलिप्त होकर भी तुम्हारी गीति असाधारण है ॥ ४९ ॥

**टिप्पणी—आवाप कला—**संगीत शास्त्र में आवाप आदि सप्त कलाएँ होती हैं जिनके सम्बन्ध में वर्णन मिलता है—'पताकेनावकृष्टिश्च विरलाङ्गुलिना च या । आवाप इति विज्ञेया कलाविद्भिस्तु सा कला ॥'

**अपि च—**

**संगीतका त्वदौत्सुक्यात्त्वां स्मरन्ती समूर्च्छना ।**
**किं तु तस्यास्त्वयि स्वामिल्लयभङ्गो न दृश्यते ॥ ५० ॥**

अन्वयः—स्वामिन् ! त्वदौत्सुक्यात् त्वां स्मरन्ती संगीतका समूर्च्छना (भवति) किन्तु तस्याः लयभङ्गः त्वयि न दृश्यते ॥ ५० ॥

**सुधा—सङ्गीतकेति ।** स्वामिन्=प्रभो ! त्वदौत्सुक्यात्—त्वयि औत्सुक्यं त्वदौ-त्सुक्यम्, तस्माद्धेतोः । त्वाम्=भवन्तम् । स्मरन्ती=स्मृतिपथं नयन्ती । संगीतका—सम्यग् गीतं प्रख्यातिरस्याः सा । समूर्च्छना—सह मूर्च्छनया वर्तत इति=समोहा ( भवति ) । पक्षे—सङ्गतं गीतं स्वरगुणदूषणग्रामश्रुतियतिमूर्च्छनालक्षणं यस्यां तादृशी गीतिः । किन्तु तस्याः=दमयन्त्याः गीत्याश्च । लयभङ्गः—लयः=तत्परता,

तस्य भङ्गः=नाशः। पक्षे—लयः द्रुतमध्यविलम्बितलक्षणः, तस्य भङ्गः=नाशः। त्वयि=राजनि। न दृश्यते=नैवावलोक्यते। अत्र श्लेषालङ्कारः। अनुष्टुब्वृत्तम् ॥

हिन्दी—हे नृप ! आपको पाने की उत्सुकता से आपको स्मरण करती हुई मूर्च्छनासहित गीति के समान भली प्रकार प्रख्यात कीर्ति वाली दमयन्ती बेहोश हो जाती है किन्तु गीति का लयभङ्ग जिस प्रकार नहीं होता है वैसे ही वह ( दमयन्ती ) की आप में बनी तत्परता कभी नष्ट नहीं होती है ॥ ५० ॥

**टिप्पणी—मूर्च्छना**—संगीत शास्त्र में स्वरों की तर्जना से जिसमें रागत्व उत्पन्न होता है, उसे मूर्च्छना कहते हैं। इसकी उत्पत्ति द्रुत-मध्य-बिलम्बित ग्रामों से होती है। यथा—

स्वरः सन्तर्जितो यत्र रागत्वं प्रतिपद्यते।
मूर्च्छनामिति तां प्राहुर्मुनयो ग्राम सम्भवात् ॥

यह मूर्च्छना इक्कीस प्रकार की होती है। 'सप्त स्वरास्त्रयो ग्रामाः मूर्च्छना त्वेकविंशतिः ॥' इति नाटयशास्त्रम्।

**एवमुक्तवति किन्नरेश्वरे किमप्यलीककोपकुटिललोलद्भ्रूवलयावलितकन्धरमवलोक्य किन्नरी वक्तुमारभत।**

**सुधा**—एवमिति। एवम्=इत्थम्। किन्नरेश्वरे=किन्नरपतौ। उक्तवति=कथयति। किमपि=किञ्चिदपि। अलीककोपकुटिललोलद्भ्रूवलयावलितकन्धरम्—अलीकेन=असत्येन, कोपेन=क्रोधेन, कुटिलम्=वक्रम्, लोलद्=चञ्चलम्, भ्रूवलयम्, आवलितम्=परावर्तितम्। कन्धरम्=ग्रीवादेशं, यस्य तादृशम्। अवलोक्य=दृष्ट्वा। किन्नरी=किन्नरपत्नी। वक्तुम्=कथयितुम्। आरभत=प्रारेभे।

**हिन्दी**—इस प्रकार किन्नरराज के कहने पर कुछ मिथ्या ( बनावटी ) क्रोध से कुटिल चञ्चल भौंहों तथा टेढ़ी गर्दन वाले पति से कहने लगी।

**सुन्दरक, मा मैवं वादीः।**

**सुधा**—सुन्दरक=भोः किन्नरेश्वर ! एवम्=इत्थम्। मा वादीः=मा भण।

**हिन्दी**—सुन्दरक ! इस प्रकार मत कहो।

**शुष्काङ्गी घनचार्वङ्ग्याः सुवाचः काकलीस्वरा।**
**दमयन्त्याः कथं गीतिः सादृश्यमवगाहते ॥ ५१ ॥**

**अन्वयः**—सुवाचः घनचार्वङ्ग्याः दमयन्त्याः शुष्काङ्गी काकलीस्वरा गीति सादृश्यं कथम् अवगाहते ॥ ५१ ॥

**सुधा—शुष्काङ्गीति।** सुवाचः—सुष्ठु=शोभनं, वाक्=वाणी, यस्यास्तस्याः=शोभनवाण्याः। घनचार्वङ्ग्याः—घनानि=निबिडानि, चारूणि=रुचिराणि, अङ्गानि=शरीरावयवानि, यस्यास्तादृश्याः। दमयन्त्याः—भीमपुत्र्याः। शुष्काङ्गी=नीरसशरीरा। काकलीस्वरा—कु=ईषत्, कलोऽस्यामिति काकलिः—निषादसंज्ञः, स्वरो यस्याः सा। गीतिः=गानम्। सादृश्यम्=समताम्। कथम् अवगाहते=कथं प्राप्यते।

वैसादृश्यपक्षे—शुष्कम्=अनार्द्रम् । काकलीश्लेष्मवैगुण्यात् द्विधाभूतः स्वरः । अनुष्टुब्वृत्तम् ॥ ५१ ॥

हिन्दी—मधुर वाणी वाली, सुपुष्ट तथा रुचिर अङ्गों वाली दमयन्ती की समानता नीरस ( खर-खर ) स्वर वाली गीति कैसे कर सकती है ॥ ५१ ॥

**अपि च—**

**गीतेर्ग्रामाः किल द्वित्राः सा तु ग्रामसहस्रभाक् ।**
**कूटतानघना गीतिः कथं तस्याः समा भवेत् ॥ ५२ ॥**

**अन्वयः**—किल गीतेः ग्रामाः द्वित्राः, सा तु ग्राम-सहस्रभाक् । कूटतानघना गीतिः तस्याः समा कथं भवेत् ॥ ५२ ॥

**सुधा—गीतेरिति ।** किल=नूनम् । गीतेः=गानस्य । ग्रामाः=द्रुत-मध्य-विलम्बिताः । द्वित्राः=द्वित्रिसंख्यकाः सन्ति । सा=दमयन्ती तु । ग्रामसहस्रभाक्—ग्रामसहस्रान् भजतीति तादृशी । कूटतानघना—कूटतानैः=पञ्चविंशति संख्यकैः । घनाः=घनीभूता गीतिः । कूटस्य=छलस्य, तानेन=विस्तारेण, घना दमयन्ती नास्तीति । तस्याः=दमयन्त्याः । समा=सदृशी । गीतिः । कथं भवेत्=किमिति स्यात् । अनुष्टुब्वृत्तम् ॥ ५२ ॥

**हिन्दी**—और भी—वास्तव में गीति के षड्ज-मध्यम-पञ्चम—दो तीन ग्राम होते हैं परन्तु दमयन्ती हजारों ग्रामों की स्वामिनी है। इस प्रकार ३५ कूट तानों वाली गीति कूट ( छल ) से रहित दमयन्ती की समानता कैसे कर सकती है ॥ ५२ ॥

**किं चान्यत्—ज्वरितेव बहुलङ्घनप्रयोगप्रकाशितमूर्च्छना बहुलकम्पा च, उन्मत्तेव बहुभाषा बहुताला च, वेश्येव बहुगा बहुदृष्टरागा च, अटवीव बहुककुभभेदा बहुलनिषादस्थानका च गीतिरियम् ।**

**सुधा—किं चेति।** ज्वरिता=ज्वरग्रस्ता इव । बहुलंघनप्रयोगप्रकाशितमूर्च्छना—बहुलम्=अधिकम्, घनेन प्रयोगेण=घनोच्चारणेन, प्रकाशिता=प्रकटिता मूर्च्छना यस्यास्तादृशी । अथवा बहुलंघनप्रयोगेण—बहु=अत्यन्तम्, लंघनम्=उद्ग्राहितादधिकमुच्चारणं यस्यास्तादृशी । पक्षे—बहुलंघनम्=शोषणम्, अनशनमिति, प्रयोगे=उच्चारणे, प्रकाशिता=प्रकटिता, मूर्च्छना=उत्तरमन्द्रादिकाः, यस्यां सा । अथवा प्रकृष्टाः योगाः=क्वाथादयः । मूर्च्छना=मोहः । बहुलकम्पा—बहुलः=अधिकः, कम्पः=अङ्गकृतं कम्पम्, चलनं स्वरकृतं चलनं वा यस्याम् सा । उन्मत्ता इव । बहुभाषा=भैरवीप्रभृतिषट्त्रिंशद्भाषायुक्ता । बहुताला=बहुतालचञ्चुपुटादियुक्ता । उन्मत्ता तु बहुभाषते तालिकाश्च दत्ते । वेश्येव=वाराङ्गणा इव । बहुगा—बहून्=अनेकान्, गच्छतीति तथा । बहुदृष्टरागा—बहुदृष्टः=अत्यन्तावलोकितः=प्रमदेव । रागः=श्रीरागादय; यस्यां सा । वेश्या तु बहुषु=अनेकेषु, रागः=अनुरागो, यस्याः सा । अटवी इव=अरण्यमिव । बहुककुभभेदा—बहवः=अनेकाः, ककुभभेदाः=पूर्वादिदिग्भेदा, यस्याः सा । अथवा बहुककुभभेदाः=अनेकध्वनिभेदाः यस्याः सा । बहुल-

निषादस्थानका—बहुला निषादाः=शबराः स्थानकानि=आलवालाश्च यस्यां तादृशी। पक्षे—बहुशिविरसन्निवेशो यस्यां सा। इयम्=एषा। गीतिः=गानम् अस्तीति।

**हिन्दी**—और भी—जिस प्रकार ज्वरग्रस्तस्त्री अनेक अनशन ( लंघन ) करने के कारण बेहोशी प्रकट करती है इसी प्रकार यह गीति अत्यन्त गहन मूर्च्छनाओं से सम्पन्न होती है तथा अनेक कम्पन ( कंपकपी-स्वर तथा आलाप के कारण ) युक्त है। जिस प्रकार पागल स्त्री बकवाद करती तथा अनेक प्रकार तालियाँ बजाती है वैसे ही गीति भैरवी आदि ३६ भाषाओं वाली है जिस प्रकार वेश्या बहुगामिनी, अनेकों पर अनुराग रखती है वैसे ही अनेक 'ठक्कर' आदि रागों का अनुगमन करती है। पूर्वादि अनेक दिशाओं वाली अटवी ( जंगल ) के समान, जिसमें अनेक निषादों ( भीलों ) के निवास स्थान हैं वैसे ही यह गीति अनेक ध्वनि युक्त विविध निषाद ( स्वर ) तथा स्थानक ( मन्द-मध्य-तार ) युक्त है। अत यह दमयन्ती से तुलना करने योग्य नहीं है।

**तद्वरमिदमुच्यताम्—**

**वेदविद्योपमा देवी मनोहरपदक्रमा।**
**उद्द्योतिता पुराणाङ्गमन्त्रब्राह्मणशिक्षया॥ ५३॥**

**सुधा**—तदिति। तत्=अतः। वरम्=सुष्ठु। इदम्=एतत्। उच्यताम्=कथ्यताम्।

**अन्वयः**—मनोहरपदक्रमा, पुराणाङ्गमन्त्रब्राह्मणशिक्षया उद्योतिता देवी वेदविद्योपमा ( अस्तीति )॥ ५३॥

**वेदेति**। मनोहरपदक्रमा—मनोहरः=मनोरमः पदक्रमः=पदन्यासो यस्या सा। पुराणाङ्गमन्त्रब्राह्मणशिक्षया—पुराणम्=जीर्णम्, अङ्गम्=वपुः, येषां तेषां, तथा मन्त्रप्रधानब्राह्मणानाम्=पुरोधादीनाञ्च, शिक्षया=उपदेशेन। पुराणानाम्=मार्कण्डेयादीनाम्, अङ्गानाम्=शिक्षाकल्पादीनाम्, मन्त्रब्राह्मणस्य=ग्रन्थविशेषस्य, शिक्षया=अभ्यासेन। उद्योतिता=भूषिता। देवी=दमयन्ती। वेदविद्योपमा=वेदशिक्षा-सदृशी। अस्तीति। अत्रोपमालङ्कारः। अनुष्टुब्वृत्तम्॥ ५३॥

**हिन्दी**—अतः अच्छा हो कि यह कहा जाय—

मनोरमपदक्रम से युक्त पुराण-अङ्ग-मन्त्र-ब्राह्मण-शिक्षा से उद्भासित वेदविद्या के समान देवी दमयन्ती भी जीर्ण शरीरावयवों वाले एवं मन्त्रणा में कुशल ब्राह्मणों की शिक्षा से शोभित तथा मनोहर ढंग से पदविन्यास करने वाली है॥ ५३॥

**टिप्पणी—वेदविद्या**—वेदों का पाठ—१ संहितापाठ, २ पदपाठ, ३ क्रमपाठ, ४ चर्चापाठ, ५ श्रावकपाठ, ६ चर्चकपाठ, ७ श्रवणीपाठ, ८ क्रमपारपाठ, ९ चरपाठ, १० जटापाठ तथा ११ दण्डपाठ एकादश प्रकार से किया जाता है।

**पुराण**—मार्कण्डेय-पुराणादि अष्टादश होते हैं।

**वेदाङ्ग**—व्याकरण, शिक्षा, ज्योतिष, निरुक्त, कल्प, तथा छन्द छः भेद होते हैं।

**किन्त्वियमेकपथा, सा तु दृष्टशतपथा—इत्येवमनेकविधवक्रोक्तिविशेषैरभिनन्दयति दमयन्तीकिन्नरमिथुने, भूतभूयिष्ठायां विभावर्याम्, सुरसङ्घ इवादृश्यमानमानुषे निशीथे, स्थगितवति भृङ्गभासि तमसि भुवनम्, अनन्तरमवसरपाठकः पपाठ।**

सुधा—किन्त्विति। किन्तु=किञ्च। इयम्=एषा दमयन्ती। एकपथा=एकमार्गानुगामिनी। सा=वेदविद्या तु। दृष्टशतपथा—दृष्टं=अवलोकितम्, शतपथं=शतपथब्राह्मणं, यस्यां सा। इति=इत्थम्। एवम्=अनेन प्रकारेण। अनेकविधवक्रोक्तिविशेषैः=बहुविधवक्रोक्तिकथनैः। दमयन्तीकिन्नरमिथुने=दमयन्त्याः किम्पुरुषयुगले। अभिनन्दयति=सत्कुर्वति सति। भूतभूयिष्ठायाम्—भूयिष्ठं भूता=भूतभूयिष्ठा, तस्याम्=अतिविलम्बितायाम्। विभावर्याम्=निशायाम्। सुरसङ्घ इव=देवसमूह इव। अदृश्यमानमानुषे—अदृश्यमानाः=अलक्ष्यमाणाः, मानुषाः=लोकाः, यस्मिंस्तादृशि। निशीथे=रात्रौ। भृङ्गभासि—भृङ्गाणां भासो यस्मिंस्तथाविधे=भ्रमरकान्ते। तमसि=अन्धकारे। भुवनम्=विश्वम्। स्थगितवति=आच्छादयति। अनन्तरम्=तत्पश्चात्। अवसरपाठकः=काले स्तुतिवाचकः। पपाठ=अपठत्।

हिन्दी—किन्तु यह ( दमयन्ती ) एक पथ ( केवल नल-प्रेम ) पर चलने वाली है और वह (वेदविद्या) शतपथ ( सैकड़ों मार्गों ) को देख चुकी है, ( शतपथब्राह्मण ) का अनुसरण कर चुकी है। इस प्रकार अनेकविध वक्रोक्तिविशेष से दमयन्ती के किन्नरमिथुन द्वारा अभिनन्दन किये जाने पर अधिक रात हो जाने पर सुरसमूह के समान मनुष्यों के अदृश्य हो जाने तथा भ्रमर-क्रान्ति सदृश घने अन्धकार में विश्व के लीन हो जाने पर अवसरपाठक ने पढ़ा—

**'उपरमरमणीयात्किन्नरद्वन्द्वगीता-**
**दभिभवति निशीथो नाथ नेत्राणि पश्य।**
**मदनवशविलोलल्लोचनाम्भोरुहाणां**
**मिलतु कुलवधूनां सेवको लोक एषः॥ ५४॥**

अन्वयः—नाथ ! पश्य। निशीथः नेत्राणि अभिभवति। रमणीयात् किन्नरद्वन्द्वगीतात् उपरम। मदनवशविलोलल्लोचनाम्भोरुहाणां कुलवधूनां सेवकः एषः लोकः मिलतु॥ ५४॥

सुधा—उपरमेति। नाथ=राजन्! पश्य=अवलोकय। निशीथः=रात्रिः। नेत्राणि=चक्षूंषि। अभिभवति=पराजयति। रमणीयात्=मनोरमात्। किन्नरद्वन्द्वगीतात्=किन्नरयुगलगानात्। उपरम=विरम। मदनवशविलोलल्लोचनाम्भोरुहाणाम्—मदनवशात्=कामवशात्, विलोलन्ति=चञ्चलानि, लोचनाम्भोरुहाणि=कमलनयनानि, यासां तास्तासाम्। कुलवधूनाम्=कुलाङ्गनानाम्। सेवकः=अनुचरः। एषः=अयम्। लोकः=समूहः। मिलतु=मिलने समर्थः भवतु। मालिनी वृत्तम्॥ ५४॥

हिन्दी—हे राजन्! देखिये—निशीथ नेत्रों को पराजित करने लगा है।

( अतः ) रमणीय किन्नर-युगल के गीत से विश्राम लीजिये । ( जिससे ) कामपीड़ित चञ्चल नेत्रकमलों वाली कुलाङ्गनाओं का सेवक यह समुदाय मिल सके ॥ ५४ ॥

**अपि च—**

**शतगुणपरिपाटचा पर्यटन्नन्तराले**
**कमलकुवलयानामर्धरात्रेऽपि खिन्नः ।**
**उपनदि दयितायाः क्वापि शब्दं निशम्य**
**भ्रमति पुलिनपृष्ठे चक्रवच्चक्रवाकः ॥ ५५ ॥**

**अन्वयः**—खिन्नः चक्रवाकः अर्धरात्रे अपि कमलकुवलयानाम् अन्तराले शतगुणपरिपाटचा पर्यटन् पुलिनपृष्ठे क्वापि दयितायाः शब्दं निशम्य चक्रवत् भ्रमति ॥ ५५ ॥

**सुधा—शतगुणेति** । खिन्नः=आकुलः । चक्रवाकः=चक्रवाकपक्षी । अर्धरात्रे=मध्यरात्रिकाले । कमलकुवलयानाम्=कमलानां, कुवलयानां च । अन्तराले=मध्ये । शतगुणपरिपाटचा=अनेकविधया । पर्यटन्=परिभ्रमन् । पुलिनपृष्ठे=नदीतटे । क्वापि=कुत्रापि । दयितायाः=प्रियायाश्चक्रवाक्याः । शब्दम्=रवम् । निशम्य=श्रुत्वा । चक्रवत्=चक्रसमम् । भ्रमति=अटति । मालिनी वृत्तम् ॥ ५५ ॥

**हिन्दी**—और भी—खिन्न चक्रवाक आधी रात के समय पर भी कमलों और कुवलयों के मध्य में अनेक प्रकार से परिभ्रमण करता हुआ, नदी तट पर कहीं प्रिया ( चक्रवाकी ) की गुनगुनाहट सुनकर चक्र के समान नाच रहा है ॥ ५५ ॥

**अथ यथाप्रियं प्रेषितपरिजनो रजनिशेषमतिवाहयितुमनुरूपं निरूप्य किन्नरमिथुनस्य शयनमासन्ननिद्रागृहे हंसपिच्छच्छायाच्छप्रच्छदपटाच्छादितहंसतूलतल्पमभजत् ।**

**सुधा—अथेति** । अथ=अनन्तरम् । यथाप्रियम्=आकांक्षितम् । प्रेषितपरिजनः—प्रेषितः=प्रहितः, परिजनः=सेवकवर्गः, येन तथाविधः राजा । रजनिशेषम्—रजन्याः=निशायाः, शेषम्=अवशिष्टभागम् । अतिवाहयितुम्=यापयितुम् । किन्नरमिथुनस्य=किम्पुरुषयुगलस्य । अनुरूपम्=अनुकूलम् । शयनम्=शय्याम् । निरूप्य=निरीक्ष्य । आसन्ननिद्रागृहे—आसन्ने=सन्निकटे, निद्रागृहे=शयनकक्षे । हंसपिच्छच्छायाच्छप्रच्छदपटाच्छादितहंसतूलतल्पम्—हंसपिच्छस्य=हंसपक्ष्मणः, छाया, तद्वद् अच्छम्=स्वच्छम्, यत् प्रच्छदपटम्=प्रावारकपटम्, तेन आच्छादितम्=परावृतम्, हंससदृशं शुभ्रम् । तूलतल्पम्=तूलशय्याम् । अभजत्=सिषेवे ।

**हिन्दी**—तदनन्तर परिजनों को उनकी इच्छानुसार भेज कर, अवशिष्ट रात्रि व्यतीत करने के लिए किन्नरमिथुन के अनुरूप शय्या का निरीक्षण कर पार्श्ववर्ती शयनकक्ष में राजा स्वयम् भी हंसपंख की कान्ति सदृश स्वच्छ चादर बिछे हंस जैसे शुभ्र रुई वाले पलंग पर लेट गया ।

**तत्र च क्षमयन्त्यनुरक्तोऽयमितीर्ष्ययेवानायान्त्यां निद्रायां द्रोणीद्रुमान्त-**

रालसुप्तोत्थितविविधविहंगविरुतानि विनिद्रवनदेवतापठ्यमानप्राभातिकपुण्यकीर्तनानीवाकर्णयन्ननेककालप्रणालिकापर्यायेण पर्यस्तेऽस्तगिरिमस्तके मुक्तास्तबकितनीलवितानपट इव तारातिमिरपटले, पट्टांशुकवैजयन्तीष्विव भविष्यति दिनकरोदयोत्सवे नभस्तलमलङ्कुर्वतीषु पूर्वस्यां दिशि प्रभातप्रभावल्लरीषु, वल्लकीक्वाणरमणीये श्रयति श्रवणपथमीषदुन्मिषत्कमलमुकुलमुखमुक्तमधुकरमन्द्रध्वनौ, ध्वस्तनिद्रेण प्रभातोचितषड्जानुविद्धशुद्धभाषामालपतानेन किन्नरमिथुनेन गीयमानमिमं श्लोकमश्रृणोत् ।

सुधा—तत्रेति । तत्र=तत्स्थाने । अयम्=एष नृपतिः । दमयन्त्यनुरक्तः—दमयन्त्यामनुरक्तः=दमयन्त्यासक्तः । इति=इत्थम् । ईर्ष्यया इव=ईर्ष्यां कुर्वन्निव । अनायन्त्याम्=अनागच्छन्त्याम् । निद्रायाम् । द्रोणीद्रुमान्तरालसुप्तोत्थितविविधविहंगविरुतानि—द्रोण्याम्=पर्वतगह्वरे, द्रुमाः=पादपाः, तेषाम् अन्तरालम्=अन्तरे, सुप्तोत्थितानाम्=जागृतानाम्, विविधविहंगानाम्=बहुविधखगानाम्, विरुतानि=कूजनानि । विनिद्रवनदेवतापाठ्यमानप्राभातिकपुण्यकीर्तनानि इव=विनिद्रवनदेवताभिः=जागृद्वनदेवीभिः, पठ्यमानानि=वाच्यमानानि । प्राभातिकानि=प्रातःकालिकानि, पुण्यकीर्तनानि=पुण्यस्तवनानि इव । आकर्णयन्=श्रृण्वन् । अनेककालप्रणालिकापर्यायेण=बहुकालपद्धतिपर्यायेण । अस्तगिरिमस्तके=अस्ताचलशिरसि । मुक्तास्तबकितनीलवितान इव—मुक्ताः=तारारूपमौक्तिकानि तैः, स्तबकितम्=गुच्छयुक्तम् नीलवितानम्, तस्मिन्निव । तारातिमिरपटले—ताराणाम्=नक्षत्राणाम्, तिमिरम्=तमस्तस्य पटले=पट्टे । पट्टांशुकवैजयन्तीषु=पट्टवस्त्रध्वजेषु इव । भविष्यति=आगामिकाले । दिनकरोदयोत्सवे—दिनकरस्य=सूर्यस्योदयोत्सवे=उदयरूपसमारोहे । नभस्तलम्=गगनतलम् । पूर्वस्यां दिशि=प्राचीदिशायाम् । प्रभातप्रभावल्लरीषु=प्रातःकान्तिलतासु । अलङ्कुर्वतीषु=शोभयन्तीषु । वल्लकीक्वाणरमणीये—वल्लक्याः=वीणायाः, क्वाणः=ध्वनिः, तद्वद् रमणीयम्, तस्मिन्=मनोरमे । ईषदुन्मिलत्कमलमुकुलमुखमुक्तमधुकरमन्द्रध्वनौ—ईषत्=किञ्चित्, उन्मिषताम्=उन्मुक्तानाम्, कमलमुकुलानाम्=कमलकलिकानाम्, मुखैः=आननैः, मुक्ताः=त्यक्ताः, ये मधुकराः=भ्रमरास्तेषां मन्द्रध्वनिः=मन्दस्वनस्तस्मिन् । श्रवणपथम्=कर्णमार्गम् । श्रयति=पतति सति । ध्वस्तनिद्रेण—ध्वस्ता=नष्टा, निद्रा=स्वपनम्, यस्य सः, तेन । प्रभातोचितषड्जानुविद्धशुद्धभाषाम्—प्रभातोचिताम्=प्रत्यूषकालयोग्याम्, षड्जानुभिः=षट्पदैः, विद्धाम्, शुद्धाम्=स्पष्टाम्, भाषाम् । आलपता=वदता । अनेन=एतेन । किन्नरमिथुनेन=किन्नरयुगलेन । गीयमानम्=पठ्यमानम् । इमम्=एतम् । श्लोकम्=वृत्तम् । अश्रृणोत्=आकर्णयत् ।

**हिन्दी**—वहाँ—"यह व्यक्ति दमयन्ती पर अनुरक्त है" इस ईर्ष्या से मानों नींद के न आने पर घाटी में वृक्षों के अन्तराल में सोने से उठे अनेक प्रकार के पक्षियों के कलरवों को तथा जगी हुई वनदेवियों के द्वारा पढ़ी जा रही प्राभातिक पुण्यस्तुतियों को मानों सुनते हुए, कतिपय घटिकाओं तक अस्ताचल के शिखर पर नक्षत्रों से युक्त

अन्धकार पटल के मोतियों के गुच्छों से युक्त नीले वितानपट के समान शोभित होने पर भविष्यत् काल में मानों दिनकर उदयोत्सव पर गगनतल को पट्टवस्त्र की पताकाओं से पूर्व दिशा में शोभित किये जाने पर, कानों में वीणा की ध्वनिसदृश रमणीक, अधखिली कमल-कलिकाओं के मुखों से निकल रहे मधुकरों की मन्दध्वनि के कर्णपथ पर पड़ते ही नींद भंग किये गये प्रातःकालोचित मधुकरों से विंधे शुद्ध भाषा का आलाप करते हुए किन्नरमिथुन के द्वारा गाये जा रहे इस श्लोक को राजा ने सुना।

**टिप्पणी**—द्रोणी = "मध्ये निम्नः प्रान्तयोश्चोन्नतस्तरुराजिविराजितः नौ सदृशः पर्वतादिभूभागः।" अर्थात् पर्वतों के बीच में जिसके दोनों ओर ( इधर-उधर ) ऊँचे-ऊँचे वृक्षों की पंक्तियाँ शोभित हो रही हों, ऐसा नौकाकार पर्वतादिभूभाग द्रोणी कहलाता है।

**धुतरजनिविरामोन्मीलदम्भोजराजि-**
**स्तनुतुहिनतुषारानुद्गिरद्गन्धवाहः।**
**कलितकलभकुम्भभ्रान्तिषूद्घाटितेषु**
**स्खलति निधुवनान्तश्रान्तकान्ताकुचेषु ॥ ५६ ॥**

**अन्वयः**—धुतरजनिविरामोन्मीलदम्भोजराजिस्तनुतुहिनतुषारान् उद्गिरद्गन्धवाहः कलितकलभकुम्भभ्रान्तिषु उद्घाटितेषु निधुवनान्तश्रान्तकान्ताकुचेषु स्खलति।

**सुधा—धुतेति।** धुतरजनिविरामोन्मीलदम्भोजराजिस्तनुतुहिनतुषारान्—धुतरजन्याः विरामे = निशापरिसमाप्तौ, उन्मीलन्तः = विकसन्तः, ये अम्भोजराजयः = कमलपङ्क्तयः, तेषु ये तनुतुहिनतुषाराः = क्षीणतुषारबिन्दवः, तान्। उद्गिरद्गन्धवाहः—उद्गिरन् = विकिरन्, गन्धवाहः = पवनः। कलितकलभकुम्भभ्रान्तिषु—कलितकलभानाम् = रुचिरगजशावकानाम्, कुम्भस्य = कुम्भस्थलस्य, भ्रान्तिम् = भ्रमम्, कुर्वत्सु। उद्घाटितेषु = विवृतेषु। निधुवनान्तश्रान्तकान्ताकुचेषु—निधुवनान्ते = रतिक्रीडान्ते, श्रान्तानाम् = श्लथीनाम्, कान्तानाम् = रमणीनाम्, कुचेषु = स्तनेषु। स्खलति = स्रवति। अत्र भ्रान्तिमानलङ्कारः। मालिनीवृत्तम् ॥ ५६ ॥

**हिन्दी**—उज्ज्वल रात्रि के अन्त में खिली कमलपंक्तियों पर पड़ी छोटी-छोटी ओस की बूँदों को गिराता हुआ गन्धवाह पवन सुन्दर गजकलभ के कुम्भस्थलों का भ्रम उत्पन्न करने वाले उठे हुए, रतिक्रीडा में थकी रमणियों के पयोधरों पर पड़ रहा है ॥ ५६ ॥

**तदनु पुनः प्रभातप्रहतप्रयाणभेरीरवविनिद्रितस्यापूरयतः समविषमवनविभागानुत्कल्लोलजलनिधेरिव चलतः सैन्यसमूहस्य कलकलमाकर्णयन्नुत्थाय कृतोचिताचारश्चारुर्चाचितचन्द्रचूडचरणश्चटुलखुरचारीप्रचारेणाडम्बरिततराण्डवस्य खण्डपरशोः पवलीलामिवाभ्यस्यता स्फुरद्घुरघुरायमाणघोणाप्रस्खलत्खलीनवशविगलितबहललालाजलप्लवेन वनभुवि फेनिलजल-**

**निधिमिवाकारयता जात्यतरतुरगसैन्येन परिवृतः पूर्वप्रस्थानस्थित्या प्रतस्थे ।**

सुधा—तदन्विति । तदनु=तदनन्तरम् । पुनः=भूयः । प्रभातप्रहतभेरीरवनिद्रितस्य—प्रभाते=प्रातःकाले, प्रहतेन=ताडितेन, भेरीरवेण=भेरीध्वनिना । विनिद्रस्य=निद्रारहितस्य । समविषमवनविभागान्=उच्चावचकाननभागान् । आपूरयतः=बिभ्रतः । उत्कल्लोलजलनिधेः इव=उच्छलितसागरस्येव । सैन्यसमूहस्य=वाहिनीदलस्य । कलकलम्=कोलाहलम् । आकर्णयन्=शृण्वन् । उत्थाय=उत्थित्वा । कृतोचिताचारः—कृतः=सम्पादितः, उचितः=उपयुक्तः, आचारः=व्यवहारः, येन सः=कृतनित्यकृत्यः । चारुचर्चितचन्द्रचूडचरणः—चारु=रुचिरम्, चर्चितौ=वन्दितौ, चन्द्रचूडस्य=शिवस्य, चरणौ=पादौ, येन सः । चटुलखुरचारीप्रचारेण—चटुलेन=चञ्चलेन, खुरचारिणा=खुरगत्या, प्रचारेण=प्रकृष्टतया पादसञ्चारणेन । आडम्बरिततण्डवस्य—आडम्बरितम्=अभिनीतम्, ताण्डवम्=ताण्डवलास्यम्, येन सः, तस्य । खण्डपरशोः=शिवस्य । पदलीलाम्=पदक्रीडामिव । अभ्यस्यता=अभ्यासं विदधता । स्फुरद्घुरघुरायमाणघोणाग्रस्खलत्खलीनवशविगलितबहललालाजलप्लवेन—स्फुरता=प्रस्फुरता, घुरघुरायमाणेन—'घुर् घुर्' इति क्रियमाणेन, घोणाग्रेण=नासिकाग्रभागेण, स्खलतः=प्रस्रवतः, खलीनस्य वशात् विगलितम्=विच्युतम् यद् बहलम्=बहु, लालाजलम्=लालारूपवारि, तस्य प्लवेन=प्रवाहेण । वनभुवि=अरण्यभूमौ । फेनिलजलनिधिम्—फेनिलः=फेनयुक्तः, यः जलनिधिः=सागरस्तम् । आकारयता=आह्वयता इव । जात्यतरतुरगसैन्येन=उत्तमवाजिबलेन । परिवृतः=परितः आवृतः । पूर्वप्रस्थानस्थित्या=पूर्वप्रयाणावस्थया । प्रतस्थे=प्रस्थानमकरोत् ।

हिन्दी—तदनन्तर पुनः प्रातःकाल बजायी गई भेरियों के रव से जगे हुए ऊँचे नीचे वन भागों को भरते हुए, उमड़ते हुए समुद्र के समान चल रहे सैन्यसमूह के कोलाहल को सुनते हुए उठकर, नित्यकर्म से निवृत्त होकर चन्द्रचूड़ शिवजी के चरणों को प्रणाम कर चञ्चल खुरों की विशिष्ट गति से उछलते हुए ताण्डव नृत्य कर रहे, खण्डपरशु भगवान् शिव की पदलीलाओं का मानों अभ्यास कर रहे, फड़कते हुए घुर्र घुर्र की आवाज कर रहे नासिका के अग्रभाग से खिसकती हुई लगाम को धारण करने के कारण टपक रही लार की जलधारा से मानों वन भूमि पर फेनिल सागर का आह्वान करते हुए उत्तम घुड़सवार सेना से घिरे हुए पूर्वप्रस्थान की दशा से राजा ने प्रस्थान किया ।

**स्थपुटस्थलीस्थितं स्थलमेकव्यग्रमग्रे राजा गजग्रामण्यमवलोक्य पुष्कराक्षमभाषत ।**

सुधा—स्थपुटेति । स्थपुटस्थलीस्थितम्—स्थपुटस्थल्याम्=उच्चावचभूमौ स्थितम् । स्थूलम् । एकाग्रम्=मौनम् । अग्रे=सम्मुखे । गजग्रामण्यम्=हस्तिश्रेष्ठम् । अवलोक्य=दृष्ट्वा । राजा=नृपः नलः । पुष्कराक्षम्=तन्नामानम् । अभाषत=अकथयत् ।

हिन्दी—अव्यवस्थित ( ऊबड़ खाबड़ ) भूमि पर स्थूल ( मोटे ) चुपचाप खड़े सामने हाथी को देखकर राजा ने पुष्कराक्ष से कहा—

**भद्र—**

**सालानकमनालानमत्युन्नतमनुन्नतम् ।**
**दन्तवन्तमदन्तं च पश्यैनमगजं गजम् ॥ ५७ ॥**

अन्वयः—सालानकम् अनालानम् अत्युन्नतम् अनुन्नतं दन्तवन्तम् अदन्तं च एनम् अगजं गजं पश्य ॥ ५७ ॥

सुधा—सालानकमिति । सालानकम्—अलीनाम् समूहः आलम्, आलेन=भ्रमरसमूहेन, आनकेन=दुन्दुभिना च सहितम् सालानकम् । अनालानम्=निःशृङ्खलम् । अत्युन्नतम्=अत्युच्चम् । अनुन्नतम्—नास्ति उन्नता प्रेरणा अस्येति=स्वच्छन्दपरम् । दन्तवन्तम्=दन्तिनम् । अदन्तम्=तृणादिकं खादन्तम् । अगजम्—अगात्=पर्वतात् जातम् च । एनम्=अमुं, पुरोवर्तिनम् । गजम्=हस्तिनम् । पश्य=अवलोकय । अत्र विरोधाभासालङ्कारः । अनुष्टुब्वृत्तम् ॥ ५७ ॥

हिन्दी—हे भद्र ! भ्रमर-समूह रूपी नगाड़ों से युक्त शृङ्खलादि रहित ( स्वछन्द ) अत्यन्त ऊँचे परन्तु उन्नत प्रेरणा रहित दाँतों वाले, चारा खा रहे पहाड़ी क्षेत्र से उत्पन्न हुए इस हाथी को देखो ॥ ५७ ॥

**अयं हि मन्मथविलासेषु परं वैदग्ध्यमवलम्बते ।**

सुधा—अयमिति । हि=यतः । अयम्=एषः गजः । मन्मथविलासेषु=कामक्रीडासु । परम्=अत्यन्तम् । वैदग्ध्यम्=चातुर्यम् । अवलम्बते=आश्रयते ।

हिन्दी—क्योंकि यह हाथी मदन-क्रीडाओं में अत्यन्त निपुण है ।

**तथाहि—**

**मृदुकरपरिरम्भारम्भरोमाञ्चितायाः**
**सरसकिसलयाग्रग्रासशेषार्पणेन ।**
**मदमुकुलितचक्षुश्चाटुकारी करीन्द्रः**
**शिथिलयति रिरंसुः केलिकोपं प्रियायाः ॥ ५८ ॥**

अन्वयः—मदमुकुलितचक्षुः चाटुकारी रिरंसुः करीन्द्रः सरसकिसलयाग्रग्रासशेषार्पणेन, मृदुकरपरिम्भारम्भरोमाञ्चितायाः प्रियायाः केलिकोपं शिथिलयति ॥ ५८ ॥

सुधा—मृदुकरेति । मदमुकुलितचक्षुः—मदेन=क्षीबेन, मुकुलिते=अर्द्धनिमीलिते, चक्षुषी=नेत्रे, यस्य तथाविधः । चाटुकारी=चाटुकारितायुक्तः । रिरंसुः—रन्तुम्=रमणं कर्त्तुम् इच्छुः । करीन्द्रः=गजराजः । सरसकिसलयाग्रग्रासशेषार्पणेन—सरसस्य=रसयुक्तस्य, किसलयाग्रस्य=कोमलदलस्याग्रभागस्य, ग्रासम्=कवलम्, तस्य शेषस्य=खादनावशिष्टस्यार्पणेन=दानेन । मृदुकरपरिरम्भारम्भरोमाञ्चितायाः—मृदुकरस्य=कोमलशुण्डायाः, परिरम्भः=आलिङ्गनम्, तस्यारम्भेण, रोमाञ्चः=लोमहर्षणम्, यस्यास्तस्याः । प्रियायाः=दयितायाः, करिण्याः । केलिकोपम्=सुरतिक्रोधम् । शिथिलयति=श्लथयति । मालिनीवृत्तम् ॥ ५८ ॥

हिन्दी—और भी—मद से अधखुली आँखें किये चाटुकार ( खुशामदी ) रमण करने का इच्छुक गजराज कोमल सूँड के आलिङ्गन से रोमाञ्चयुक्त प्रिया के केलि-कोप को शिथिल कर रहा है ॥ ५८ ॥

**अपि च—**

**उपनयति करे करेणुकायाः किसलयभङ्गमनङ्गसङ्गताङ्गः ।**
**स्पृशति च चलदक्षिपक्ष्मलेखं मुखमखरेण करेण रेणुदिग्धम् ॥ ५९ ॥**

अन्वयः—अनङ्गसङ्गताङ्गः करेणुकामः करे किसलयभङ्गम् उपनयति चलदक्षिपक्ष्मलेखं रेणुदिग्धं मुखं च अखरेण करेण स्पृशति ॥ ५९ ॥

**सुधा—उपनयतीति।** अनङ्गसङ्गताङ्गम्—अनङ्गस्य=मदनस्य, सङ्गतेन=सङ्गमनेन, अङ्गम्=शरीरम् यस्य सः=कामपीडितशरीरो गजः । करेणुकायाः=प्रियहस्तिन्याः । करे=शुण्डे । किसलयभङ्गम्=मृदुपत्रखण्डम् । उपनयति=ददाति । चलदक्षिपक्ष्मलेखम्—चलदक्ष्णोः=चपलनयनयोः, पक्ष्मलेखम्=निमिषपंक्तिम् । रेणुदिग्धम्=रेणुरूषितम् । मुखम्=आननम् च । अखरेण=मृदुना । करेण=शुण्डेन । स्पृशति=स्पर्शं करोति । आर्या वृत्तम् ॥ ५९ ॥

हिन्दी—और भी—कामपीडित शरीर वाला यह हाथी हथिनी की सूँड में कोमल पत्ते ( किसलय ) दे रहा है तथा चञ्चल आँखों के पलकों की पंक्ति को एवम् धूल से सने मुख को कोमल सूँड से स्पर्श कर रहा है ॥ ५९ ॥

**अथवा विवेकपूर्वव्यवहारविचारेष्वमी मानुषेभ्यः स्तोकमेवावहीयन्ते ।**

**सुधा—अथवेति ।** विवेकपूर्णव्यवहारविचारेषु=ज्ञानयुक्तव्यापारविचारेषु च । अमी=एते ( पशवः ) । मानुषेभ्यः=मानवेभ्यः । स्तोकम्=अल्पम् एव । हीयन्ते=न्यूनाः भवन्ति ।

**हिन्दी—अथवा—**विवेकपूर्ण व्यवहार तथा विचारों में यह पशु मनुष्य से कुछ ही कम होते हैं ।

**तथाहि—श्रूयते पुरा किल नारायणनाभ्यम्भोरुहकुहरकुटीमधिशयानस्य वेदविद्यां निगदतो भगवतः पितामहस्य बृहद्रथन्तरविकीर्णभासमानानि सामानि गायतः सामस्तोभरसनिष्यन्दादुदपद्यन्तैरावतसुप्रतीककुमुदवामनाञ्जनप्रभृतयोऽष्टौ दिग्गजेन्द्राः ।**

**सुधा—श्रूयत इति ।** श्रूयते=आकर्ण्यते । पुरा=प्राचीनकाले । किल इति प्रसिद्धे । नारायणस्य=भगवतो विष्णोः । नाभ्यम्भोरुहस्य=नाभिजातकमलस्य । कुहरकुटीम्=कुहरमेव वासस्थानं । तत्र अधिशयानस्य=निवासिनः । बेदविद्यां निगदतः=वेदविद्योपदेशकस्य । भगवतः=परमैश्वर्यसम्पन्नस्य । पितामहस्य=ब्रह्मणः । बृहद्रथन्तरविकीर्णभासमानानि=बृहद्रथन्तरसंज्ञाविशिष्टस्य साम्नः स्फुटविकासभाञ्जि । सामानि=सामवेदस्य मन्त्रान् । गायतः=समुच्चारयतः । सामस्तोभरसनिष्यन्दात्=सामस्तोभस्य, किंवा पाठभेदानुसारं—सामस्तोमस्य=सामसमूहस्य, रसबिन्दुभ्यः । अष्टौ=अष्टसङ्-

ख्याकाः । दिग्गजेन्द्राः=दिग्गजाः । उदपद्यन्तः=समुत्पन्नाः, तेषां नामानि—ऐरावतः, सुप्रतीकः, कुमुदः, वामनः, अञ्जनादयः (समजायन्त) ।

हिन्दी—सुना जाता है कि प्राचीन काल में जब भगवान् नारायण ( विष्णु ) के नाभिकमल के मध्य भाग रूपी कुटी ( निवासस्थान ) में निवास करते हुए ब्रह्मा जी वेदविद्या का गान कर रहे थे। उस समय बृहद्रथन्तर के कतिपय इधर-उधर बिखरे हुए साममन्त्रों को गाते हुए सामस्तोम के रसबिन्दुओं से आठ दिक्पालों की उत्पत्ति हुई, उनके नाम हैं—ऐरावत, सुप्रतीक, कुमुद, वामन, अञ्जन आदि ।

**तेभ्योऽभवन्भद्रमन्द्रमृगसङ्कीर्णजातयो गिरिचरनदीचरोभयचारिणः करिणः ।**

सुधा—तेभ्य इति । तेभ्यः=करिभ्यः । भद्रमन्द्रमृगसङ्कीर्णजातयः=भद्रादिनामभिः प्रसिद्धागजजातयः । गिरिचरनदीचरोभयचारिणः=केचित् पर्वतचारिणः, केचिन्नदीचारिणः, केचिच्चोभयचारिणः । करिणः=गजाः । अभवन्=समुत्पन्नाः ।

हिन्दी—उन हाथियों से भद्र, मन्द्र, मृग नामक पर्वत की तटहटी में घूमनेवाली, नदीतीर पर विचरण करनेवाली तथा पर्वत और नदीतीर दोनों स्थानों में घूमनेवाली हाथियों की अनेक जातियाँ उत्पन्न हुईं ।

**प्रसिद्धं चैतत् । 'सामजा गजाः' इति ।**

सुधा—प्रसिद्धमिति । प्रसिद्धं=सुविदितं । चैतत्=वृत्तान्तमिति । यत् सामजाः =सामभ्यो जाताः । गजाः=हस्तिनः, इति ।

हिन्दी—यह सर्वजन विदित है कि हाथियों का जन्म सामगान से हुआ है ।

**केचित्पुनरन्यथा कथयन्ति—किल सकलसुरासुरकरपरिवर्त्यमानमन्दरमन्थानमथितदुग्धाम्भोनिधेरजनि जनितजगद्विस्मयो लक्ष्मीमृगाङ्कसुरभिसुरद्रुमधन्वन्तरिकौस्तुभोच्चैःश्रवसां सहभूः शशधरकरकान्तिरैरावतः। तत्प्रसूतिरियमशेषवनान्यलङ्करोतीति ।**

सुधा—केचिदिति । केचित्=पशुसृष्टिविधिविशारदाः । पुनरन्यथा=गजाः सामभ्यो जाता इति सिद्धान्तमुल्लङ्घ्य । कथयन्ति=स्वाभिमतं ब्रुवते । किल=इति सुविदितम् । सकलसुरासुरकरपरिवर्त्यमानमन्दरमन्थानमथितदुग्धाम्भोनिधेः—सकलं च तत् सुरासुरं—सुराः च असुराः च तेषां समूहः=देवदानवसमूहं, तेषां कराः तत्कराः तैः, परिवर्त्यमानः यो हि मन्दरमन्थानः, मन्दर एव मथनदण्डः तेन मथितः यो दुग्धाम्भोनिधिः=क्षीरसमुद्रः तस्मात् । जनितजगद्विस्मयः=सकललोकाश्चर्यकारी । लक्ष्मीमृगाङ्कसुरभिसुरद्रुमधन्वन्तरिकौस्तुभोच्चैःश्रवसां=विष्णुपत्नीशशधरकामधेनुकल्पवृक्षधन्वन्तरिकौस्तुभाऽऽख्यमणिरुच्चैःश्रवसां । सहभूः=सहोदरः । शशधरकान्तिः=चन्द्रसमद्युतिमान् । ऐरावतः=एतन्नामको गजः । अजनि=उत्पन्नः । तत्प्रसूतिः=तस्यैव सन्ततिः । इयं=हस्तिनी । अशेषवनानि=सम्पूर्णविपिनानि । अलङ्करोतीति=मण्डयति इति ।

हिन्दी—कुछ लोग हाथियों की उत्पत्ति की कथा को दूसरे ढंग ( निम्न प्रकार ) से कहते हैं—सभी देवता तथा दानवों के हाथों द्वारा घुमाये गये मन्दराचल रूपी मन्थदण्ड (मथानि) से क्षीरसागर के मथने पर संसार को चकित कर देने वाला चन्द्रमा की कमनीय कान्ति के सदृश उज्ज्वल वर्ण वाला ऐरावत, लक्ष्मी, चन्द्रमा, कामधेनु, कल्पवृक्ष, धन्वन्तरि, कौस्तुभमणि, उच्चैःश्रवा आदि चौदह रत्न एक साथ उत्पन्न हुए, उसी की यह सन्तान सभी वनों को सुशोभित कर रही है ।

**तदेष भद्रजातिर्भविष्यति । तथाहि—**

**उच्चैःकुम्भः कपिशदशनो बन्धुरस्कन्दसन्धिः**
**स्निग्धा ताम्रद्युतिनखमणिर्लम्बवृत्तोरुहस्तः ।**
**शूरः सप्तच्छदपरिमलस्पर्धिदानोदकोऽयं**
**भद्रः सान्द्रद्रुमगिरिसरित्तीरचारी करीन्द्रः ।। ६० ।।**

अन्वयः—उच्चैःकुम्भः कपिशदशनः बन्धुरस्कन्धसन्धिः, स्निग्धा ताम्रद्युतिनखमणिः, लम्बवृत्तोरुहस्तः सप्तच्छदपरिमलस्पर्धिदानोदकः सान्द्रद्रुमगिरिसरित्तीरचारी भद्रः अयं शूरः ( अस्तीति ) ।। ६० ।।

सुधा—तदेष इति । तत्=तस्मात् कारणात्, एष सम्मुखस्थो गजः, भद्रजातिर्भविष्यति=भद्रेति विशिष्टजातौ समुत्पन्नोऽयमिति तर्कयामि, 'वर्तमानसमीपे वर्तमानवद् वा' इति वर्तमानप्रयोगः ।

सुधा—उच्चैरिति । उच्चैःकुम्भः—उच्चैः=उन्नतः, कुम्भः=ककुदः यस्य सः । कपिशदशनः=पीतरदः । बन्धुरस्कन्धसन्धिः—बन्धुरा स्कन्धसन्धिः यस्य सः=मनोरमस्कन्धसन्धिः । स्निग्धा=रुचिरा ताम्रद्युतिनखमणिः—ताम्रद्युतिः=ताम्रवर्णा कान्तिः, नखमणेः, यस्य सः । लम्बवृत्तोरुहस्तः—लम्बवृत्तम्=सुविशालम्, उरु=वक्षः, हस्तौ=करौ, च यस्य तथाविधः । सप्तच्छदपरिमलस्पर्धिदानोदकः सप्तच्छदस्य=सप्तपर्णस्य, परिमलेन=सुगन्धेन, स्पर्धते=स्पर्धां करोति, दानोदकम्=मदजलम्, यस्य तथाविधः । सान्द्रद्रुमगिरिसरित्तीरचारी—सान्द्रद्रुमाणाम्=सघनपादपानाम्, गिरीणाम्=पर्वतानाम्, सरिताम्=नदीनाञ्च, तीरे=तटे, चरति=विचरति, तथाविधः । भद्रः=कल्याणकरः, उत्तमो वा । अयम्=एषः । गजः । शूरः=वीरः । अस्तीति । मन्दाक्रान्ता वृत्तम् ।। ६० ।।

भद्रजाति का होगा । क्योंकि—

हिन्दी—तब तो यह ( गज ) ऊँचे ककुद वाला, पीले दाँतों वाला मनोरम स्कन्धसन्धियों वाला स्निग्ध ताम्रवर्ण की नखमणि वाला लम्बे चौड़े कर ( सूँड ) तथा वक्षःस्थल वाला, सप्तपर्ण की सुगन्ध जैसे मदजल को बहाने वाला उत्तम यह गज पराक्रमी है ।। ६० ।।

**क्रीडारसविघातः कृतो न श्रेयान्—**

**तन्मोदतामयम्, अनुरागिणोर्दम्पत्योः**

**इत्यभिधाय हृतहृदयः, स्वैरं रममाणमृगमिथुनविलासैरुल्लासितपुलकः**

**कुसुमितकाननानिलैरुत्कम्प्यमानः, झरन्निर्झरोपान्तपादपतलचलत्केलिकिलकेकिकेकारवैर्विनोद्यमानः समीपचरसेवकसुभाषितैश्च, सममसमं च, निम्नगात्रमनिम्नगात्रं च ग्रावविषममग्रावविषमं च, सश्वापदमश्वापदं च, सपादपमपादपं च, विन्ध्यस्कन्धमुल्लङ्घ्य, 'देव, विलोक्यतामिह विषमबिषाणि पन्नगकुलानि द्रोणीगहनं च, इह शरासनकरम्बाणि वनानि पार्पद्धिकपुलिन्दवृन्दं च, इह बहुसुखानि शबरद्वन्द्वानि रत्नाकरस्थलं च, इह सुमधुराणि फलानि कीचकवनं च, इहामोदितविश्वककुम्भि कुसुमानि सरित्तीरं च, इह सत्प्रभावन्ध्यानि दवदग्धारण्यानि मुनिमण्डलं च' इति विविधवनप्रदेशान् दर्शयतः पुष्कराक्षस्य विचित्रवचनोक्तीर्भावयन् क्रमेणातिक्रम्य शिखरपरम्परां परैरसह्यः सह्याचलमवततार।**

सुधा—तदिति। तत्=अतः। अयम्=एषः। मोदताम्=प्रसन्नो भवतु। अनुरागिणोः=प्रेमयुक्तयोः। दम्पत्योः=करेणु-करिण्योः। क्रीडारसविघातः—क्रीडारसे=केलिरसे, विघातः=व्यवधानम्। कृतः=विहितः। न श्रेयान्=श्रेष्ठो नास्ति। इत्यभिधाय=इत्युक्त्वा। हृतहृदयः—हृतं=वशीकृतम्, हृदयम्=चेतः, यस्य सः। स्वैरम्=स्वच्छन्दम्। रममाणमृगमिथुनविलासैः—रममाणैः=रमणयुक्तैः, मृगमिथुनानां=हरिणयुग्मानाम्, विलासैः=आनन्दैः। उल्लासितपुलकः—उल्लासितं पुलकं यस्य सः=प्रसन्नरोमाञ्चः। कुसुमितकाननानिलैः—कुसुमितस्य=पुष्पान्वितस्य काननस्य=अरण्यस्य, अनिलैः=पवनैः। उत्कम्प्यमानः—कम्पमानगात्रः। झरन्निर्झरोपान्तपादपतलचलत्केलिकिलकेकिकेकारवैः—झरताम्=प्रवहताम्, निर्झराणाम्=स्रोतसाम्, उपान्ते=पार्श्वे ये पादपाः, तेषां तले=अधस्तात्, चलन्=दोलायमानः, केलये किलतीति केलिकिलः=क्रीडापात्रम्, केलिकिलानाम् केकिकेकारवैः=मयूरमयूरिनीध्वनिभिः, विनोद्यमानः=कृतविनोदः। समीपचरसेवकसुभाषितैः=पार्श्ववर्तिसेवकसूक्तिभिः। समम्=साकम्। सश्रीकम्=सश्रियम्। असमम्=विषमम्। न समोऽस्येति कृत्वा, उत्कृष्टं वा। निम्नगात्रम्—निम्नगा=नदीस्त्रायत इति तम्। अनिम्नगात्रञ्च—अनिम्नम्=उच्चम् गात्रम्=मूर्तिर्यस्य तम्। ग्रावविषमम्—ग्रावभिः=दृषद्भिः विषमम्। अग्रावविषमम्—अग्रे अवविषमम्=समम्। सश्वापदम्—श्वापदैः=पशुभिः सहितम्। अश्वापदम्—अश्वानाम्, अपदम्=अभूमिम्। सपादपम्—पादपैः=वृक्षैः, सह इति सपादपम्। अपादपम्—अपादान्=गूढपदः पातीत्यपादपम्। शून्ये हि सर्पादिप्राचुर्यम्। अथवा अतिवैषम्यात् सञ्चरतां पदान् न पातीत्यपादपम्। विन्ध्यस्कन्धम्=विन्ध्यभूमिम्। उल्लंघ्य=तीर्त्वा। देव=राजन्! विलोक्यताम्=पश्यतु भवान्। इह=अत्र। विषमविषाणि—विषमं विषं येषु तादृशानि। पन्नगकुलानि=नागयूथानि। द्रोणीगहनेषु तु विषमाः विषाणिनः=दन्तिनः शृङ्गिणः शम्बरादयो वा यत्र तादृशानि। इह=अत्र। शरासनकरम्बाणि—शरेण=मुञ्जेन, असनेन=बीजकवृक्षेण च करम्बाणि=शबलानि। पुलिन्दवृन्दं तु शरासनं धनुः करे यस्य। तथा बाणाः सन्ति अस्येति बाणिस्तम्=सशरम्। बहुसुखानि—बहु सुखं येषां तानि। स्थलम् तु बहु=

विपुलम्, तथा सुष्ठु खानिः=आकरः यत्र तादृशानि। बहुशब्दो वैपुल्येऽपि। शबर-द्वन्द्वानि=किरातयुगलानि। रत्नाकरस्थलम्=सागरभूमिः। सुमधुराणि=सुष्ठु मृदूनि फलानि। वनं तु सुष्ठु मधु यत्र तत्सुमधु। तथा रणन्त्यवश्यं राणि। सच्छिद्रा हि वंशाः वायुवशात् रणन्तीति। कीचकवनम्=वंशकाननम्। आमोदितविश्वककुम्भि—आमोदिताः=सुरभिताः, विश्वाः=सर्वाः, ककुभः=दिशः, यैः। तीरं तु आमोदिताः=हर्षिताः, वयः=पक्षिणः, श्वकाः=शुनः संज्ञावृकाः, कुम्भिनश्च=गजाः, यत्र। आमोदो हर्षेऽपि। 'आमोदो गन्धहर्षयोः' इति विश्वप्रकाशः। यदा तु विश्वाशुण्ठी कुम्भी च वल्लीविशेषः। सादृश्यवृत्तेः शुनः। सत्प्रभाववन्ध्यानि=सुन्दरकान्तिशून्यानि। दवदग्धानि=दावानलज्वलितानि। अरण्यानि=काननानि मुनिमण्डलं तु सत्प्रभावम्। तथा ध्यानमस्यास्तीति ध्यानि। इति=एवम्। विविधवनप्रदेशान्=अनेककानन-भूभागान्। दर्शयतः=प्रदर्शयतः। पुष्कराक्षस्य, विचित्रवचनोक्तीः=अद्भुतकथ-नानि। भावयन्=विचारयन्। क्रमेण=क्रमशः। शिखरपरम्पराम्=श्रेणिपंक्तिम्। अतिक्रम्य=उल्लंघ्य। परैः=शत्रुभिः। असह्यः=सहनेऽक्षमः। सह्याचलम्=सह्या-द्रिम्। अवततार=अवातरत्। अत्र विरोधाभासालङ्कारः।

हिन्दी—अतः यह प्रसन्न होवें। अनुरागी दम्पत्तियों के क्रीडा आमोद में विघ्न डालना अच्छा नहीं है।' यह कह कर वह विह्वल हो उठा। स्वतन्त्र रमण कर रहे मृगों के जोड़ों के आनन्द से रोमाञ्च हो गया। पुष्पों से युक्त वन की सुगन्धित वायु से वह काँपने लगा। झर रहे निर्झरों के किनारे खड़े वृक्षों के नीचे हिल रहे क्रीड़ा पात्रों पर बैठे मयूर तथा मयूरनियों की ध्वनि से तथा समीपवर्ती अनुचर वर्ग की सूक्तियों द्वारा मनोविनोद करते हुए सम ( शोभा सम्पन्न ) तथा असम (ऊँचे नीचे), निम्नगात्र नदियों के रक्षक तथा अनिम्नगात्र ( ऊँचे आकार ) वाले, ग्रावविषम ( चट्टानों के कारण विषम ) तथा अग्रावविषम (आगे कुछ दूर पर ढालू भूमि वाले) सश्वापद ( हिंसक पशुओं से युक्त ) तथा अश्वापद ( घोड़ों के न चलने योग्य ), सपादप ( वृक्षों से युक्त ) तथा अपादप ( पदहीन सर्प आदि ) विन्ध्याचल के विपिन भाग को पार कर, देव ! देखिये। यहाँ विषम विष वाले नागकुल तथा बड़े विषाणी ( सींगों वाले जानवरों से युक्त ) वाली घाटी है। यहाँ शर तथा असन वृक्षों के वन एवम् धनुर्बाणधारी पुलिन्दों ( किरातों ) के झुण्ड रहते हैं। यहाँ अत्यन्त सुखी भीलों के जोड़ों तथा रत्नाकर का स्थान भी बहुत सुन्दरध्वनि ( खजाने से युक्त ) है। यहाँ सुमधुर फल तथा उत्तम मधु एवं रणि (ध्वनि ) से युक्त विशिष्ट प्रकार के बाँस के वन हैं। यहाँ समस्त दिशाओं को सुगन्ध से प्रसन्न करने वाले पुष्प तथा प्रसन्न पक्षी, श्वक ( वृक-भेड़िये ) और हाथियों से युक्त नदी तट है। यहाँ उत्तम कान्ति में बाधा डालने वाले दावानल से जले हुए वन तथा उत्तम कान्ति युक्त ध्यान करने वाले मुनि-मण्डल हैं। इस प्रकार विभिन्न वनप्रदेशों को दिखलाते हुए पुष्कराक्ष की विचित्र वचनोक्तियों पर विचार करते हुए क्रमशः पर्वत-शिखरों को पार कर शत्रुओं के लिए असह्य भूपति सह्याद्रि पर अवतरित हुए।

**रमणीयतया स्निग्धतया च पुनः परिर्वातितमुखो विलोक्य विन्ध्यदक्षिण-मेखलाशिखरश्रेणीपादपान् पुष्कराक्षमभाषत—**

**भद्र, दुस्त्यजाः खल्वमी विन्ध्यतटीतरवः। तथाहि—**

सुधा—रमणीयतयेति। रमणीयतया=मनोरमतया। स्निग्धतया=कोमलतया, च। पुनः=भूयः। परिर्वाततमुखः—परिर्वाततं मुखं यस्य सः=परिर्वाततवदनः। विन्ध्य-दक्षिणमेखलाशिखरश्रेणीपादपान्—विन्ध्यस्य=विन्ध्याचलस्य, दक्षिणमेखलायाम्=दक्षिणश्रेण्याम्, शिखरश्रेणिषु। पादपान्=वृक्षान्। विलोक्य=दृष्ट्वा। पुष्कराक्षम्=तन्नामानम्। अभाषत=अकथयत्। भद्र=कल्याकर। खलु=किल। अमी=एते। विन्ध्यतटीतरवः=विन्ध्याचलतटर्वातिनो वृक्षाः। दुस्त्यजाः—दुःखेन त्याज्याः सन्ति। तथा हि=यतो हि।

हिन्दी—रमणीयता एवं स्निग्धता से पुनः विन्ध्याचल की दक्षिणी मेखला के शिखरों पर खड़े वृक्षों की ओर मुँह घुमाकर पुष्कराक्ष से ( वह ) कहने लगा—भद्र इन विन्ध्याचल तट-वर्ती पादपों को छोड़ना बड़ा कठिन है। क्योंकि;

**आवासाः कुसुमायुधस्य शबरीसङ्केतलीलागृहाः**
**पुष्पामोदमिलन्मधुव्रतवधूझङ्कारुद्धाध्वगाः ।**
**सुस्निग्धाः प्रियबान्धवा इव दृशो दूरीभवन्तश्चिरात्**
**कस्यैते न दहन्ति हन्त हृदयं विन्ध्याचलस्य द्रुमाः ॥ ६१ ॥**

अन्वयः—कुसुमायुधस्य आवासाः शबरीसङ्केतलीलागृहाः, पुष्पामोदमिलन्मधु-व्रतवधूझङ्काररुद्धाध्वगाः सुस्निग्धाः प्रियबान्धवाः इव दृशः चिरात् दूरीभवन्तः एते विन्ध्याचलस्य द्रुमाः हन्त ! कस्य हृदयं न दहन्ति ॥ ६१ ॥

सुधा—आवासा इति। कुसुमायुधस्य—कुसुमान्यायुधानि यस्य सः=पुष्पसरासनः कामस्तस्य। आवासाः=निवासस्थानानि। शबरीसङ्केतलीलागृहाः—शबरीणाम्=किरातीनाम्, सङ्केतस्य, लीलागृहाणि=क्रीडासद्मानि येषां ते। पुष्पामोदमिलन्मधुव्रतवधूझङ्काररुद्धाध्वगाः—पुष्पाणामामोदाः=सुगन्धयः, तैर्मिलताम् मधुव्रतवधूनाम्=भ्रमरीणाम्, झङ्कारेण=झङ्कृतया, रुद्धाः=अवरुद्धाः, अध्वगाः=पथिकाः यत्र तथाविधाः। सुस्निग्धाः=सुरुचिराः। प्रियबान्धवाः इव=प्रियबन्धुजनसदृशाः। दृशः=चक्षुषः। चिरात्=चिरकालात्। दूरीभवन्तः=पृथग्गच्छन्तः। एते=इमे। विन्ध्याचलस्य=विन्ध्यपर्वतस्य। द्रुमाः=वृक्षाः। हन्त इत्याश्चर्ये। कस्य=कस्य जनस्य। हृदयम्=चेतः। न दह्यन्ति=नो ज्वलयन्ति। अपि तु सर्वेषां हृदयं दह्यन्ति इति। अत्रोपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

हिन्दी—कामदेव का आवास बने हुए, किरात-रमणियों के संकेत वाले क्रीडागृहों सदृश पुष्पों की सुगन्ध से मिलती हुई भ्रमरियों की झङ्कार द्वारा जहाँ पथिक ठहर जाते हैं, सुस्निग्ध प्रियबान्धवों के समान चिरकाल से दृष्टि से दूर हो रहे विन्ध्य-पर्वत के यह वृक्ष किसके हृदय को नहीं जलाते हैं ॥ ६१ ॥

**अपि च—**

**भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूद्गन्धिषु**
**च्छायावत्सु तलेषु पान्थनिचया विश्रम्य गेहेष्विव ।**
**निर्यन्निर्झरवारिवारिततृषस्तृष्यन्ति येषां फलै-**
**स्ते नन्दन्तु फलन्तु यान्तु च परामभ्युन्नतिं पादपाः ॥ ६२ ॥**

अन्वयः—भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूगन्धिषु छायावत्सु तलेषु, गेहेषु इव पान्थनिचयाः विश्रम्य निर्यन्निर्झरवारिवारिततृषः येषां फलैः तृष्यन्ति ते पादपाः नन्दन्तु, फलन्तु पराम् अभ्युन्नतिं च यान्तु ॥ ६२ ॥

**सुधा—भ्राम्यदिति।** भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूगन्धिषु—भ्राम्यताम्=चङ्क्रमताम्, भृङ्गाणाम्=मधुपानाम्, भरेण=भारेणावनम्राणि=अवनतानि, कुसुमानि=पुष्पाणि, तेभ्यश्च्योतत्=स्रवत्, यन् मधु, तस्योद्गन्धिः=उत्कृष्टसुगन्धिश्च येषु तेषु । छायावत्सु=छायायुक्तेषु । तलेषु=अधोभागेषु गेहेषु इव=भवनेष्विव । विश्रम्य=विश्रामं कृत्वा । पान्थनिचयाः=पथिकसंघाः । निर्यन्निर्झरवारिवारिततृषः—निर्यताम्=प्रवहताम्, निर्झराणाम्=स्रोतसाम्, यद् वारि=जलम्, तेन वारिता=दूरीकृता, तृट्=पिपासा येषां ते । येषाम्=येषां पादपानाम् । फलैः तृष्यन्ति=तृप्तिं यान्ति । ते=तथाविधाः । पादपाः=द्रुमाः । नन्दन्तु=प्रसीदन्तु । फलन्तु=फलयुक्ताः सन्तु । पराम्=अधिकाम् । उन्नतिम्=उत्थानम् । यान्तु=गच्छन्तु चेति । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

**हिन्दी—**और भी—मँडराते हुए भौंरों के भार से झुके हुए फूलों से टपक रहे मधु तथा उत्कृष्ट सुगन्धों वाले छायायुक्त जिन वृक्षों के तले घरों के सदृश पथिक विश्राम कर बह रहे झरनों के जल से प्यास बुझाकर जिनके फल खाकर तृप्त होते हैं ऐसे ( इस वन के ) वृक्ष प्रसन्न होवें, फलें तथा उन्नति को प्राप्त करें ॥ ६२ ॥

**अपि च**

**यत्र न फलितास्तरवो विकसितसरसीरुहाः सरस्यो वा ।**
**न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः ॥ ६३ ॥**

**अन्वयः**—यत्र फलिताः तरवः न वा विकसितसरसीरुहाः सरस्य न ( सन्ति ) न च सज्जनाः ( सन्ति ) । श्मसानसमः स देशः निधनं गच्छतु ॥ ६३ ॥

**सुधा—यत्रेति ।** यत्र=यस्मिन् स्थाने । फलिताः=फलान्विताः । तरवः=पादपाः न सन्ति । वा=अथवा । विकसितसरसीरुहाः—विकसितानि, सरसीरुहाणि=कमलानि यत्र ताः । सरस्यः=तडागाः न सन्ति । तथा सज्जनाः=सत्पुरुषाः न वसन्ति । श्मसानसमः=श्मसानसदृशः । सः=असौ । देशः=स्थानम् । निधनम्=विनाशम् । गच्छतु=प्रयातु ॥ ६३ ॥

**हिन्दी—**और भी—जिस देश में वृक्ष फलते न हों, जहाँ फूले हुए कमलयुक्त तड़ाग न हों तथा जहाँ सज्जन निवास न करते हों ऐसे श्मसानसदृश देश का नाश हो जाये ॥ ६३ ॥

**तत्कथय कदा पुनरिमां विन्ध्यवनवीथीं विचित्रपत्त्रलकुचां दमयन्तीमिव निर्विघ्नमलोकयिष्यामः । तथाहि—**

**सुधा**— तदिति । तत् = अतः । कथय = वद । पुनः = भूयः । कदा = कस्मिन् दिने । इमाम् = एताम् । विन्ध्यवनवीथीम्—विन्ध्यस्य = विन्ध्याचलस्य । वनवीथीम् = कानन-वीरुधम् । विचित्रपत्रलकुचाम्—विचित्राणि = अद्भुतानि, पत्राणि = दलानि, लकुचानाम् यत्र ताम् । अथवा विचित्रम्, पत्रलम् = पत्ररचना कुचयोः यस्यास्ताम् । दमयन्तीम् = भैमीम् इव । निर्विघ्नम् विघ्नरहितम् । अवलोकयिष्यामः = दृक्ष्यामः । तथाहि = यतो हि ।

**हिन्दी**—अतः कहिए—कब पुनः इस विचित्र पत्रों वाले लकुच वृक्षों से युक्त विन्ध्याचल की वनवीथी को विचित्र पत्र-रचनायुक्त पयोधरों वाली दमयन्ती के समान देख सकेंगे । क्योंकि;

**पीनोन्नमद्घनपयोधरभारभुग्न-**
**मध्यप्रदेशरुचिमल्लवलीलतायाः ।**
**उत्कण्ठितोऽस्मि चलदेणदृशः प्रियाया-**
**स्तस्याश्च पर्वतभुवो वनवीथिकायाः ॥ ६४ ॥**

**अन्वयः**—पीनोन्नमद्घनपयोधरभारभुग्नमध्यप्रदेशरुचिमल्लवलीलतायाः तस्याः चलदेणदृशः प्रियायाः पर्वतवनवीथिकायाः च उत्कण्ठितः अस्मि ॥ ६४ ॥

**सुधा**—पीन इति । पीनोन्नमद्घनपयोधरभारभुग्नमध्यप्रदेशरुचिमल्लवलीलतायाः— पीनयोः = स्थूलयोः, उन्नमतोः = उन्नतयोः, घनपयोधरयोः = कठिनस्तनयोः, भरेण = भारेण, भुग्ने = नम्रे, मध्यप्रदेशे = कटिप्रदेशे, रुचिम् = अभिरुचिम्, मल्लन्ते = धारयन्तीति, तथोक्ताः वल्यः एव लताः यस्याः । तस्याः = तथाविधायाः । चलदेणदृशः— चलताम् = चञ्चलानाम्, एणानाम् = मृगाणाम्, इव दृशे = चक्षुषी, यस्याः, तस्याः । प्रियायाः = दयितायाः, दमयन्त्याः । वनवीथीपक्षे तु—पयोधराः = मेघाः, रुचिमतीम् = तेजस्विनी लवलीनाम्नी लता तथा । चलदेणानाम् दृक् = दर्शनम्, यस्यां तस्याः । पर्वतवनवीथिकायाः = अद्रिकानन-वीथिकायाः । उत्कण्ठितः = दर्शनोत्सुकः । अस्मि । वसन्ततिलका वृत्तम् ॥ ६४ ॥

**हिन्दी**—स्थूल उन्नत कठोर पयोधरों के भार से झुके उदरभाग में कान्तिमती लवलीलता सदृश चञ्चल मृगनयनी उस प्रियतमा को तथा ऊँचे घने उठे हुए बादलों के भार से युक्त मध्यभाग में कान्तिमती लवली लताओं वाली जहाँ मृग घूमते हुए देखे जाते हैं, उस पर्वत भूमि वाली वनवीथियों को देखने के लिए मैं उत्कण्ठित हो रहा हूँ ॥ ६४ ॥

**अपि च—**

**सानूनां सानूनां विलोक्य रमणीयतां च सानूनाम् ।**
**सालवने सालवने विहरिष्यति सह मयाऽत्र कदा ॥ ६५ ॥**

अन्वयः—सानूनां सानूनां रमणीयताम् अनूनां विलोक्य सालवने सालवने मया सह अत्र सा कदा विहरिष्यति ॥ ६५ ॥

सुधा—सानूनामिति । सानूनाम्=तटानाम् । सानूनाम्—सम्बन्धिनो ये सानवस्तेषाम् । तट-मार्गाणाम् । रमणीयताम्=सुन्दरताम् । अनूनाम्=पूर्णाम् । विलोक्य=दृष्ट्वा । सालवने=अलवनेन सह यत् तादृशि । सालवने=सर्जतरुकानने । मया सह=मया साकम् । अत्र=अस्मिन् स्थले । सा=असौ दमयन्ती । कदा=कस्मिन् काले । विहरिष्यति=विचरणं करिष्यति । अत्र यलकालङ्कारः ॥ ६५ ॥

हिन्दी—तटवर्ती मार्गों की सम्पूर्ण रमणीयता को देखकर बिना कटे साल वृक्षों के वन में मेरे साथ यहाँ वह कब बिहार करेगी ॥ ६५ ॥

**सखे सखेदा इव वयम्, तत्कथय कियद्दूरेऽद्यापि स विदर्भविषयः, यत्र यत्र ब्रह्माण्डशुक्तिसम्पुटमध्यमुक्ताफलगुलिकया तयाऽलङ्कृतं तत्कुण्डिनं नगरम्, इत्यभिदधाने निषधनाथे तैस्तैरालापैरनुवर्त्तितोक्तिः पुष्कराऽक्षोप्य भाषत ।**

**'देव, प्राप्ता ननु वयम् । इदं हि—**

सुधा—सखे इति । सखे=मित्र ! वयम्, सखेदा इव=क्लान्ता इव । तत्=अतः । कथय=वद । कियद्दूरे=कियद् दूरस्थाने । अद्यापि=सम्प्रत्यपि । सः=असौ । विदर्भविषयः=विदर्भदेशः अस्ति । यत्र=यत्स्थाने । ब्रह्माण्ड-शुक्ति-सम्पुटमध्यमुक्ताफलगुलिकया—ब्रह्माण्डरूपे शुक्तिसम्पुटे मध्ये मुक्ताफलगुलिकया=मौक्तिकगुलिकासदृश्या शुद्धया । तया=दमयन्त्या । अलङ्कृतम्=शोभितम् । तत्=तथाविधम् । कुण्डिनं नगरम्=कुण्डिनपुरम् । इति=एवम् । अभिदधाने=कथयति । निषधनाथे=निषधेश्वरे । तैस्तैः आलापैः=तथाविधैः सम्भाषणैः । अनुवर्तितोक्तिः—अनु=पश्चात्, वर्तितकथनम् । पुष्कराक्षः अपि । अभाषत=अवोचत् । देव=राजन् ! ननु=किल वयं प्राप्ताः=समागताः । इदं हि=एतत् हि ।

हिन्दी—हे सखे ! अब हम थक गये हैं अतः बतलाइये, अभी कितना दूर वह विदर्भ देश है जहाँ ब्रह्माण्ड रूपी शुक्ति ( सीपी ) के सम्पुट ( दोने ) में पड़ी मुक्ताफल की गोली के समान गौरवर्णा उस दमयन्ती से अलङ्कृत कुण्डिनपुर नगर है। ऐसा निषधनाथ के कहने पर उन-उन वार्तालापों द्वारा पुष्कराक्ष भी कहने लगा ।

देव ! हम पहुँच चुके हैं । क्योंकि यह;

**वीरपुरुषं तदेतद्वरदातटनामकं महाराष्ट्रम् ।**
**दक्षिणसरस्वती सा वहति विदर्भा नदी यत्र ॥ ६६ ॥**

अन्वयः—वीरपुरुषं तत् एतत् वरदातटनामकं महाराष्ट्रं यत्र दक्षिणसरस्वती सा विदर्भा नदी वहति ॥ ६६ ॥

सुधा—वीरपुरुषमिति । वीरपुरुषम्—वीराः पुरुषाः यत्र तत्=पराक्रमिजनयुक्तम् । तत्=तथाविधम् । एतत्=इदम् । वरदातटनामकम्=वरदातटाभिधम् । महाराष्ट्रम्

=महाराष्ट्रदेशः। यत्र=यस्मिन् महाराष्ट्रे। दक्षिणसरस्वती—दक्षिणस्य=अवाची-दिशायाः, सरस्वती=तन्नाम्नी नदी समा। सा=असौ। विदर्भा नदी। वहति=प्रवहति ॥६६॥

हिन्दी—वीर पुरुषों वाला वही वरदातट पर स्थित यह महाराष्ट्र नामक देश है जहाँ दक्षिण देश की सरस्वती सदृश वह विदर्भा नदी प्रवाहित हो रही है ॥ ६६ ॥

**इहाकरभया सिंहलद्वीपभुवा सदृशी, बहुदया त्यागिजनतया तुल्या समृद्धनया भूनिखातकृपणजननिक्षेपकुम्भिकया समाना: प्रजा।**

सुधा—इहेति। इह=अत्र। अकरभया—न करात्=राजदेयात्, भयम्=भीतिः, यस्याम् सा तया। सिंहलद्वीपभुवा—सिंहलद्वीपस्य=लङ्कायाः, भू तया। सदृशी=समाना। बहुदया—बह्वी दया यस्यां सा। त्यागिजनतया तुल्या—त्यागिनां, जनतया तु बहु ददातीति बहुदा तया समा। समृद्धनया=समृद्धो नयो यस्यां सा। कुम्भिका तु समृत्=मृत्तिकोपेतं धनं यस्यां तया समृद्धनया। समाना=तुल्या। प्रजा=जनता। अस्तीति।

हिन्दी—यहाँ कर न दिये जाने वाली सिंहलद्वीप की भूमि जैसी, अति दयालु त्यागी जनता जैसी न्याययुक्त, भूमि में गड़े कृपण लोगों की धरोहर वाली कुम्भिका के समान धनसम्पन्न प्रजा निवास करती है।

**इह समकरन्दानि कमलवनानि राजराजन्यचक्रं च, इह बहुधामानि नगराणि लोकहृदयं च, इह सारम्भाणि कृपाणकुलानि दशरूपकप्रेक्षणं च, इह बहुकृपाणि जनमनांसि प्रजापालबलं च इह महाविप्राणि ग्रामपुरपत्तनानि मेषगोष्ठं च।**

सुधा—इहेति। इह=अत्र। समकरन्दानि=परागपूर्णानि। कमलवनानि=अम्भोजकाननानि। राजन्यचक्रं=राजवर्गः। समः करो=राजांशो यस्य, तथा दान-मस्यास्तीति दानि। बहुधामानि—बहूनि=अनेकानि, धामानि=भवनानि, येषु, तादृशानि नगराणि=पुराणि। लोकहृदयम्=जनहृदयश्च, बहुधा=अनेकधा मानो-ऽस्यास्तीति मानि। सारम्भाणि—सह आरम्भैः=उपक्रमैस्तादृशानि। कृपाणकुलानि=खड्गयूथानि। दशरूपकप्रेक्षणम्=नाटकावलोकनम् च। सारम्=उत्कृष्टम्। तथा भाणः=रूपकविशेषः, सोऽस्यास्तीति भाणि। बहुकृपाणि=अतिदयायुक्तानि। जन-मनांसि=लोकचेतांसि। प्रजापालबलम्—प्रजापालरूपम्=जनतारक्षणरूपम्, बलम्=शक्तिश्च। बहुकृपाणि—खड्गोऽस्यास्तीति तत् कृपाणि=बहूनि कृपाणिनः। महा-विप्राणि—महान्तो विप्राः येषु तादृशानि। ग्रामपुरपत्तनानि=ग्राम-नगर-जनपदानि। मेषगोष्ठं च=अलिगोष्ठश्च। महाविप्राणि—महान्तोऽवयो=मेण्ढास्ते एव प्राणिनो बलवन्तो यत्र।

हिन्दी—यहाँ मकरन्दयुक्त कमलवन तथा राजसामन्त वर्ग समान कर देने वाला वर्ग है। यहाँ अनेकों भवनों वाले नगर तथा लोकहृदय, अनेक प्रकार से मानयुक्त हैं। यहाँ खड्ग-समूह सदा तैयार रहते हैं और नाटक देखना उत्तम भागयुक्त होता है।

यहाँ के निवासियों के मन बड़े कृपालु तथा प्रजापालन एवम् प्रजाबल ( सेना ) कृपाणों से युक्त है। यहाँ के ग्राम, नगर तथा जनपद उत्तम ब्राह्मणों से युक्त और मेष-गोष्ठ ( भेड़ों के रहने के स्थान ) बड़े बड़े मेषों से युक्त रहते हैं।

**इयं च गगनवीथीव पूर्वोत्तराफाल्गुनीराशिवायूपयुक्ता ब्राह्मणाग्रहारभूमिः। इतश्च—**

**सुधा—इयमिति।** इयम्=एषा। ब्राह्मणाग्रहारभूमिः—ब्राह्मणेभ्यः=विप्रेभ्यः, अग्रे =पूर्वम्, हारा=आहृता, दत्ता वा, भूमिः। गगनवीथीव=आकाशवीथीसमा। पूर्वोत्तराफाल्गुनीराशिवायूपयुक्ता—पूर्वस्यामुत्तरस्यां च अफल्गु=सारम् उत्कृष्टं, नीरम्= जलम्, यस्यां सा, तथा शिवैः=कल्याणकरैः, यूपैः=यज्ञकीलैर्युक्ता। गगनवीथी, तु— पूर्वा-उत्तराफाल्गुन्यौ, राशयो=मेषाद्याः, वायुः=पवनः, तैरुपयुक्ता=उपयोगीकृता अस्तीति। इतश्च=अत्र च।

**हिन्दी**—यह ब्राह्मणों के लिए राजाओं द्वारा दी गई भूमि पूर्वाफाल्गुनी-उत्तराफाल्गुनी नक्षत्रों, मेषादि राशियों तथा वायु द्वारा उपयोगी बनाई गई आकाशवीथी के समान पूर्व तथा उत्तर दिशा में पर्याप्त जल से भरी हुई एवम् कल्याणकारी यूपों ( यज्ञस्तूपों ) से युक्त है। और यहाँ;

**आरुह्यैताः शिखरिसदृशान्ग्राममध्योच्चकूटा-**
**नन्योन्यांसप्रणिहितभुजाः सङ्गताः कौतुकेन।**
**प्रेक्षावेशादविचलदृशो योषितः पामराणां**
**पश्यन्त्यस्त्वां निभृततनवो लेख्यलीलां वहन्ति॥ ६७॥**

**अन्वयः**—शिखरिसदृशान् ग्राममध्योच्चकूटान् आरुह्य अन्योन्यांसप्रणिहितभुजाः कौतुकेन सङ्गताः प्रेक्षावेशात् अविचलदृशः पामराणाम् एताः योषितः त्वां पश्यन्त्यः निभृततनवः लेख्यलीलां वहन्ति॥ ६७॥

**सुधा—आरुह्येति।** शिखरिसदृशान्—शिखरिणाम्=पर्वतानां सदृशाः, तान्= भूधराकारान्। ग्राममध्योच्चकूटान्—ग्राममध्ये=ग्रामान्तरे, उच्चकूटान्=उच्चस्थलानि। आरुह्य=आरोहणं विधाय। अन्योऽन्यांसप्रणिहितभुजाः—अन्योन्यानाम्=पारस्परिकाणाम्, अंसेषु=स्कन्धेषु, प्रणिहिताः=स्थापिताः, भुजाः=बाहवः, यासां ताः। कौतुकेन=कौतूहलेन, संगता=एकत्रीभूताः। प्रेक्षावेशात्=अवलोकनोत्कण्ठया। अविचलदृशः=निश्चलनयनाः। पामराणाम्=ग्रामीणानाम्। एताः=इमाः। योषितः= स्त्रियः। त्वाम्=भवन्तम्। पश्यन्त्यः=अवलोकयन्त्यः। निभृततनवः—निभृतानि= अनुन्नतानि, तनूनि=शरीराणि यासां ताः। लेख्यलीलाम्=चित्रणकलाम्। वहन्ति =धारयन्ति। मदाक्रान्ता वृत्तम्॥ ६७॥

**हिन्दी**—पर्वतसदृश गाँवों के मध्य में ऊँचे स्थानों पर चढ़कर आपस में एक दूसरे के कन्धों पर बाँहें रखे कौतूहल से एकत्र होकर देखने के लिए उत्कण्ठित टकटकी बाँधे ग्रामीण नारियाँ आपको देखती हुई चित्रणकला-सी कर रही है॥ ६७॥

**किं चान्यत्—**

**नृप चलसि यथा यथा त्वमस्मिन्नपि वदनानि तथा तथा चलन्ति ।**
**तरलितनयनानि पामरीणां पवनविनर्तितपङ्कजोपमानि ॥ ६८ ॥**

**अन्वयः**—नृप ! यथा यथा त्वम् अस्मिन् चलसि तथा तथा पामरीणां पवनविनर्तितपङ्कजोपमानि तरलितनयनानि वदनानि अपि चलन्ति ॥ ६८ ॥

**सुधा—नृप इति ।** नृप=हे राजन् ! यथा यथा=यद्यत्प्रकारेण । त्वम्=भवान् । अस्मिन्=एतस्मिन् स्थाने । चलसि=गच्छसि । तथा तथा=तत्तत्प्रकारेण । पामरीणाम्=प्राकृतस्त्रीणाम् । पवनविनर्तितपङ्कजोपमानि—पवनेन=वायुना, विनर्तितानि=कम्पितानि, तरलितनयनानि=चपलचक्षूंषि येषां तानि । वदनानि=मुखानि अपि । चलन्ति=भ्रमन्ति ॥ ६८ ॥

**हिन्दी**—और दूसरी बात यह है कि हे राजन् ! जैसे जैसे तुम इस स्थान की ओर चलते हो, वैसे वैसे ही वायु द्वारा प्रकम्पित कमल-सदृश ग्रामीण नारियों के तरलित नयनों वाले मुख भी चलने ( घूमने ) लगते हैं ॥ ६८ ॥

**अपि च—**

**उत्कम्पाद्गलितांशुकेषु रभसादत्यन्तमुच्छ्वासिषु**
**प्रोत्तुङ्गस्तनमण्डलेषु विलुठद्गुञ्जावलीदामसु ।**
**आसां स्वेदिषु दृश्यते मृगदृशां संक्रान्तबिम्बो भवा-**
**नाश्लिष्यन्निव गोपिकाः कृतबहुप्राकाम्यरूपो हरिः ॥ ६९ ॥**

**अन्वयः**—उत्कम्पात् गलितांशुकेषु, रभसात् अत्यन्तम् उच्छ्वासिषु प्रोत्तुङ्गस्तनमण्डलेषु विलुठद्गुञ्जावलीदामसु आसां मृगदृशां स्वेदिषु संक्रान्तबिम्बः भवान् गोपिकाः आश्लिष्यन् कृतबहुप्राकाम्यरूपः हरिः इव दृश्यते ॥ ६९ ॥

**सुधा—उत्कम्पादिति ।** उत्कम्पात्=उत्कम्पनक्रियायाः । गलितांशुकेषु—गलितानि=भ्रष्टानि, अंशुकानि=वस्त्राणि तेषु । रभसात्=वेगात् । अत्यन्तम्=बहु । उच्छ्वासिषु=दीर्घनिःश्वासिषु । प्रोत्तुङ्गस्तनमण्डलेषु=उत्तुङ्गपयोधरवृत्तेषु । विलुण्ठद्गुञ्जावलीदामसु—विलुठन्ति=कम्पमानानि, गुञ्जावलीदामानि=गुञ्जायुक्तमालाः यत्र तासु । आसाम्=एतासाम् । मृगदृषाम्=मृगनयनीनाम् । स्वेदिषु=स्वेदबिन्दुषु । सङ्क्रान्तबिम्बः—सङ्क्रान्तं, बिम्बम्=प्रतिच्छायम्, यस्य सः । भवान्=श्रीमान् । गोपिकाः=गोपस्त्रीः । आश्लिष्यन्=आलिङ्गन् । कृतबहुप्राकाम्यरूपः—प्राकाम्येन रूपाणि, प्राकाम्यरूपाणि, कृतानि बहूनि प्राकाम्यरूपाणि येन तथाविधः । हरिः=माधवः । इव दृश्यते=अवलोक्यते । शार्दूलविक्रीडितं वृत्तम् ॥ ६९ ॥

**हिन्दी**—और भी—कम्पन के कारण उनके वस्त्र नीचे गिर गये हैं, अत्यन्त वेग से उच्छ्वास हो रहा है, उन्नत पयोधरमण्डल पर पड़ी गुञ्जा मालाओं पर इन मृगनयनियों के स्वेदबिन्दुओं पर पड़ रहे प्रतिबिम्ब वाले आप गोपिकाओं को गले लगाते हुए अनेक प्रकार रूप धारण किये कृष्ण जैसे लग रहे हैं ॥ ६९ ॥

**अहो नु खल्वाश्चर्यमिदमेतासां तथाविधनेपथ्यनिरपेक्षाप्युन्मादयति यूनो मनो युवतीनां यौवनश्रीः । तथाहि—**

**सुधा**—अहोन्विति । अहो नु खलु=निश्चयमेव । आश्चर्यम् । एतासाम्=अमीषाम् । युवतीनाम्=तरुणीनाम् । तथाविधनेपथ्यनिरपेक्षा=तादृग्वस्त्राभरणापेक्षारहिता । यौवनश्रीः=तारुण्यशोभा अपि । यूनः=युवकस्य । मनः=चित्तम् । उन्मादयति=मदयति । तथा हि=यतो हि ।

**हिन्दी**—आश्चर्य है कि इन युवतियों की उस प्रकार की वस्त्रों तथा आभूषणों से अनावेष्टित यौवनश्री भी युवकों के मन को मतवाला बना देती है । क्योंकि;

**माल्यं मूर्धनि कर्णिकारकलिकाः पिष्टातकं चन्दनं**
**मुक्तादाम गले च काचमणयो लाक्षामयाः कङ्कणाः ।**
**रागोऽङ्गेषु हरिद्रया नयनयोरत्युल्बणं कज्जलं**
**वेषोऽयं विरसस्तथापि हृदयं ग्राम्या हरन्ति स्त्रियः ॥ ७० ॥**

**अन्वयः**—मूर्धनि कर्णिकारकलिकाः माल्यम्, पिष्टातकं चन्दनम्, गले च काचमणयः मुक्तादाम लाक्षामयाः कङ्कणाः, अङ्गेषु हरिद्रया रागः नयनयोः अत्युल्वणं कज्जलम् । अयम् विरसः वेषः । तथापि ग्राम्यः स्त्रियः हृदयं हरन्ति ॥ ७० ॥

**सुधा**—माल्यमिति । मूर्धनि=शिरसि ललाटे वा । कर्णिकारकलिकाः=कर्णिकारपुष्पाणां कलिकाः एव माल्यम्=माला । पिष्टातकम्=विलेपनम् । चन्दनम्=मलयजम् । गले=ग्रीवायाम् च । काचमणय एव । मुक्तादाम=मौक्तिकमाला । लाक्षामयाः=लाक्षायुक्ताः । कङ्कणाः=कङ्कणाभरणानि । अङ्गेषु=शरीरेषु । हरिद्रया =पीतरसेन । रागः=रञ्जनम् । नयनयोः=नेत्रयोः । अत्युल्वणं कज्जलम्=अत्यधिकं कज्जलम् । अयम्=एषः । विरसः=नीरसः । वेषः=वेषभूषा । तथापि=तदपि । ग्राम्याः=ग्रामीणाः । स्त्रियः=नार्यः । हृदयम्=चेतः । हरन्ति=मोहयन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

**हिन्दी**—क्योंकि—जिनके शिर पर ( चोटी में ) लगी हुई कनेर पुष्प की कलियाँ ही मालाएँ हैं, उबटन ही चन्दन है, गले में पड़ी काँच की मणियाँ ही मुक्तामाल हैं, लाख की चूड़ियाँ ही जिनके कंगन हैं, अङ्गों में लगी हल्दी ही रंग है तथा आँखों में बहुत-सा काजल लगा रहता है । जिनका वेष नीरस ( असुन्दर ) है, ऐसी ग्रामीण स्त्रियाँ भी हृदय को मोहित कर लेती हैं ॥ ७० ॥

**इतश्च—कन्दलितकन्दविशेषाः कर्कशकर्कटिका विशालकालिङ्गाः कूष्माण्डमण्डितमण्डपाः सुवृत्तवृन्ताका सुहस्तितहस्तिकर्णपुनर्नवाः स्थूलमूलकाः पिण्डितपलाण्डवो वास्तूकवास्तुभूतभूतलाः सञ्जीविसजीवन्तिकाः सर्षपराजिकाराजिराजिताः सरित्सारिणीसारिवारिसेचनसुकुमारपल्लवितविविधशाकाः शाकवाटिकाः ।**

**सुधा—इतश्च कन्दलितेति** । इतश्च=अत्र च । कन्दलितकन्दविशेषाः—कन्दलिताः,

कन्दविशेषाः=विशिष्टकन्दलानि यत्र तादृश्यः। कर्कशकर्कटिकाः=कठोरकर्कटिका-युक्ताः। विशालकलिङ्गाः—विशालाः=विस्तृताः, कलिङ्गाः=कलिङ्गपादपाः यत्र तादृश्यः। कूष्माण्डमण्डितमण्डपाः—कूष्माण्डैः, मण्डपितानि=शोभितानि, मण्डपानि यत्र तथाविधाः। सुवृत्तवृन्ताकाः—सुवृत्ताः=गोलाकाराः, वृन्ताकाः=वृन्तयुक्ताः यत्र तथाविधाः। सुहस्तिहस्तिकर्णपुनर्नवाः—सुहस्तीनि हस्तिकर्णानि=पुनर्नवाशाकानि च यत्र। स्थूलमूलकाः—स्थूलानि=पीनानि, मूलानि यत्र तथाविधाः। पिण्डित-पलाण्डवः—पिण्डितानि=पिण्डीकृतानि, पलाण्डूनि यत्र तथाविधाः। वास्तूकवास्तुभूत-भूतलाः—वास्तूकेन=शाकविशेषेण, वास्तुभूतम्=गणनार्हम्, भूतलम् यासु ताः। सञ्जी-वितजीवन्तिकाः—सञ्जीविताः=हरिताः, जीवन्तिकाः=जीवन्तिकपादपाः, यासु ताः। सर्षपराजिकाराजिराजिताः—सर्षपराजिकानाम्=सुकन्दकलिकानाम्, राजिभिः=पंक्तिभिः, राजिताः=शोभिताः। सरित्सारिणीसारिवारिसेचनसुकुमारपल्लवितविविधशाकाः—सरिताम्=नदीनाम्, सारिणीसारिवारिणा=कुल्याजलसेचनेन, सुकुमाराणि=सुकोम-लानि, पल्लवितानि=पल्लवयुक्तानि, विविधशाकानि यासु ताः। शाक-वाटिकाः=शाकोद्यानानि सन्तीति।

हिन्दी—और इधर नदियों की नहरों के जल से सिञ्चित कोमल पत्ते वाली विविध सब्जियों से सम्पन्न शाक वाटिकाएँ हैं जिनमें विशेष प्रकार के कन्द अंकुरित हो रहे हैं, जहाँ कठोर कंकड़ियाँ लगी हुई हैं। बड़े-बड़े कलिंग के पौधे खड़े हैं, जहाँ कूष्माण्डों से मण्डप शोभित हो रहे हैं जहाँ बड़े-बड़े गोलाकार बैंगन लगे हैं तथा हस्ति कर्ण ( हाथचिक ) एवम् पुनर्नवा की बेलें पौंड़ी हुई हैं। मोटी मूलियाँ उगी हुई हैं। जहाँ पिण्ड जैसे प्याज उगे हुये हैं तथा बथुये से जहाँ की भूमि महत्वपूर्ण बन गई है। जहाँ हरी भरी जीवन्तिका ( गिलोय ) खड़ी है तथा जहाँ सरसों ( कड़री ) की क्यारियाँ पंक्तियों में बनी हुई हैं।

**इतश्च—विकसन्मुचुकुन्दानन्दिनो मकरन्दस्यन्दिसुन्दरसिन्दुवाराः पामरी-संकेतनिकेतकेतकीवनाः कम्राम्रातकाः कुड्मलितकङ्कोलफलाः कोरकित-कुरण्टकाः पल्लवितवल्लीकाः फुल्लन्मल्लिकोल्लासिनः सुजातजातयो विचित्रशतपत्रिकास्ताण्डवितपाण्डुपिण्डितागुरुकरवीरवीरुधो दृश्यमानसर्व-र्तुपुष्पाः पुष्पायुधावासा आरामाः।**

**सुधा—इतश्च विकसन्निति।** इतश्च=अत्र च। विकसन्मुचुकुन्दानन्दिनः—विकसद्भिः=विकचद्भिः, मुचुकुन्दैः=मुचुकुन्दनामपादपैः, आनन्दिनः=आनन्दप्रदाः। मकरन्दस्यन्दिसुन्दरसिन्दुवाराः—मकरन्दस्यन्दिनः=मधुरसच्योतनाः, सुन्दराः=सुश्रीकाः, सिन्दुवाराः यत्र तादृशाः। पामरीसङ्केतनिकेतकेतकीवनाः—पामरीणाम्=ग्राम्ययुवतीनाम्, सङ्केतनिकेतनानि=संकेतसदनानि, केतकीवनानि=केतकीकाननानि, यत्र तथाविधाः। कम्राम्रातकाः—कम्राणि=नम्राणि, आम्रातकानि=आम्राणि, यत्र तथाविधाः। कुड्मलितकङ्कोलफलाः—कुड्मलितानि=मुकुलितानि, कङ्कोलफलानि,

यत्र तथा। कोरकितकुरण्टकाः—कोरकितानि=कुड्मलितानि, कुरण्टकानि यत्र तथाविधाः। पल्लवितवल्लीकाः—पलविताः=कुसुमिताः, वल्लीकाः यत्र ताः। फुल्लन्मल्लिकोल्लासिनः—फुल्लन्त्यः=विकसन्त्यः, मल्लिकाः=मालतीलतास्ताभिरुल्लासिनः=आनन्दिताः। सुजातजातयः—सुजातानि=सुन्दराणि, जातीनि=जातिपुष्पाणि, यत्र तथाविधाः। विचित्रशतपत्रिकाः—विचित्राः=अद्भुताः, शतपत्रिकाः=वचपादपाः, यत्र ताः। ताण्डवितपाण्डुपिण्डितागुरुकरवीरवीरुधः—ताण्डविताः=कम्पिताः, पाण्डुपिण्डिताः=पीतवर्णाः, पिण्डिताश्चागुरुकरवीराणाम्, वीरुधः=लताः, यत्र तथाविधाः। दृश्यमानसर्वर्त्तुपुष्पाः—दृश्यमानानि=दृष्टव्यानि, सर्वर्त्तुपुष्पाणि=सर्वकालसम्भवानि कुसुमानि यत्र तथाविधाः। पुष्पायुधावासाः—पुष्पाणि=कुसुमानि, आयुधानि, यस्य तथाविधस्य मदनस्य आवासाः=सादमानि यत्र। आरामाः=उद्यानानि। सन्ति।

हिन्दी—और इधर उद्यान विकसित मुचुकुन्द के कारण आनन्ददायी हैं। यहाँ मकरन्दरस को टपकाने वाले सुन्दर सिन्दुवार वृक्ष हैं, ग्रामीण स्त्रियों के संकेत निकेतन वने केवड़ों के वन हैं। झुके हुए आमों के झुरमुट, मुकुलित कङ्कोल फल तथा कलियों वाले कुरवक वृक्ष हैं जहाँ पल्लवित वल्लीक, प्रफुल्लित मालती के उल्लास और सुन्दर जाती पुष्प के पादप हैं, विचित्र वचा के वृक्ष हैं हिलते (काँपते) हुये पीले सुडौल अगुरु तथा करवीर की लताएँ हैं। यहाँ उद्यान सभी ऋतुओं में दिखलाई पड़ने वाले फूलों से लदे कामदेव के आवास से बने हुये हैं।

**इतश्च—नातिदूरे दक्षिणदिशि दृशं निवेशयतु देवः।**

**सुधा—इतश्च नातिदूर इति।** इतश्च=अत्र च। नातिदूरे=निकट एव। दक्षिणदिशि=आवाचीदिशायाम्। देवः=भवान्। दृशम्=दृष्टिम्। निवेशयतु=पातयतु।

हिन्दी—और इधर—थोड़ी दूर ही दक्षिण दिशा में आप दृष्टि तो डालिये।

**एतास्ताः परिपक्वशालिकलमाः सुस्वादुदीर्घेक्षवो**
**वप्रप्रान्तहरित्तृणस्थलचलत्पीनाङ्गगोमण्डलाः।**
**दृश्यन्ते पुरतः सरोरुहवनभ्राजिष्णुनीराशयाः**
**प्रान्तोन्नादिविचित्रपत्रिनिचयाः सस्यस्थलीभूमयः॥ ७१॥**

**अन्वयः**—एताः ताः परिपक्वशालिकलमाः सुस्वादुदीर्घेक्षवः वप्रप्रान्तहरित्तृणस्थलचलत्पीनाङ्गगोमण्डलाः सरोरुहवनभ्राजिष्णुनीराशयाः प्रान्तोन्नादिविचित्रपत्रनिचयाः सस्यस्थलीभूमयः पुरतः दृश्यन्ते॥ ७१॥

**सुधा—एता इति।** एताः=इमाः, ताः। परिपक्वशालिकलमाः—परिपक्वाः=सुपक्वाः, शालिकलमाः=शालिधान्यविशिष्टानि। सुस्वादुदीर्घेक्षवः—स्वादिष्टलम्बेक्षुदण्डानि। वप्रप्रान्तहरित्तृणस्थलचलत्पीनाङ्गगोमण्डलाः—वप्रप्रान्तेषु=पर्वततलीयभागेषु, हरित्तृणस्थलेषु=हरितघासस्थानेषु, चलन्तः=भ्रमन्तः, पीनाङ्गाः=स्थूल(हृष्टपुष्ट)शरीराः, गोमण्डलाः=धेनुवृन्दानि। सरोरुहवनभ्राजिष्णुनीराशयाः—

सरोरुहवनेन=कमलवनेन, भ्राजिष्णवः=शोभमानाः, नीराशयाः=जलाशयाः। प्रान्तोन्नादिविचित्रपत्रिनिचयाः=प्रान्तेषु, उन्नादिनाम्=कूजताम्, विचित्रपत्रिणाम्=विविधखगानाम्, निचयाः=समूहाः। सस्यस्थलीभूमयः=सस्यभूप्रदेशाः। पुरतः=सम्मुखे। दृश्यन्ते=आलोक्यन्ते। शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

हिन्दी—यह वे पके शालिधान विशेष सुस्वादिष्ट लम्बे गन्ने, पर्वतीय भागों में खड़ी हरी घास के भूखण्डों में घूम रही हृष्टपुष्ट गायों के झुण्ड, कमल वनों से शोभित जल वाले जलाशयों के छोरों पर कल कूजन कर रहे पक्षियों के समूह एवम् सस्य (फसलों) से परिपूर्ण भूभाग हैं ॥ ७१ ॥

अपिच—

**स्वःसौन्दर्यविडम्बि कुण्डिनमिदं सैषा विदर्भा नदी**
**सा चेयं वरदा स चायमनयोः पुण्याम्भसोः सङ्गमः।**
**अस्यैवोन्मदहंसहारिणि तटे सेनास्थितिः कल्प्यतां**
**यस्मिन्मत्तकरीन्द्रकुम्भकषणक्रीडासहाः पादपाः ॥ ७२ ॥**

अन्वयः—स्वःसौन्दर्यविडम्बि इदं कुण्डिनम्, एषा सा विदर्भा नदी, सा च इयं वरदा, स च अयम् अनयोः पुण्याम्भसोः सङ्गमः। अस्य एव मदहंसहारिणि तटे सेनास्थितिः कल्पताम्। यस्मिन् मत्तकरीन्द्रकुम्भकषणक्रीडासहाः पादपाः सन्ति ॥ ७२ ॥

सुधा—स्व इति। स्वःसौन्दर्यविडम्बि—स्वसः=स्वर्गस्य, सौन्दर्यम्=सुन्दरताम्, विडम्बतीति तत्। इदम्=एतत्। कुण्डिनम्=कुण्डिनपुरम्। एषा=इयम्। सा=असौ। विदर्भानदी=विदर्भा सरिता। सा च इयम्=एषा। वरदा=वरदानदीः। स च अयम्=असौ चैषः। अनयोः=एतयोर्विदर्भावरदयोः। पुण्याम्भसोः=पवित्रवारिणोः। सङ्गमः=सम्मिलनम् अस्तीति। अस्य=एतस्य, सङ्गमस्य एव। उन्मदहंसहारिणि—उन्मदाः=मत्ताः, हंसहारिणः=कलहंसाः यत्र तादृशि। तटे=रोधसि। सेनास्थितम्=सैन्यस्यावस्थानम्। कल्पताम्=विधीयताम्। यस्मिन्=यत्र। मत्तकरीन्द्रकुम्भकषणक्रीडासहाः—मत्तकरीन्द्राणाम्=मत्तगजानाम्, कुम्भानाम्=कुम्भस्थलानाम्, याः क्रीडाः=विलासः, तां सहन्त इति तथाविधाः। पादपाः=वृक्षाः सन्ति। शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

हिन्दी—और भी—स्वर्ग की सुन्दरता से होड़ करने वाला यह कुण्डिनपुर है। यही वह विदर्भा तथा वरदा नदियाँ हैं तथा यही वह इन दोनों के पवित्र जलों का संगम है। इसी मतवाले हंसों वाले मनोरम तट पर आप सेना को ठहरा दें, जहाँ मत्त गजों के कुम्भस्थलों के घर्षण क्रीडा को सहन करने वाले पादप खड़े हैं ॥ ७२ ॥

**एवमनेकधा दर्शनीयप्रदेशप्रकाशनव्याजेन विनोदलीलां पल्लवयति पुष्कराक्षे, 'प्राप्ताः कुण्डिनपुरम्' इत्युच्छ्वसितहृदयो निषधेश्वरः परमपरितोषात्पारितोषिकप्रदानपूर्वमिदमवादीत्।**

सुधा—एवमिति। एवम्=इत्थम्। अनेकधा=बहुप्रकारम्। दर्शनीयप्रदेशप्रका-

शनव्याजेन—दर्शनीयानाम्=दृष्टव्यानाम्, प्रदेशानाम्=स्थलानाम्, प्रकाशनस्य=व्याख्यायाः, व्याजेन=मिषेण। विनोदलीलाम्=मनोरञ्जनक्रीडाम्। पुष्कराक्षे=तन्नामजने। पल्लवयति=विकासयति सति। कुण्डनपुरम्=तन्नामनगरम्। प्राप्ताः=समागताः वयमिति। एवम्, उच्छ्वसितहृदयः=उच्छ्वसितचेताः। निषधेश्वरः=निषधनृपः। परमपरितोषात्=अत्यधिकानन्दात्। पारितोषिकप्रदानपूर्वकम्=पुरस्कारवितरणपूर्वकम्। इदम्=एतत्। अवादीत्=अकथयत्।

हिन्दी—इस भाँति अनेक प्रकार दर्शनीय स्थलों को बताने के बहाने पुष्कराक्ष के विनोद लीला कर चुकने पर—'हम कुण्डिनपुर आ गये हैं।' यह कहकर ऊँची-ऊँची श्वासें लेते हुए राजा नल परम सन्तोष से पारितोषिक प्रदान कर (यह) कहने लगे—

**'भद्र, भवतः सौकुमार्यमाधुर्यमधुविश्रम्भसन्दर्भितभङ्गश्लेषगर्भाभिर्गीर्भिराक्षिप्तमनसामस्माकमविदितखेद इव, अदृष्टसमविषमविभाग इव, अनुत्पादितस्वेदलव इव, अर्धगव्यूतिमात्रशेषोऽतिक्रान्तः क्रीडाविहारभूमिसमो महानपि मार्गः। समुचितश्चायं सेनानिवेशस्य सरित्सङ्गमोपकण्ठवनविभागः।**

सुधा—भद्र इति। भद्र=कल्याणिन्! भवतः=श्रीमतः। सौकुमार्यमाधुर्यमधुविश्रम्भसन्दर्भितभङ्गश्लेषगर्भाभिः—सौकुमार्यम्=सुकुमारता, माधुर्यम्=मधुरता, मधु च विश्रम्भि तेन सन्दर्भिताः=प्रसङ्गयुताः भङ्गश्लेषगर्भाभिः=भङ्गश्लेषयुक्ताभिः। गीर्भिः=वाणीभिः। अक्षिप्तमनसाम्—अक्षिप्तानि=आकृष्टानि, मनांसि=चेतांसि, येषां ते तेषाम्। अस्माकम्। अविदितखेद इव=अज्ञातखिन्नतेव। अदृष्टसमविषमविभाग इव—अदृष्टः=अनवलोकितः, समविषमः=उच्चावचः, विभागः=भेदः इव। अनुत्पादितस्वेदलव इव=स्वेदबिन्दूत्पादनं विनैव। अर्द्धगव्यूतिमात्रशेषः=एकक्रोशमात्रावशिष्टः। क्रीडाविहारभूमिसमः=खेलस्थल इव। महान् अपि मार्गः=सुविशालोऽपि पन्थाः। अतिक्रान्तः=पारतां नीतः। अयम्=एषः। सरित्सङ्गमोपकण्ठवनविभागः—सरितोः=विदर्भविरदानद्योः, सङ्गमस्योपकण्ठस्य=तटवर्तिनः, वनस्य=अरण्यस्य, विभागः=प्रदेशः। समुचितः=अतिसमीचीनः अस्तीति।

हिन्दी—भाई, आपकी सुकुमारता, मधुरता एवं मधुर प्रसंग सहित सभङ्गश्लेष पूर्ण वाणी से हमारा मन आकृष्ट था। (अतः) खेद का अनुभव किये बिना अथवा ऊँची-नीची भूमि का ध्यान किये बिना तथा थकान जाने बिना केवल एक कोस अशिष्ट यह विशाल मार्ग भी खेलने के मैदान जैसा सरलता से पार कर लिया गया है और अब यह दोनों नदियों के संगम का तटभाग सेना के ठहरने के लिए उपयुक्त है।

**तथा हि—**

**इह भवतु निवासः सैनिकानामिहापि**
**श्रमतरलतुरङ्गग्रासयोग्या तृणाली।**
**इह हि कवलयन्तः पल्लवान्वारणेन्द्रा**
**विदधतु तरुखण्डे गण्डकण्डूयनानि॥ ७२॥**

**अन्वयः**—इह सैनिकानां निवासः भवतु, इह अपि श्रमतरलतुरङ्गग्रासयोग्या तृणाली। हि इह पल्लवान् कवलयन्तः वारणेन्द्राः तरुखण्डे गण्डकण्डूयनानि विदधतु॥

**सुधा—इह इति।** इह=अत्र। सैनिकानाम्=वीराणाम्, आरक्षीणाम्। निवासः =आवासः। भवतु=अस्तु। इह अपि=अत्रापि। श्रमतरलतुरङ्गग्रासयोग्या—श्रमेण= परिश्रमेण, तरलाः=चञ्चलाः, तेषां तुरङ्गाणाम्=वाजिनाम्, ग्रासस्य=खादनस्य, योग्या=उपयुक्ता। तृणाली=घासश्रेणीः, अस्ति। हि=यतः। इह=अत्र। पल्लवान् =कोमलदलानि। कवलयन्तः=खादयन्तः। वारणेन्द्राः=मत्तगजाः। तरुखण्डे= पादपशकले। गण्डकण्डूयनानि—गण्डानाम्=कपोलस्थलानाम्, कण्डूयनानि=घर्षणानि। विदधतु=कुर्वन्तु। मालिनी वृत्तम्॥ ७३॥

**हिन्दी**—अतः यहाँ सैनिकों का पड़ाव होवे। इस स्थान पर भी परिश्रम से थके चञ्चल घोड़ों के खाने योग्य घास श्रेणी है अतः यहाँ पल्लव खाते हुए गजराज पादपखण्ड पर गण्डस्थलों को रगड़ें॥ ७३॥

**इतश्चात्यन्तमनोहरतयास्माकमासनयोग्याः सरित्सङ्गमोत्सङ्गभूमयः॥**

**सुधा—इतश्चेति।** अत्यन्तमनोहरतया=अतीवरमणीयतया। अस्माकम्=नः। आसनयोग्याः=विश्रामोपयुक्ताः। सरित्सङ्गमोत्सङ्गभूमयः—सरितः=विदर्भावरदानद्योः, सङ्गमः=मिलनम्, तस्योत्सङ्गभूमयः=मध्यवर्तिप्रदेशाः सन्तीति।

**हिन्दी**—और इधर अत्यन्त मनोरम होने के कारण हमारे ठहरने के योग्य नदियों के सङ्गम का मध्यवर्तिभाग है।

**तथा हि—**

**अपसृताम्बुतरङ्गितसैकता निचुलमण्डपनृत्तशिखण्डिकाः।**
**कुररसारसहंसनिवेषिताः पुलकयन्ति न कं पुलिनश्रियः॥ ७४॥**

**अन्वयः**—अपसृताम्बुतरङ्गितसैकताः निचुलमण्डपवृत्तशिखण्डिकाः कुररसारसहंसनिवेषिता पुलिनश्रियः कं न पुलकयन्ति॥ ७४॥

**सुधा—अपसृतेति।** अपसृताम्बुतरङ्गितसैकताः—अपसृतेन=अपसरणेनाम्बुना= जलेन, तरङ्गितानि=लोलायितानि, सैकतानि यत्र तथाविधाः। निचुलमण्डपनृत्तशिखण्डिकाः—निचुलमण्डपेषु=वेत्रकुञ्जेषु, नृत्तन्तः शिखण्डिनः=मयूराः, यत्र, तथाविधाः। कुररसारसहंसनिवेषिताः—कुररैः=कुररपक्षिभिः, सारसैः हंसैश्च निवेषिताः =संयुक्ताः। पुलिनश्रियः—पुलिनस्य, तटस्य श्रियः=शोभाः। कम्=कं जनम्। न पुलकयन्ति=रोमाञ्चितं न कुर्वन्ति। द्रुतविलम्बितं वृत्तम्॥ ७४॥

**हिन्दी**—क्योंकि—पानी के हट जाने से तरङ्गों की आकृति बनी हुई रेत व वेतों के कुञ्जों में जहाँ मोर नाच रहे हैं तथा कुरर, सारस तथा हंस निवास करते हैं ऐसी तटवर्ती शोभा किसको रोमाञ्चित नहीं कर देती है॥ ७४॥

**इत्यभिधाय 'भद्र, यथाक्रममकृतान्योऽन्यसम्बाधकलहम्, अनुपद्रुततीर्थायतनम्, अलुण्ठितासन्नोद्यानम्, अच्छिन्नचैत्यद्रुमम्, अविच्छिन्नकमलवनं**

**निवेशय सेनाम्' इति सेनापतिमादिदेश। सोऽपि यथादिष्टमनुतिष्ठन्निद-मवादीत्।**

**सुधा**—इत्यभिधायेति। इति=एवम्। अभिधाय=कथयित्वा। भद्र=कल्याणकर! यथाक्रमम्=क्रमानुसारम्। अकृतम्=अविहितम्। अन्योऽन्यसम्बाधकलहम्—अन्योन्यम्=पारस्परिकम्, सम्बाधकलहम्=बाधासंघर्षम् यत्र तत्। अनुपद्रुततीर्थायतनम्—अनुपद्रितानि=उपद्रवशून्यानि, तीर्थायतनानि=तीर्थमण्डलानि यत्र तत्। अलुण्ठितासन्नोद्यानम्—अलुण्ठितानि=सुरक्षितानि आसन्नोद्यानानि=समीपवर्तिवाटिकाः यत्र तत्। अच्छिन्नचैत्यद्रुमम्—अच्छिन्नाः=अलूनाः, चैत्यद्रुमाः=यज्ञस्थलपादपाः यत्र तत्। अविच्छिन्नकमलवनम्—अविच्छिन्नानि=अत्रुटितानि, कमलवनानि=सरसिजकाननानि, यत्र तत्। सेनाम्=चमूम्। निवेशय=प्रवेशय। इति=एवम्। सेनापतिम्=बलाध्यक्षम्। आदिदेश=आज्ञापयामास। सः=असौ, सेनाध्यक्षः अपि। यथादिष्टम्=आदेशानुसारम्। अनुतिष्ठन्=सम्पादयन्। इदम्=एतत्। अवादीत्=अवोचत।

**हिन्दी**—यह कहकर—'भद्र! क्रमशः आपस में कलह किये बिना, उपद्रवशून्य तीर्थायतनों वाले, जहाँ समीपवर्ती उद्यानों को लूटा नहीं जाय तथा यज्ञस्थल के वृक्षों को काटे बिना एवम् कमल वनों को नष्ट किये बिना सेना को ठहराइये।' यह सेनापति को आदेश दिया। वह भी आदेशानुसार कार्य करता हुआ इस प्रकार कहने लगा—

**भजत बलसमूहाः खर्वदूर्वास्थलानि**
**स्थविरशुकविशीर्यत्पक्षपिच्छच्छवीनि।**
**उपनदि मृदुवीचीवायुनाऽन्दोलितानां**
**कुसुमितलतिकानामन्तरालेष्वमूनि॥ ७५॥**

**अन्वयः**—बलसमूहाः उपनदि मृदुवीचीवायुना आन्दोलितानां कुसुमितलतिकानाम् अन्तरालेषु स्थविरशुकविशीर्यत्पक्षपिच्छच्छवीनि अमूनि खर्वदूर्वास्थलानि भजत॥७५॥

**सुधा**—भजत इति। बलसमूहाः=सैन्ययूथानि। उपनदि=सरित्तटे। मृदुवीचीवायुना=कोमलतरङ्गपवनेन। आन्दोलितानाम्=कम्पितानाम्। कुसुमितलतिकानाम्=विकसितवीरुधाम्। अन्तरालेषु=मध्यभागेषु। स्थविरशुकविशीर्यत्पक्षपिच्छच्छवीनि—स्थविराः=वृद्धाः, ये शुकाः=शुकपक्षिणः, तेषां विशीर्यताम्=पतताम्, पक्षाणाम्=पुंखानाम्, पिच्छाः=तदंशाः तेषाम्। छविः=शोभा, येषु तादृशानि। अमूनि=एतानि। भजत=सेवन्ताम्। मालिनी वृत्तम्॥ ७५॥

**हिन्दी**—नदी के समीप कोमल तरङ्गों वाली वायु से आन्दोलित पुष्पों से लदी लतिकाओं के मध्य वृद्ध शुकों के गिरते हुये पंखों के अंशों की शोभावाले यह कटी-छटी दूब वाले स्थलों में बल-समूह ( सैन्य ) ठहरें॥ ७५॥

**अपि च—**

**स्मरविहरणवेदीं षट्पदापानशालां**
**तटमनु वनमालां सस्मया मास्म भाङ्क्षुः।**

**कमलवनविहारानन्तरं यत्र तैस्तै-**
**मदनमदविनोदैरासते राजहंसाः ॥ ७६ ॥**

अन्वयः—तटम् अनु स्मरविहरणवेदीं षट्पदापानशालां सस्मयाः मास्म भांक्षु यत्र कमलवनविहारानन्तरं तैः तैः मदनमदविनोदैः राजहंसाः आसते ॥ ७६ ॥

सुधा—स्मरेति । तटम् अनु=तटपार्श्वम् । स्मरविहरणवेदीम्—स्मरस्य=मदनस्य, या विहरणवेदी ताम्=विचरणपीठिकाम् । षट्पदापानशालाम्—षट्पदानाम्=भ्रमराणाम्, आपानशाला=आस्वादनभूमिस्ताम् । सस्मयाः=सविस्मयाः, सगर्वाः वा । मास्म भांक्षुः=नष्टं मा कुर्वन्तु । यत्र=यस्यां भूमौ । कमलवनविहरणान्तरम्—कमलवने=पद्मारण्ये, विहरणस्य=विचरणस्यान्तरे=मध्ये, तैस्तैः=विविधप्रकारैः, मदनमदविनोदैः—मदनस्य=कामस्य, मदविनोदैः=मत्तमनोरञ्जनैः । राजहंसाः=कलहंसाः । आसते=निवसन्ति । मालिनीवृत्तम् ॥ ७६ ॥

हिन्दी—और भी—तट के समीपवर्ती, कामदेव के विचरण की वेदी सी बनी हुई भ्रमरों के मधुरसपान की शाला ( उद्यान ) को गर्वित-सैनिको ! मत नष्ट करना, जहाँ कमल-वन में विहार करने के अनन्तर विभिन्न प्रकार की कामदेव की मत्तक्रीडाओं द्वारा राजहंस निवास करते हैं ॥ ७६ ॥

**अपि च—**

**सुरसदननिवासं सैनिका मास्म कुर्वन्**
**सरिति मुनिकुटीनां भङ्गमुल्लुण्ठनं वा ।**
**इह निषधनृपाज्ञा तस्य यः क्वापि कोऽपि**
**क्लममुषि तरुखण्डे खण्डनं वा करोति ॥ ७६ ॥**

अन्वयः—सैनिकाः इह सरिति मुनिकुटीनाम् सुरसदननिवासं भङ्गं उल्लुण्ठनं वा कुर्वन् तरुखण्डे क्लममुषि खण्डनम् वा मास्म करोति ( इति ) तस्य निषधनृपाज्ञा ॥७७॥

सुधा—सुरसदनेति । सैनिकाः=रक्षकाः । इह=अत्र । सरिति=नद्यास्तटे । मुनिकुटीनाम्=मुनिनिवासस्थलानाम् । सुरसदननिवासम्=देवगृहसदृशनिवासस्थानम् । भङ्गम्=नष्टम् । उल्लुण्ठनम्=अपहरणम् । वा कुर्वन्=विदधन् । तरुखण्डे=वृक्षशकले । क्लममुषि=श्रमापहारि । खण्डनम्=उच्छेदम् वा । यः कोऽपि=कश्चिदपि । क्वापि=कुत्रापि । मास्म करोति=मास्म विदधाति । इति तस्य निषधनृपतेः । आज्ञा=आदेशः । मलिनी वृत्तम् ॥ ७७ ॥

हिन्दी—और भी यहाँ नदी तट पर ऋषि मुनियों के देव-सदन जैसे निवास स्थान को नष्ट अथवा लूटखसोट करते हुए वृक्षखण्ड में थकावट मिटाने वाला खण्डन मत करना । यह निषध-नरेश की आज्ञा है ॥ ७७ ॥

**एवमनुशासति बलानि बहूनि बहुधा बाहुके, तत्क्षणादुत्तम्भितैः, प्रेङ्खत्पताकापटपल्लवविराजितैः प्रयाणयोग्ययन्त्रचित्रशालागृहैः सञ्चारिणि गन्धर्वनगर इव रमणीये, हरिततोरणैरुड्डीनशुकावलीमय इव, गैरिका-**

रक्तोन्नमितपटकुटीभिरुत्फुल्लकिंशुकमय इव, श्वेतांशुकमण्डपैश्च ताण्डवितबृहत्पुण्डरीकखण्डमय इव, जाते सरित्सङ्गसङ्गिनि शिविरसन्निवेशे, क्रमेणाक्रान्तसकलदिङ्मुखेषु निषधेश्वरागमनवार्तानिवेदनदूतेष्विव विदर्भराजधानीधामनिर्गतेषु बहलसैन्यधूलिपटलेषु, रसति विपक्षक्षितिपालकर्णपुटीकटूनि नवजलधरध्वनितगम्भीरे तत्कालप्रहतशङ्खसहप्रयाणझल्लरीझाङ्कृते, स्वयंवरायातसमस्तराजन्यचक्रकर्णकर्तरीषु पठ्यमानासु सानन्दवन्दारुवन्दिवृन्दारकवृन्देनोच्चैर्नलनाममालासु, क्षणादेवोत्तम्भितशातकुम्भस्तम्भभवने मृदुमसृणास्तरणभाजि जात्यवैदुर्यपर्यन्तपर्यङ्किकायां सुखनिषण्णे राजनि, सुस्थिते च परिजने, नातिदूरवर्त्तिनि कुण्डिने दण्डपाशिकस्योच्चैर्वागुदतिष्ठत्।

सुधा—एवमिति। एवम्=इत्थम्। बलानि=सैन्यानि। बहूनि=अनेकानि। बहुधा=विविधप्रकारम्। बाहुके=बाहुकनाम्नि बलाध्यक्षे। अनुशासति=आदिशति सति। तत्क्षणम्=तत्कालात्। उत्तम्भितैः=उत्थापितैः। प्रेङ्खत्पताकापटपल्लवविराजितैः—प्रेङ्खद्भिः=प्रस्फुरद्भिः, पताकापटपल्लवविराजितैः=पताकापटरूपपल्लवशोभितैः। प्रयाणयोग्ययन्त्रचित्रशालागृहैः—प्रयाणयोग्यैः=प्रस्थानोचितैः, यन्त्रचित्रशालागृहैः=यन्त्रचित्रशालासदनैः। सञ्चारिणि=सञ्चरणशीले। गन्धर्वनगरे इव—गन्धर्वपुरसमाने। रमणीये=मनोरमे। हरिततोरणैः=हरितवर्णपताकाभिः। उड्डीनशुकावलीमये=उद्गच्छच्छुकपंक्तिमये इव। गैरिकारक्तोन्नमितपटकुटीभिः=गैरिकवर्णाभिरुन्नमितवस्त्रकुटीभिः। उत्फुल्लकिंशुकमय इव=विकसितकिंशुकयुक्ते यथा। श्वेतांशुकमण्डपैः=शुभ्रवस्त्रमण्डपैः। ताण्डवितबृहत्पुण्डरीकखण्डमय इव=प्रकम्पितविशालकमलवनसमे। सरित्सङ्गसङ्गिनि=सरितोः, सङ्गे=सङ्गमे, सङ्गिनि=विद्यमाने। शिविरसन्निवेशे=शिविरस्य, प्रवेशे। जाते=सञ्जाते। क्रमेण=क्रमशः। आक्रान्तसकलदिङ्मुखेषु—आक्रान्तानि=व्याप्तानि, सकलदिङ्मुखानि=सर्वदिशावदनानि, यत्र तेषु। निषधेश्वरागमनवार्तानिवेदनदूतेषु इव—निषधेश्वरस्य=निषधनरेशस्य नलस्यागमनवार्तायाः=आगमनसमाचारस्य, निवेदनाय=आवेदनाय, ये दूतास्तेषु। यथा। विदर्भराजधानीधामनिर्गतेषु— विदर्भराजधान्याः=कुण्डिनपुरस्य, धामेभ्यः=भवनेभ्यः, निर्गतेषु=निर्यातेषु। बहलसैन्यधूलिपटलेषु=अत्यधिकसैन्यरेणुपटलेषु। विपक्षक्षितिपालकर्णपुटीकटूनि—विपक्षेभ्यः=शत्रुपक्षेभ्यः, क्षितिपालेभ्यः=नृपेभ्यः, कर्णपुटेषु=श्रोत्ररन्ध्रेषु, कटूनि=अप्रियाणि। नवजलधरध्वनितगम्भीरे—नवजलधराणाम्=नूतनघनानाम्, यद् ध्वनितम्=गर्जितम्, तथा गम्भीरे=गहने। तत्कालप्रहतशंखसहप्रयाणझल्लरीझाङ्कृते—तत्कालम्=तत्क्षणम्, प्रहतैः=वादितैः, शङ्खैः सह=साकम्, प्रयाणस्य=प्रस्थानस्य, झल्लरीझाङ्कृते=झालवाद्यस्य झाङ्कृते। स्वयंवरायातसमस्तराजन्यचक्रकर्णकर्तरीषु—स्वयंवराय=स्वयंवरविधिनावरणहेतोः आगतस्य=आयातस्य, समस्तराजन्यचक्रस्य=निखिलनृपसमूहस्य, कर्णकर्तरीषु=श्रोत्र-

रूपकर्तरीषु । पठ्यमानासु=प्रतीतासु । सानन्दवन्दारुवन्दिवृन्दारकवृन्देन—सानन्दम्, वन्दारुवन्दिवृन्दारकवृन्देन=वन्दिजनपठितस्तुतिवर्गेण । उच्चैः=तारस्वरेण । नलनाममालासु=नलस्य नाममालासु । क्षणादेव=सहसैव । उत्तम्भितशातकुम्भस्तम्भभवने—उत्तम्भितानाम्=उत्थापितानाम्, शातकुम्भस्तम्भानां, भवने=सदने । मृदुमसृणस्तरणभाजि=अतिकोमलस्तरणशोभि । जात्यवैदूर्यन्तपर्यङ्किकायाम्—जात्यवैदूर्यपर्यन्तम्=विद्रुममणिपर्यन्तम्, पर्यङ्किकायाम्=पट्टिकायुक्तपर्यङ्के । राजनि=नृपे । सुखनिषण्णे—सुखेन=आनन्देन, निषण्णे=समासीने । परिजने=सेवकवर्गे । सुस्थिते=सुस्थिरतां गते च । नातिदूरवर्तिनि=पार्श्ववर्तिनि । कुण्डिने=कुण्डिननगरे । दण्डपाशिकस्य=दण्डपाशधरस्य, रक्षकस्य । उच्चैः=तारस्वरेण । वाक्=वाणी । उदतिष्ठत्=उदगमत् ।

**हिन्दी**—इस प्रकार बहुविधबाहुक सेनापति द्वारा सैनिकों को समझाये जाने पर तत्काल नदी संगम पर सैन्यशिविर बनाया गया । इसकी फहराती हुई पताकाओं के वस्त्र और पल्लवों से शोभित, प्रस्थान योग्य यन्त्रचित्रशालागृहों से अलंकृत, संचारण कर रहे गन्धर्व नगर के समान रमणीक, हरित तोरण पताकाओं से उड़ रहे हरे तोतों की पंक्तियों के समान लग रहे थे । गेरुए और लाल रंग की ऊँची पटकुटीरों से फूले हुए टेसुओं जैसे दिखलाई पड़ रहे थे । शुभ्र पटमण्डपों से विकसित विशाल पुण्डवन-सदृश नदियों की संगम-भूमि पर सेना का शिविर बनाया गया । क्रमशः अत्यन्त सैन्यधूलिपटल समस्त दिशाओं में आक्रमण करते हुए निषधराज नल के आगमन की सूचना देने वाले दूतों के समान विदर्भराजधानी के भवनों में प्रविष्ट हो गये । शत्रुपक्ष के राजाओं के कर्णरन्ध्रों में कटु ( कर्कश ) लगने वाले नूतन घनों के गम्भीर गर्जन, तत्क्षण बजाये गये शंखों के साथ प्रस्थान करने की सूचना देने वाली झल्लरी ( झांझ बाजा ) झनझना उठी । स्वयंवर में आये समस्त नृप वर्ग के कानों में कैंची सदृश लगने वाली सानन्द नल के नाम की माला वन्दी जन-वृन्द द्वारा उच्चैः स्वर से पढ़ी जाने लगी । क्षण भर में ही उठाये गये स्वर्ण स्तम्भों वाले भुवनों में अत्यन्त कोमल बिछौनों से शोभित विद्रुममणि की पाटियों वाले पलंग पर राजा के सुखासीन हो जाने और परिजनों के सुस्थिर हो जाने पर कुण्डिन नगर से थोड़ी ही दूर पर दण्डपाशधारी ( रक्षक ) की आवाज उठी ।

**सिच्यन्तां राजमार्गाः कलशमुखगलच्चन्दनाम्बुच्छटाभिः**
**स्तम्भाः प्रेङ्खत्पताकाः कुसुमपरिवृतास्तोरणाङ्काः क्रियन्ताम् ।**
**स्थाप्यन्तां पूर्णकुम्भाः प्रतिनगरगृहं प्राङ्गणे धान्यमिश्रैः**
**सिद्धार्थैः स्वस्तिकालीर्लिखत नरपतिर्नैषधः प्राप्त एषः ॥७८॥**

**अन्वयः**—कलशमुखगलच्चन्दनाम्बुच्छटाभिः राजमार्गाः सिच्यन्ताम् । स्तम्भाः प्रेङ्खत्पताकाः तोरणाङ्काः कुसुमपरिवृताः क्रियन्ताम् । प्रतिनगरगृहं प्राङ्गणे धान्यमिश्रैः पूर्णकुम्भाः स्थाप्यन्ताम् । सिद्धार्थैः स्वस्तिकालीः लिखत । एष नैषधः नरपतिः प्राप्तः ॥ ७८ ॥

**सिच्यन्ताम् इति।** कलशमुखगलच्चन्दनाम्बुच्छटाभिः—कलशमुखेभ्यः=कुम्भकण्ठेभ्यः, गलतः=पततः, चन्दनाम्बुनः=मलयजवारिणः, छटाभिः=धाराभिः। राजमार्गाः=राजपथाः। सिच्यन्ताम्=आर्द्रीक्रियन्ताम्। स्तम्भाः=स्तूपाः। प्रेङ्खत्पताकाः—प्रेङ्खन्ती पताकाः येषु तथाविधाः। तोरणाङ्काः=तोरणानि। कुसुमपरिवृताः—कुसुमैः=पुष्पैः, परिवृताः—परितः, आवृताः=आच्छादिताः ये तथाविधाः। क्रियन्ताम्=विधीयन्ताम्। प्रतिनगरगृहम्—नगरं नगरं गृहं गृहञ्चेति प्रतिनगरगृहम्। प्राङ्गणे=अजिरे। धान्यमिश्रैः=यवाक्षतादिधान्यमिश्रितैः। पूर्णकुम्भाः=जलपूर्णघटाः। स्थाप्यन्ताम्=ध्रियन्ताम्। सिद्धार्थैः=मन्त्रादिभिः। स्वस्तिकालीः—स्वस्तिकानाम्=स्वस्तिकचिह्नानाम्, अलयः=पंक्तयस्ताः। लिखत=अङ्कयत। एषः=अयम्। नैषधः नरपतिः—निषधायाः अयम् नैषधः=निषधदेशीयः, नरपतिः=भूपतिः नलः। प्राप्तः=समागतः। स्रग्धरा वृत्तम्॥ ७८॥

**हिन्दी**—कलशों के ऊपर से गिर रहे चन्दन जल की धाराओं से राजमार्ग छिड़क दिये जायें। स्तम्भों को, फहराती हुई पताकाओं तथा तोरणों को चारों ओर से पुष्पों से आवृत कर दिया जाय। प्रत्येक नगर तथा प्रत्येक घर के आंगन में सप्तधान्य पूर्ण जल से भरे हुए कलश स्थापित किये जायें। सिद्धार्थों (कामनापूर्ण करने वाले यन्त्रों) से स्वस्तिक चिह्नों की पंक्तियां लिख दी जावें। यह निषध देश के नरपति महाराज नल ने आगमन किया है॥ ७८॥

**अपि च—**

**सत्काञ्च्यश्चन्दनार्द्रस्तनकलशयुगामुक्तमुक्तावलीकाः**
**पात्राण्यादाय दूर्वादलदधिकुसुमोन्मिश्रसिद्धार्थभाञ्जि।**
**सोत्तंसा हंसपिच्छच्छविवसनभृतो वर्तिताश्चर्यचर्या**
**नार्यो निर्यान्तु तूर्यध्वनिलयललितं गीतमुच्चारयन्त्यः॥७९॥**

**अन्वयः**—सत्काञ्च्यः चन्दनार्द्रस्तनकलशयुगामुक्तमुक्तावलीकाः दूर्वादलदधिकुसुमोन्मिश्रसिद्धार्थभाञ्जि पात्राणि आदाय सोत्तंसाः हंसपिच्छच्छविवसनभृतः वर्तिताश्चर्यचर्याः नार्यः तूर्यध्वनिलयललितं गीतम्, उच्चारयन्त्यः निर्यान्तु॥ ७९॥

**सुधा—सदिति।** सत्काञ्च्यः—सत्=शोभनाः, काञ्च्यः=मेखलाः, यासां ताः। चन्दनार्द्रस्तनकलशयुगामुक्तमुक्तावलीकाः—चन्दनेन=मलयजेनार्द्रे=क्लिन्ने, स्तनकलशयुगे=कुचकुम्भयुग्मे, तयोर्मुक्ताः=त्यक्ताः, मुक्तावलीकाः=मौक्तिकमालाः, यासां ताः। दूर्वादलदधिकुसुमोन्मिश्रसिद्धार्थभाञ्जि—दूर्वादलेन दधिना कुसुमैश्च मिश्रम्, सिद्धार्थम्=सर्षपम् भजन्तीति तानि। पात्राणि=भाजनानि। आदाय=नीत्वा। सोत्तंसाः=साभूषणाः। हंसपिच्छच्छविवसनभृतः—हंसपिच्छस्य=हंसपक्षस्य, छविः=शोभा इव छविर्येषां तथा वसनानि=वासांसि बिभ्रतीति ताः। वर्तिताश्चर्यचर्याः—वर्तिताः=विद्यमानाः, आश्चर्यचर्याः=अद्भुतकार्यकलापाः यासु ताः। नार्यः=स्त्रियः। तूर्यध्वनिलयललितम्—तूर्यस्य=तूर्यनामवाद्यविशेषस्य, ध्वनिना=शब्देन,

लयेन=गत्या च, ललितम्=मनोरमम् । गीतम्=गानम् । उच्चारयन्त्य:=कथयन्त्य: । निर्यान्तु=निर्गच्छन्तु । स्रग्धरावृत्तम् ॥ ७९ ॥

हिन्दी—और भी—सुन्दर करधनी पहने, चन्दन रस से गीले किये गये स्तन-कलशयुग्म पर मोतियों की मालाएँ पहने दूर्वा-दधि-पुष्पों से युक्त श्वेत सरसों से मिश्रित पात्रों को लेकर आभूषणों से शोभित, हंसों के पंखों के सदृश शुभ्रवस्त्र धारण किये, अद्भुत कार्य करने वाली नारियाँ तुरुही वाद्य की ध्वनि तथा लय से ललित गीत उच्चारण करती हुईं निकलें ॥ ७९ ॥

**अपि च—**

**अपि भवत कृतार्थाः पौरनार्यश्चिरेण**
**व्रजतु निषधनाथश्चक्षुषां गोचरं वः ।**
**ध्रुवमयमवतीर्णः स्वर्गलोकादनङ्गो**
**हरचरणसरोजद्वन्द्वलब्धप्रसादः ॥ ८० ॥**

**इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरण-सरोजाङ्कायां षष्ठ उच्छ्वासः ॥ ६ ॥**

अन्वयः—पौरनार्यः अपि कृतार्थाः भवत । निषधनाथः वः चक्षुषां, गोचरं व्रजतु । ध्रुवम् अयं हरचरणसरोचद्वन्द्वलब्धप्रसादः, अनङ्गः स्वर्गात् अवतीर्णः ॥ ८० ॥

सुधा—अपीति । पौरनार्यः=पौराङ्गनाः अपि । कृतार्थाः=सफलमनोरथाः । भवत=स्त । निषधनाथः=निषधेश्वरो नलः । वः=युष्माकम् । चक्षुषाम्=नेत्राणाम् । गोचरं व्रजतु=गच्छतु । ध्रुवम्=नूनम् । अयम्=एषः । हरचरणसरोजद्वन्द्वलब्धप्रसादः—हरस्य चरणावेव सरोजद्वन्द्वम्=पादपद्मयुगलम्, तेन लब्धः=प्राप्तः, प्रसादो येन सः । अनङ्गः=मदनः । स्वर्गात्=देवलोकात् । अवतीर्णः । मालिनीवृत्तम् ॥८०॥

हिन्दी—और भी—पौराङ्गनाएँ सफलमनोरथ बनें, निषधराज नल तुम लोगों के समक्ष ( चिरकालतक ) बने रहें । यह निषधेश्वर के रूप में अवश्यमेव भगवान् शिव के चरणकमलयुगल से आशीर्वाद प्राप्त कर साक्षात् अनङ्ग ( कन्दर्प ) स्वर्ग से अवतरित हुये हैं ॥ ८० ॥

इति शाहजहाँपुरमण्डलान्तर्वर्तिनो नाहिलग्रामवास्तव्यस्याचार्यपरमेश्वरदीनपाण्डेयस्य नलचम्पूकाव्ये सुधा-संस्कृत-हिन्दी-टीकाद्वयोपेतः षष्ठ उच्छ्वासः ॥

---

# सप्तम उच्छ्वासः

**एवमविश्रान्तमतितारस्वरेण पुरः पौरपुरन्ध्रिमण्डलान्युद्दण्डयतो दण्डपाशिकस्य कलकलमाकर्णयत्यास्थानस्थिते राजनि, प्रविश्य प्रणामप्रेङ्खोलितगलकन्दलावलम्बितजाम्बूनदस्थूलश्रृङ्खलास्फालितवक्षःस्थलः स्थविरवयाः सवेषः प्रतीहारः सविनयमुक्तवान् ।**

**सुधा—एवमिति ।** एवम्=इत्थम् । अविश्रान्तम्=अविरलम् । अतितारस्वरेण =महदुच्चैःस्वरेण । पुरः=समक्षम् । पौरपुरन्ध्रिमण्डलानि=नागरिकवधूजनवृन्दानि । उद्दण्डयतः=गाढमुत्साहयतः । दण्डपाशिकस्य=वेत्रधारिणः । कलकलम् =कोलाहलम् । आकर्णयति=श्रुतवति । राजनि=नृपे नले । आस्थानस्थिते—आस्थाने=सभामण्डपे, स्थिते=अवस्थिते । प्रणामप्रेङ्खोलितगलकन्दलावलम्बितजाम्बूनदस्थूलश्रृङ्खलास्फालितवक्षःस्थलः—प्रणामाय=नमस्करणाय, प्रोङ्खोलिते=पुरःप्रवर्धिते, गलकन्दले=ग्रीवाङ्कुरेऽवलम्बिता=लम्बमाना, जम्बूनदस्य=स्वर्णस्य, स्थूला श्रृंखला=आभरण-विशेषः, तयाऽऽस्फालितम्=विस्तीर्णम्, वक्षःस्थलम्=उरःस्थलम् यस्य तथाभूतः । स्थविरवयाः—स्थविरम्=जठरम्, वयः=आयुर्यस्य सः । सवेषः—वेषेण, सहितः=अनुकूलवेषधारी । प्रतीहारः=द्वारपालः । प्रविश्य=प्रवेशं कृत्वा । सविनयम्=सनम्रम् । उक्तवान्=कथितवान् ।

**हिन्दी—**इस प्रकार अविरल अत्यन्त उच्चस्वर से नागरिक वधूजनों के समक्ष गाढ़ उत्साहित करते हुए दण्ड पाशिक के कोलाहल को सभामण्डप में स्थित राजा के सुने जाने पर प्रणाम के लिए आगे बढ़े हुये ग्रीवाङ्कुर से लटक रहे सोने के आभूषण-विशेष ( स्थूलश्रृङ्खला ) से विस्तारित वक्षःस्थल वाले अनुकूलवेषधारी प्रतिहार ने प्रवेश कर सविनय निवेदन किया।

**देव, धृतमाङ्गल्यकल्पवेषाः पुष्पफलाक्षतपूर्णस्वर्णपात्रपाणयः पुरःस्थिता अधीयाना ब्राह्मणाः कुण्डिनपुरपौराः पुरन्ध्रयश्च देवदर्शनार्थितया द्वारि सेवावसरमनुपालयन्ति ।**

**सुधा—देव इति ।** देव=राजन् । धृतमाङ्गल्यकल्पवेषाः—धृतो माङ्गल्ये कल्पो =दक्षो, वेषः=मण्डनं यैस्ते । पुष्पफलाक्षतपूर्णपात्रपाणयः—पुष्पैः फलैः अक्षतैश्च पूर्णानि=भृतानि, स्वर्णपात्राणि=जाम्बूनदभाजनानि, पाणिषु=करेषु येषां ते । पुरःस्थिताः=सम्मुखमवस्थिताः । अधीयानाः=माङ्गलिकमन्त्रं पठन्तः । ब्राह्मणाः=विप्राः । कुण्डिनपुरपौराः—कुण्डिनपुरस्य=तन्नामनगरस्य, पौराः=नागरिकाः । पुरन्ध्रयः=वधूजनाश्च । देवदर्शनार्थितया—देवस्य=स्वामिनः दर्शनार्थितया=अवलोकनकामनया । द्वारि=द्वारदेशे । सेवावसरम्=सेवायै अवसरम् । अनुपालयन्ति=प्रतीक्षन्ते ।

**हिन्दी—**महाराज ! मांगलिक वेषधारी, फलफूल तथा अक्षत से परिपूर्ण स्वर्ण-

पात्र हाथों में लिए, सामने अवस्थित मंगल पाठ कर रहे ब्राह्मण, कुण्डिनपुर के नागरिक तथा नगर-वधुएँ आपके दर्शन के लिए द्वार पर प्रतीक्षा कर रहे हैं।

**कथयन्ति चैवमदूरे विदर्भेश्वरोऽपि देवं द्रष्टुमायाति। लग्न इव श्रूयते च शङ्खस्वनविदर्भितो विदर्भोपकण्ठे पठद्वन्दिवृन्दकोलाहलः।**

**सुधा**—कथयन्तीति। एवम्=इत्थम्। कथयन्ति=वदन्ति। अदूरे=पार्श्वे एव। विदर्भेश्वरः अपि=विदर्भनृपतिर्भीमोऽपि। देवम्=प्रभुं भवन्तम्। द्रष्टुम्=अवलोकितुम्। आयाति=समागच्छति। विदर्भोपकण्ठे=विदर्भसमीपे। शङ्खस्वनविदर्भितः=शङ्खध्वनियुक्तः। पठद्वन्दिवृन्दकोलाहलः—पठतः=पाठं कुर्वतः वन्दिवृन्दस्य=वन्दिजनसमूहस्य, कोलाहलः=कलकलध्वनिः। लग्न इव=मिश्रित इव। श्रूयते=आकर्ण्यते।

**हिन्दी**—वे कह रहे हैं कि—समीप ही विदर्भ-नरेश आपको देखने के लिए आ रहे हैं। विदर्भ नगरी के समीप शंखध्वनि से युक्त पाठ कर रहे वन्दीजन वृन्द का कोलाहल लगा हुआ सा सुनाई पड़ रहा है।

**तदादिशतु देवो यथाकर्त्तव्यम्—इत्यभिधाय स्थिते तस्मिन् 'भद्रभूते, त्वरितं प्रवेशय विदर्भाधिपस्य परिजनं स्वयमपि तदर्धपथमनुसर' इति नलो दौवारिकमादिदेश।**

**सुधा**—तदिति। तत्=अतः। देवः=प्रभुः। यथाकर्तव्यम्=यथाकरणीयम्। आदिशतु=आज्ञापयतु। इति=एवम्। अभिधाय=कथयित्वा। तस्मिन् स्थिते=तदवस्थाने सति। भद्रभूते=अयि भद्रभूते! त्वरितम्=सत्वरम्। प्रवेशय=प्रवेशं कारय। विदर्भाधिपस्य=विदर्भनृपतेः। परिजनम्=अनुचरम्। स्वयम्=आत्मना अपि। तदर्धपथम्=तस्य अनुचरस्यार्द्धमार्गम्। अनुसर=अनुगच्छ। इति=एवम्। नलः=नृपः नलाभिधः। दौवारिकम्=द्वारपालम्। आदिदेश=आज्ञापयामास।

**हिन्दी**—अतः आप कर्तव्य-मार्ग का आदेश करें! यह कह कर उसके चुप हो जाने पर—"हे भद्रभूति! शीघ्र विदर्भराज के अनुचर को ले आओ तथा स्वयम् भी उसके आधे मार्ग का अनुसरण करो।" यह राजा नल ने दौवारिक (द्वारपाल) को आदेश दिया।

**सोऽपि-'यथाज्ञापयति देवः' इत्यभिधाय यथादिष्टमकरोत्।**

**अनन्तरमनतिचिरादितस्ततो दोधूयमानचारुचामरकलापपवननर्तितकर्णकुवलयः वल्गुवल्गनोल्ललनलङ्घनलास्यलीलापदैः पथि प्लवमानमिव तरलतुरङ्गमधिरुढः कनककलशशिखरैरेकदेशस्फुरितविद्युत्स्तबकैरकाण्डाडम्बरितमेघमण्डलैरिव मायूरातपत्रखण्डैराच्छादितगगनान्तरालः, शस्त्रोद्वहनकिणाङ्कितकठोरकण्ठोपकण्ठैः कठिनप्रकोष्ठलुठल्लोहवलयैरूर्ध्वबद्धोद्भटजूटकैरलककरालमौलिभिरर्धोरुकपरिधानैर्निशातकुन्तपाणिभिरभितस्त्वरितपातिभिः पत्तिभिरनुगम्यमानः, मनाङ्मृदुमृदङ्गध्वनिकरम्बिते**

**कोमलकांस्यतालशालिनि वांशिकवाद्यमानवंशनिस्वने दत्तकर्णः, कर्णिकार-गौराङ्गोऽङ्गणस्य नातिदूरेऽप्यदृश्यत भीमभूमिपालः।**

सुधा—सोऽपीति। सः=असौ अपि। देवः=स्वामी। यथाऽऽज्ञापयति=यदादिशति। इति=एवम्। अभिधाय=उक्त्वा। यथाऽऽदिष्टम्=यथानुमतम्। अकरोत्=चकार। अनन्तरम्=तत्पश्चात्। अनतिचिरात्=स्वल्पकालात्। इतस्ततः। दोधूयमानचारुचामरकलापपवननर्तित-कर्ण-कुवलयः—दोधूयमानेन=परिचाल्यमानेन, चारुणा=सुन्दरेण, चामरकलापस्य=चामरव्यजनमण्डलस्य, पवनेन=समीरणेन नर्तिते=दोधूयमाने, कर्णकुवलये=श्रोत्रपद्मे यस्य सः। वल्गुवल्गनोल्ललनलङ्घनलास्य-लीलापदैः—वल्गुवद् वल्गनम्=विक्रममाणता, तेनोल्ललनम्=उच्चैर्विलपनम्, तस्य लङ्घनम्=उल्लंघनं, तस्य लास्यम्=नृत्यभूमिः, तेषु लीलापदैः=क्रीडाचरणैः। पथि=वर्त्मनि। प्लवमानमिव=तरन्तमिव। तरलतुरङ्गमम्=चपलाश्वम्। अधिरूढः=आरूढः। कनककलशशिखरैः—कनककलशानाम्=स्वर्णघटानाम्, शिखरैः=अग्रभागैः। एकदेशस्फुरितविद्युत्स्तबकैः—एकदेशे=एकस्थले, स्फुरितैः=प्रस्फुरितैः, विद्युत्स्तबकैः=तडिद्गुच्छैः। अकाण्डाडम्बरितमेघमण्डलैः इव—अकाण्डे=अकाले, आडम्बरितैः=आच्छादितैः, मेघमण्डलैः=घनसमूहैः, यथा। मायूरातपखण्डैः=मयूराकृतिच्छत्रशकलैः। अत्र मायूरातपत्रसमूहानां मेघमण्डलानि सौवर्णकलशानां विद्युत्ततयः उपमानम्। आच्छादितगगनान्तरालम्—आच्छादितम्=आवृत्तम्, गगनान्तरालम्=आकाशमध्यभागो, यस्य तथाविधः। शस्त्रोद्वहनकिणाङ्कितकठोरकण्ठोपकण्ठैः—शस्त्राणाम्=आयुधानाम्, उद्वहनम्=धारणम्, तेन किणाङ्कितानि=चिह्नितानि, कठोराणि=कठिनानि, कण्ठोपकण्ठानि=स्कन्धस्थलानि येषां तैः। कठिन-प्रकोष्ठलुठल्लोहवलयैः—कठिनप्रकोष्ठेषु=कठोरमणिकर्पूरान्तरेषु, लुठन्ति=धारयन्ति, लोहबलयानि=अयःकङ्कणानि येषां तैः। ऊर्ध्वबद्धोद्भटजूटकैः—ऊर्ध्वम्=उपरि, बद्धाः=नद्धाः, उद्भटानाम्=वीराणाम्, जूटकाः=केशबन्धविशेषः येषां तैः। अलककरालमौलिभिः—अलकाः=कुटिलाः करालाः=सटालत्वात् रौद्राः, मौलयः=संयत-केशाः येषां तैः। अर्धोरुकपरिधानैः—अर्द्धे ऊरू प्रमाणमस्य तदर्धोरुकम्, अर्धोरुकाणि परिधानानि=वासांसि येषां तैः। निशातकुन्तपाणिभिः—निशाताः=तीक्ष्णाः, कुन्ताः=भल्लाः, पाणिषु=हस्तेषु, येषां तैः। अभितः=परितः। त्वरितपातिभिः=द्रुतगतिभिः। पत्तिभिः=सैनिकैः। अनुगम्यमानः=अनुसरणं कुर्वाणः। मनाङ्मृदुमृदङ्गध्वनिकरम्बिते—मनाक्=किञ्चित्, मृदुना=कोमलेन, मृदङ्गध्वनिना=मृदङ्गरवेण। करम्बिते=मिश्रिते। कोमलकांस्यतालशालिनि=मृदुकांस्यताल-युक्ते। वांशिक-वाद्यमानवंशनिःस्वने=वंशनिर्मितवेण्वादिवाद्यविशिष्टस्य वाद्यमानवंशनिःस्वने=वाद्यमानवंशध्वनौ। दत्तकर्णः—दत्ते=कृते, कर्णे=श्रोत्रे येन सः=संलग्नश्रोत्रः। कर्णिकारगौराङ्गः—कर्णिकारस्य=कर्णिकारपुष्पस्येव, गौरम्=गौरवर्णम्, अङ्गम्=शरीरम्, यस्य सः। भीमभूमिपालः=महाराजो भीमः अपि। अङ्गणस्य=अजिरस्य। नातिदूरे=पार्श्वे एव। अदृश्यत=दृग्गोचरो जातः।

हिन्दी—तदन्तर थोड़ी ही दूर आँगन में कर्णिकार (कनेर) पुष्प सदृश गौरवर्ण शरीर वाले महाराज भीम दिखलाई पड़े। इधर-उधर घुमाये ( चलाये ) जा रहे रुचिर चामर समूह से उत्पन्न हुई वायु द्वारा उनके कर्णकुवलय हिल रहे थे। अत्यन्त उमङ्गों तथा उछालों के कारण थिरकते हुए कदमों से मार्ग में तैरते हुए जैसे चंचल घोड़े पर वह सवार थे। स्वर्ण-कलशों के शिखर भाग जैसे चमकते हुये विद्युद् गुच्छों से युक्त असमय में घिरे हुये मेघमण्डलसदृश मयूर पंखों से बने छातों से आकाश का अन्तराल आच्छादित हो रहा था। शस्त्र धारण करने के कारण बने निशानों से कठोर स्कन्धों वाले, कठिन कलाईयों में लोहे के कड़े पहिने हुये तथा जटाजूट को ऊपर की ओर बाँधे, माथे पर कराल अलकें एवम् आधे ऊरु भाग तक परिधान धारण किये पैने भाले लिए चारों ओर से सैनिक उनका शीघ्रता से अनुसरण कर रहे थे। कुछ मृदुलमृदङ्गध्वनि मिश्रित, कोमल कांस्यताल से युक्त वंशीवादक द्वारा बजाई जा रही बाँसुरी की ध्वनि सुनने में कान लगाये हुये थे।

**ततश्च चामरग्राहिणीहस्तपल्लवमवलम्बमानः सहेलमुत्थाय प्रथममुत्थितेन सम्भ्रमवशवलिगतवक्षःस्थलावलम्बितकुसुमदाम्ना विसर्पिकर्पूरकुङ्कुममिलन्मृगमदामोदेन त्वरितसम्पातपतत्पटवासपांसुना सामन्तचक्रेण परिकरितः कतिपयपदानि निषधेश्वरस्तदभिमुखमगात्।**

सुधा—ततश्चेति। ततः=तदनन्तरम्। च। चामरग्राहिणीहस्तपल्लवम्—हस्तमेव पल्लवं हस्तपल्लवम्, चामरग्राहिण्याः हस्तपल्लवम् तत्=चामरधारिणीकरदलम्। अवलम्ब्यमानः=ग्राह्यमाणः। सहेलम्—हेलया=लीलया, सहितम्=सकौतुकम्। उत्थाय। प्रथमम्=पूर्वम्। उत्थितेन। सम्भ्रमवशवलिगतवक्षःस्थलावलम्बितकुसुमदाम्ना—सम्भ्रमवशात् वलिगते=कम्पिते, वक्षःस्थले=उरःस्थाने, अवलम्बितम्=प्रलम्बितम् यत्, कुसुमदाम=पुष्पमाला, तेन। विसर्पिकर्पूरकुङ्कुममलिनमृदमदमोदेन—विसर्पिणा=प्रवहता, कर्पूरेण कुङ्कुमेन च मलिनम्=मिश्रितम्, यन्मृगमदम्=कस्तूरिका, तस्यामोदः=सुगन्धिस्तेन। त्वरितसम्पातपतत्पटवासपांसुना—त्वरितम्=द्रुतम्, सम्पातेन=पतता, पटवासस्य=वासःसुरभिकरणद्रव्यस्य। पांसुना=रेणुना। सामन्तचक्रेण=राजसमूहेन। परिकरितः=परिवारितः। कतिपयपदानि। निषधेश्वरः=निषधनृपतिः। तदभिमुखम्=तत्समक्षम्। अगात्=अगच्छत्।

हिन्दी—तदनन्तर चामरग्राहिणी के पाणिपल्लव का सहारा लिये हुए साश्चर्य उठकर निषधराज, प्रथम उठे हुये सम्भ्रमवश काँपते हुये वक्षःस्थलों पर लटकती हुई पुष्पमालाओं वाले, जिनसे कर्पूर-कुङ्कुम तथा कस्तूरी की सुगन्ध फैल रही थी तथा शीघ्रता से चलने के कारण जिनसे पटवास ( सुगन्धिविशेषद्रव्य ) की धूल झड़ रही थी, ऐसे चारों ओर खड़े सामन्त वर्ग की ओर कुछ कदम चल दिये।

**सोऽपि सत्वरोपसृतस्य ताम्बूलप्रसेविकावाहिनः पुरुषस्य स्कन्धमवष्टभ्य दूरादेव तुरङ्गपृष्ठादवातरत्।**

सुधा—सोऽपीति। सः=असौ नृपः, अपि। सत्वरोपसृतस्य—सत्वरम्=शीघ्रम्,

उपसृतस्य=अग्रे आगतस्य । ताम्बूलप्रसेविकावाहिनः=ताम्बूलकरङ्कधारिणः । पुरुषस्य=जनस्य । स्कन्धम्=अंसस्थलम् । अवष्टभ्य=हस्ते धृत्वा । दूरात् एव= दूरस्थानात् एव । तुरङ्गपृष्ठात्=अश्वपृष्ठात् । अवातरत्=अवततार ।

हिन्दी—वह (राजा) भी शीघ्र आगे बढ़े हुये ताम्बूलपत्रवाहक के कन्धे पर हाथ रखकर दूर से ही घोड़े की पीठ पर से उतर पड़ा ।

**एवमन्योन्यनयनसम्पातस्मिताननौ समकालमीषन्नमितमौलिमण्डलौ समसमयप्रसारितभुजौ सरभसमाश्लेषवशविशीर्यमाणहारावलीगलन्मुक्ताफलच्छलेनाङ्गेष्वमान्तमिव प्रथमप्रेमामृतनिष्यन्दिबिन्दुविसरमुद्गिरन्तावन्योऽन्यमाशिश्लिषतुः ।**

**सुधा—एवमिति ।** एवम्=इत्थम् । अन्योऽन्यनयनसम्पातस्मिताननौ—अन्योऽन्ययोः =परस्परयोः, नयनसम्पातेन=नेत्रप्रक्षेपणेन, अवलोकनेन वा, स्मिते=विहसिते, आनने=मुखे च ययोस्तौ । समकालम्=युगपत् । ईषन्नमितमौलिमण्डलौ—ईषत्= किञ्चित्, नमिते=नम्रतां गते, मौलिमण्डले=शिरोमण्डले, ययोस्तौ । समसमयप्रसारितभुजौ—समसमये=समकाले, प्रसारिते=विस्तारिते, भुजे=बाहू, ययोस्तौ । सरभसम्=सहसा । आश्लेषवशविशीर्यमाणहारावलीगलन्मुक्ताफलच्छलेन—आश्लेषवशात्=आलिङ्गनवशात्, विशीर्यमाणा=नश्यमाणाः, याः हारावल्यः=मालापङ्क्तयः, तासां गलताम्=पतताम्, मुक्ताफलानाम्=मौक्तिकानाम्, छलेन=व्याजेन । अङ्गेषु =शरीरभागेषु । अमान्तम्=आविष्टम् इव । प्रथमप्रेमामृतनिस्यन्दबिन्दुविसरम्—प्रममप्रेमरूपस्य=प्रथमप्रेम्णः, अमृतस्य=सुधायाः, ये निस्यन्दबिन्दवः=स्खलद्बिन्दवः, तेषाम् विसरः=प्रवाहस्तम् । उद्गिरन्तौ=उद्वमन्तौ । अन्योऽन्यम्=परस्परम् । आशिश्लिषतुः=आलिलिङ्गतुः ।

हिन्दी—इस प्रकार एक दूसरे पर दृष्टि डालते हुये प्रसन्न मुख, एक साथ कुछ मस्तकमण्डल को नीचे झुकाये, एक साथ भुजाएँ फैलाये, सहसा आलिगन वश टूटी हुई हार की लड़ियों के गिरते हुये मोतियों के बहाने अंगों में न अँटते हुये मानों प्रगाढ़ प्रेमामृत के टपक रहे बिन्दुओं के प्रवाह को उड़ेलते हुए दोनों ने एक दूसरे को गाढ़ आलिंगन किया ।

**तथाविधे च व्यक्तिकरे, प्रपथे प्रेक्षकाणां दक्षिणोत्तरदिक्पालयोर्धर्मराजधनदयोरिव समागमे महान्नयनोत्सवो हर्षोत्कर्षकलकलश्च ।**

**सुधा—तथाविध इति ।** तथाविधे=तादृशे । व्यक्तिकरे=अवसरे । प्रपथे= मार्गे । प्रेक्षकाणाम्=दर्शकाणाम् । दक्षिणोत्तरदिक्पालयोः—दक्षिणस्य उत्तरदिशायाश्च दिक्पालयोः । धर्मराजधनदयोः=यमकुबेरयोः । इव=समम् । भीमनृपनलनृपयोश्च । समागमे=सम्मेलने । महान्=अत्यन्तम् । नयनोत्सवः=नेत्रोत्सवः । हर्षोत्कर्षकलकलः—हर्षोत्कर्षस्य=आनन्दातिरेकस्य, कलकलः=कलरवश्च । समजायतेति शेषः ।

**हिन्दी**—उसी समय दर्शकों के समक्ष दक्षिण तथा उत्तर दिशाओं के दिक्पाल यमराज यथा कुवेर के समान महाराज भीम तथा नृपति नल के समागम में महान् नयनोत्सव तथा आनन्दातिरेक का कोलाहल हो उठा।

**तदनु पुनः प्रधावितप्रतिहारोपनीतम्, अतिविचित्रत्रिभङ्गिभङ्गोत्कीर्णकर्णाटिकारूपरमणीयस्तम्भिकावष्टम्भम्, अज्जृम्भमाणमाणिक्यमकरमुखमुक्तमौक्तिकसरविराजितम्, अपूर्वकर्मनिर्मितभव्यव्यालावलीकीर्णमुखालङ्कृतम्, उच्चकाञ्चनसिंहासनद्वितयमुभौ भेजतुः।**

**सुधा—तदन्विति।** तदनु=तत्पश्चात्। पुनः=भूयः। प्रधावितप्रतीहारोपनीतम्—प्रधावितेन, प्रतीहारेण=दूतेन, उपनीतम्=आनीतम्। अतिविचित्रत्रिभङ्गिभङ्गोत्कीर्णकर्णाटिकारूपरमणीयस्तम्भिकावष्टम्भम्—अतिविचित्रेण=महदद्भुतेन, त्रिभङ्गिभङ्गेन=स्थानकविशेषवैचित्र्येण, उत्कीर्णाः=उल्लिखिताश्चित्रिता, वा, कर्णाटिकाः—कर्णाटकनार्यः यत्र तथा, रूपरमणीयम्=रूपलावण्ययुक्तम्, स्तम्भिकावष्टम्भम्=स्तम्भोच्चस्थलम् यस्य तम्। अज्जृम्भमाणमणिक्यमकरमुखमुक्तमौक्तिकसरविराजितम्—अज्जृम्भमाणेन माणिक्यमकरस्य=मणिनिर्मितग्राहस्य मुखेन=आननेन, मुक्तम्=निर्गतम्, मौक्तिकसरेण=मुक्ताहारेण, च विराजितम्=शोभितम्। अपूर्वकर्मनिर्मितभव्यव्यालावलीकीर्णमुखालङ्कृतम्—अपूर्वम्=अलौकिकम्, कर्मणा निर्मितम्=कलया रचितम्, भव्यम्=सुन्दरम्, व्यालावलीभिः=नागपंक्तिभिः, सिंहादिकहिंसकपशुपंक्तिभिर्वा, कीर्णम्=व्याप्तम्, मुखालङ्कृतम्=आननशोभितम्। उच्चकांचनसिंहासनद्वितयम्—उच्चम्=उन्नतम्, यत् काञ्चनसिंहासनद्वितयम्=स्वर्णसिंहासनयुगलम्। उभौ=विदर्भेश्वर-निषधनाथौ। भेजतुः=सिषिवाते।

**हिन्दी**—तदनन्तर पुनः दौड़ कर प्रतीहार द्वारा लाये गये उच्चस्वर्णनिर्मित दो सिंहासनों पर विदर्भराज तथा निषधनाथ विराजमान हो गये। इन दोनों सिंहासनों के ऊपरी स्तम्भों पर त्रिभंगीभंगिमा वाले कर्नाटक-रमणियों के मनोरमचित्र खुदे हुए थे। इन चित्रों में जम्भाई लेते हुए मानों मणियों के बने मकरों के मुखों में मुक्ताहार शोभित हो रहे थे। मुख विचित्र कलाकारिता से बनाई गई भव्यव्यालावली (सिंहादिहिंसक पशुओं की पंक्तियों) से अलङ्कृत थे।

**अन्योऽन्यकुशलप्रश्नसुखालापव्यतिकरविरामे च विदर्भेश्वरो निषधनाथमवादीत्।**

**सुधा—अन्योऽन्येति।** अन्योऽन्यकुशलप्रश्नसुखालापव्यतिकरविरामे—अन्योऽन्यम्=परस्परम्, कुशलप्रश्नरूपस्य=कुशलक्षेमपृच्छारूपस्य, सुखालापव्यतिकरस्य=आनन्दवार्ताव्यापारस्य। विरामे=समाप्तौ। विदर्भेश्वरः=विदर्भदेशाधिपः। निषधनाथम्=नृपं नलम्। अवादीत्=अकथयत्।

**हिन्दी**—परस्पर में कुशलप्रश्नविषयक आनन्दमय वार्तालाप के समाप्त हो जाने पर विदर्भराज राजा नल से कहने लगे।

**अद्यास्मत्कुलसन्ततिः सुकृतिनी धन्याद्य दिग्दक्षिणा**
**पुण्यप्राप्यसमागमातिथिजना जाताः कृतार्थाः श्रियः।**
**श्लाघ्यं जन्म च जीवितं च निजमप्यद्यैव मन्यामहे**
**यत्रास्मत्सुकृतोदयेन बहुना यूयं गृहानागताः ॥ १ ॥**

अन्वयः—अद्य अस्मत्कुलसन्ततिः सुकृतिनी, दिग्दक्षिणा धन्या, पुण्यप्राप्तसमागमातिथिजनाः श्रियः कृतार्थाः जाताः। अद्य एव निजम् अपि जन्म च जीवितम् च श्लाघ्यम् मन्यामहे यत्र बहुना अस्मत्सुकृतोदयेन यूयम् गृहान् आगताः ॥ १ ॥

**सुधा—अद्येति।** अद्य=अस्मिन् दिने। अस्मत्कुलसन्ततिः—अस्माकं कुलस्य=वंशस्य, सन्ततिः। सुकृतिनी=सफला। अद्य दिग्दक्षिणा—दिशा चासौ दक्षिणा=अवाचीदिशा। धन्या=सार्थका। पुण्यप्राप्यसमागमातिथिजनाः—पुण्यैः=सुकृतैः, प्राप्यः=लभ्यः, समागमः येषां तथोक्ताः अतिथिजनाः=अभ्यागताः, यासु ताः। श्रियः=लक्ष्म्याः। कृतार्थाः=सफलाः। जाताः=प्राप्ताः। अद्य एव=अस्मिन्नेव दिने। निजम्=स्वकीयम्। जन्म=उत्पत्तिः। जीवितम्=जीवनञ्च। श्लाघ्यम्=प्रशंसनीयम्। मन्यामहे=जानीमः। यत्र बहुना=अतिशयेन। अस्मत् सुकृतोदयेन=अस्माकं पुण्योदयेन। यूयम्=भवन्तः। गृहान्=वासस्थानम्। आगताः=समायाताः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

**हिन्दी**—आज हमारे वंश की सन्तान सफल हो गई है, आज दक्षिण दिशा ( हमारा राज्य-क्षेत्र ) धन्य है। पुण्यों से प्राप्त होने वाले अतिथिजनों के समागम से मिलने वाली राज्यलक्ष्मी भी आज कृतार्थ हो गई है। आज ही हम सब अपना जन्म तथा जीवन भी श्लाघ्य समझते हैं जो कि आप हमारे अतिशय पुण्योदय से हमारे घर पधारे हैं ॥ १ ॥

**इतः प्रभृति च—**

**आब्रह्मावधिविस्तरत्कविगिरो गीर्वाणकर्णातिथेः**
**कीर्तेः पूर्णकलेन्दुसुन्दररुचो यास्याम्यहं पात्रताम्।**
**किं चान्यज्जनितक्लमोऽप्ययमभूदाकण्ठतृप्तस्य मे**
**युष्मत्सङ्गसुखामृतेन सफलः संसारचक्रभ्रमः ॥ २ ॥**

अन्वयः—अहं आब्रह्मावधिविस्तरत्कविगिरः गीर्वाणकर्णातिथेः पूर्णकलेन्दुसुन्दररुचः कीर्तेः पात्रतां यास्यामि। किञ्च युष्मत्सङ्गसुखामृतेन आकण्ठतृप्तस्य मे अन्यज्जनितक्लमः संसारचक्रभ्रमः अपि सफलः अभूत् ॥ २ ॥

**सुधा—इत इति।** इतः प्रभृति च=अद्य दिनाच्च—

**आब्रहेति।** अहम्=विदर्भनृपतिः। आब्रह्मावधिविस्तरत्कविगिरः—आब्रह्मावधिः=ब्रह्मलोकपर्यन्तम्, विस्तरत्कविगिरः—विस्तरती=प्रसृतवती, या कविगीः=सूरिवाणी, तस्याः। गीर्वाणकर्णातिथिः—गीर्वाणानाम्=देवानाम्, कर्णेषु=श्रोत्रेषु, अतिथिस्तस्य। पूर्णकलेन्दुसुन्दररुचः—पूर्णकलायुक्तस्येन्दोः=विधोः, सुन्दररुचः=

मनोरमकान्तिसदृशस्य । कीर्तेः=यशसः । पात्रताम्=अर्हताम् । यास्यामि=गमिष्यामि । किञ्च । अयम्=एषः । आकण्ठतृप्तस्य=पूर्णरूपेण सन्तुष्टस्य । मे=मम, विदर्भनृपतेः । अन्यज्जनितक्लमः—अन्यैः—अपरैः, जनितः=जातः, क्लमः=क्लान्तिर्यत्र तथाविधः । संसारचक्रभ्रमः=विश्वचक्रभ्रान्तिः । अपि । युस्मत्सङ्गसुखामृतेन—युष्मत्=युष्माकम्, सङ्गस्य=साहचर्यस्य, यत्सुखरूपममृतम्, तेन=आनन्दामृतेन । सफलः=कृतार्थः । अभूत्=अभवत् । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

हिन्दी—आज से ब्रह्मलोकपर्यन्त फैलनेवाली कवि वाणी का विषय बनी देवताओं के कानों की अतिथि, पूर्ण कला वाले चन्द्रमा की कान्ति सदृश कीर्ति की पात्रता को मैं प्राप्त कर सकूँगा । अधिक क्या कहें, यह पूर्णरूपेण तृप्त, अन्य जनित परिश्रम वाला संसार-चक्र का भ्रम आप लोगों के समागमरूपी सुखामृत से सफल हो गया है ।

**इत्यभिधाय प्रवणं प्रणयस्य, प्रगुणं गुणवान्, अनुकूलं कुलक्रमस्य, योग्यं भाग्योदयस्य, सदृशं देशकालस्य, समानं मानोत्सवसन्ततेः, सरूपं रूपसम्पदाम्, उचितमाचारस्यातिथेरातिथेयमगर्वः कुर्वन्, दुर्वारवैरिवारणान्वारणान्, वायुवेगातुरगान्, समुल्लसितांशुमञ्जरीजालजनितेन्द्रचापचक्रभ्रममप्रमाणं माणिक्यम्, एकत्र ग्रथितताराप्रकरानुकारान्हारान्, उज्ज्वलभांसि वासांसि सलावण्याः पण्यनारीश्च स्वयमुपढौकयाञ्चकार ।**

सुधा—इत्यभिधायेति । इत्यभिधाय=एवं कथयित्वा । प्रणयस्य=प्रेम्णः । प्रवणम्=अनुकूलम् । प्रगुणम्=अनुगुणम् । कुलक्रमस्य=वंशपरम्परायाः । अनुकूलम्=अनुसारम् । भाग्योदयस्य—भाग्यस्य=विधेरुदयस्तस्य=सौभाग्यस्य । योग्यम्=उपयुक्तम् । देशकालस्य=स्थानस्य समयस्य च । सदृशम्=समानम् । मानोत्सवसन्ततेः—मानस्य=सम्मानस्योत्सवसन्ततेः=समारोहपरम्परायाश्च । समानम्=सदृशम् । रूपसम्पदाम्=सौन्दर्याणाम् । सरूपम्=समानरूपम् । आचारस्य=आचरणस्य । उचितम्=उपयुक्तम् । अतिथेः=अभ्यागतस्य । गुणवान्=गुणसम्पन्नः । अगर्वः=निरभिमानः सः । आतिथेयम्=आतिथ्यसत्कारम् । कुर्वन्=विदधन् । दुर्वारवैरिवारणान्—दुर्वारान्=दुर्दम्यान्, वैरिणः=शत्रून्, वारयन्ति=निषेधयन्ति, इति तथाविधान् । वारणान्=गजान् । वायुवेगतुरगान्=द्रुतगामिघोटकान् । समुल्लसितांशुमञ्जरीजालजनितेन्द्रचापचक्रभ्रमम्—समुल्लसितेन=शोभितेनांशुमञ्जरीजालेन=किरणमञ्जरीसमूहेन, जनितम्=उत्पन्नम्, यच्चापचक्रस्य=धनुर्मण्डलस्य, भ्रमः=भ्रान्तिस्तम् । अप्रमाणम्=अतुलनीयम् । माणिक्यम्=मणिरत्नम् । एकत्र=एकस्मिन् स्थाने । ग्रथिततारा-प्रकरानुकरान्—ग्रथितान्=स्यूतान्, ताराप्रकरान्=नक्षत्रगणान् अनुकुर्वन्तीति तादृशान् । हारान्=हाराभूषणानि । उज्ज्वलभांसि=उज्ज्वलकान्तिमन्ति । वासांसि=वस्त्राणि । सलावण्याः=सौन्दर्य-सम्पन्ना सुन्दरीः । पण्यनारीः=वाराङ्गणाश्च । स्वयम्=आत्मना । उपढौकयाञ्चकार=उपायनयामास ।

हिन्दी—यह कह कर प्रेम के अनुकूल, गुणानुसार कुलक्रम के अनुकूल भाग्योदय

के योग्य, देशकालसदृश, सम्मान तथा उत्सवपरम्परा के समान, रूपसम्पदा के अनुरूप, आचरण के उपयुक्त अतिथि का निरभिमान अतिथि सत्कार करते हुए, दुर्दम्य-शत्रुओं को रोक देने वाले हाथियों, वायु के समान वेगवान् घोड़े, शोभित किरण-मञ्जरीजाल से उत्पन्न इन्द्रधनुष की भ्रान्ति वाले, अतुलनीय, मणिमणिक्य, तथा एक स्थान पर ग्रथित नक्षत्र-समूह के अनुरूप हार और उज्ज्वल कान्ति वाले वस्त्र सुन्दरी वाराङ्गनाओं को स्वयम् उपहार में दिये ।

**प्रथमसमागमेऽप्यप्रमेयप्रेमारम्भरभसोल्लासितहृदयः पुनः सोत्कर्षहर्षोद्भेदगद्गदाक्षरमिदमवादीत्—**

**सुधा—प्रथमेति ।** प्रथमसमागमेऽपि=प्रथमसम्मेलनेऽपि । अप्रमेयप्रेमारम्भरभसोल्लासितहृदयः—अप्रमेयेन=अतुलनीयेन, प्रेमारम्भेण=आनन्दप्रकर्षेण, रभसा उल्लासितम्=उत्कण्ठितम्, हृदयम्=चेतो यस्य सः । पुनः=भूयः । सोत्कर्षहर्षोद्भेदगद्गदाक्षरम्—सोत्कर्षेण हर्षोद्भेदेन=आनन्दातिशयेन, गद्गदाक्षरम्=गद्गदगिरम् । इदम्=एतत् । अवादीत्=अवोचत् ।

**हिन्दी**—प्रथम समागम में भी अतुलनीय प्रेमोत्कर्ष से उल्लसितहृदय विदर्भराज पुनः अतिशय हर्षोद्गार से गद्गद वाणी से यह कहने लगे ।

**आसेतोः कपिकीर्तनाङ्कशिखरादाराच्च विन्ध्यावधे-**
**रापूर्वापरसिन्धुसीमविषयस्त्वन्मुद्रया मुद्र्यताम् ।**
**अद्यास्मद्गृहमागतस्य भवतो जाता विधेया वयं**
**स्वीकारः क्रियतां किमन्यदपरं प्राणेषु चार्थेषु च ।। ३ ।।**

**अन्वयः**—कपिकीर्तनाङ्कशिखरात् असेतोः विन्ध्यावधेः आरात् च आपूर्वापरसिन्धुसीमविषयः त्वन्मुद्रया मुद्र्यताम् । अद्य अस्मद् गृहम् आगतस्य भवतः वयं विधेयाः जाताः । अन्यत् किम् प्राणेषु अर्थेषु च अपरम् स्वीकारः क्रियताम् ।। ३ ।।

**सुधा—आसेतोरिति ।** कपिकीर्तनाङ्कशिखरात्—कपिकीर्तनाङ्कानि शिखराणि यस्य सः, तस्मात् सेतोः कपिभिः कृतत्वात् । आसेतोः—आ=समन्तात् सेतोः । विन्ध्यावधेः=विन्ध्याचलस्य । आरात्=समन्ताच्च । आपूर्वापरसिन्धुसीमविषयः—पूर्वतः, अपरम्=पश्चिमान्तम्, सिन्धुसीमविषयः=सागरपर्यन्तराज्यभागम् । तन्मुद्रया=तवानुशासनेन । मुद्र्यताम्=अनुशास्यताम् । अद्य=सम्प्रति । अस्मद् गृहम्=अस्माकं भवनम् । आगतस्य=आयातस्य । भवतः=श्रीमतः । वयम् । विधेयाः—विधातुं योग्याः=आज्ञाकारिणः । जाताः=सम्भूताः । अन्यत्=अपरम् किम् । प्राणेषु=जीवितेषु । अर्थेषु=वित्तेषु च । अपरम्=अन्यत् । स्वीकारः क्रियताम्=स्वीकृतिविधीयताम् । शार्दूलविक्रीडितं वृत्तम् ।। ३ ।।

**हिन्दी**—कपियों की कीर्ति को प्रकट करने वाले शिखरों से युक्त सेतु से लेकर विन्ध्याचल पर्यन्त चारों ओर, पूर्व से पश्चिम तक सागर पर्यन्त भूभाग आपके शासन से अनुशासित हो । आज हमारे घर आप आये हैं (अतः) हम सब आप के

आज्ञाकारी बन चुके हैं। अधिक क्या—हमारे प्राणों तथा अर्थ पर भी आप अपना स्वामित्व स्वीकार करें ॥ ३ ॥

**एवमुपबृंहयति प्रेम, प्रकाशयति प्रियंवदताम्, उद्योतयत्युदारताम्, दर्शयत्यादरम्, आविर्भावयति सर्वभावम्, भीमभूभुजि नलोऽपि 'सरलस्वभावः स्वच्छार्द्रहृदयोऽयं महानुभावः' इति चिन्तयन् 'अलमलमखिलात्मसर्वस्वोपनयनेन, भवद्दर्शनमेवास्माकमिह सार्णवसुवर्णपूर्णवसुमतीलाभादपि परमो लाभः। नहि प्रियतमदर्शनसुखाद्वित्तलाभसुखमतिरिच्यते। न च भवद्विभवेऽप्यस्माकं परस्वबुद्धिर्नापि भवच्छरीरेऽप्यनात्मभावः। किंचान्यदेवंविधसूक्तसूनृतामृतगर्भगीर्भिरानन्दयतास्मन्मनो महानुभावेन किं न कृतमभिहितं वा प्रणयोचितम्'' इति ब्रुवाणस्तं बहु मानयामास।**

**सुधा**—एवमिति। एवम्=इत्थम्। प्रेम=प्रीतिः। उपबृंहयति=वर्धयति। प्रियंवदताम्=मिष्टभाषिताम्। प्रकाशयति=प्रकटयति। उदारताम्=उच्चाशयताम्। उद्योतयति=प्रकाशयति सति। आदरम्=सम्मानम्। दर्शयति=प्रदर्शयति। सर्वभावम्=निखिलभावम्। आविर्भावयति=प्रकटयति सति। भीमभूभुजि=भीमनामनृपे। नलः=निषधराजः अपि। सरलस्वभावः=ऋजुप्रकृतिः। स्वच्छार्द्रहृदयः—स्वच्छम्=अच्छम्, आर्द्रम्=दयायुक्तम् च, हृदयम्=चेतो यस्य सः। अयम्=एषः। महानुभावः=महाशयः। इति=एवम्। चिन्तयन्=विचारयन्। अखिलात्मसर्वस्वोपनयनेन—अखिलम्=निखिलम्, आत्मसर्वस्वम्=निजस्वकम्, उपनयनेन=समर्पणेन। अलम् इति निषेधेऽव्ययः। भवद्दर्शनम्=श्रीमदवलोकनम् एव। अस्माकम्। इह=अत्र। सार्णवसुवर्णपूर्णवसुमतीलाभात्=समुद्रपर्यन्तस्वर्णयुक्तपृथ्वीलाभात् अपि। परमः=अधिकः। लाभः। प्रियतमदर्शनसुखात्—प्रियतमस्य दर्शनस्य यत् सुखम्, तस्मात्=अवलोकनानन्दात्। वित्तसुखम्=अर्थसुखम्। नहि अतिरिच्यते=नैवाधिकं भवति। भवद्विभवेऽपि—भवतः=श्रीमतः, विभवे=सम्पत्तौ अपि। अस्माकम्। परस्वबुद्धिः=अन्यधनबुद्धिः। न=नास्ति। भवच्छरीरेऽपि=श्रीमद्देहेऽपि। अनात्मभावः=परत्वभावः। न=नास्ति। किञ्च। अन्यदेवंविधसूक्तसूनृतामृतगर्भगीर्भिः—अन्यत्=अपरम्, एवंविधं सूक्तं सूनृतम् एवामृतम्=सुभाषितसत्यसुधा, गर्भे=अन्तरे, यासां ताभिः, गीर्भिः=वाणीभिः। अस्मन्मनः=मम चेतः। आनन्दयता=सानन्दं कुर्वता। महानुभावेन=महाशयेन। किं न कृतम्=किं न विहितम्। वा=अथवा। प्रणयोचितम्=प्रेमानुरूपम्। किञ्च अभिहितम्=किञ्च कथितम्। इति=एवम्। ब्रुवाणः=कथ्यमानः। तम्=विदर्भनृपतिम्। बहु=अत्यधिकम्। मानयामास=सम्मानं चकार।

**हिन्दी**—इस प्रकार प्रेम को बढ़ाते हुए, मधुरभाषिता को प्रकट करते हुए, उदारता को चमकाते हुए, आदर को प्रकट करते हुए, समस्त भावों को प्रदर्शित करते हुए, सम्मान दिखलाते हुए, भीम नृप को देखकर निषधराज नल ने भी—'यह सरल

स्वभाव व स्वच्छ-दयालु हृदय महानुभाव है' यह सोचते हुए—'अपना सर्वस्व समर्पण मत कीजिये, आपका दर्शनमात्र ही हमारे लिए समुद्र सहित सुवर्णयुक्त वसुमती-लाभ से भी बढ़कर है। प्रियतम के दर्शन-सुख से अर्थलाभ का सुख बढ़कर नहीं होता है। आपके वैभव में हमारी परधन-बुद्धि भी नहीं है। आपके शरीर में भी मेरा अनात्मभाव नहीं है। बल्कि अन्य इस प्रकार के सूक्त तथा सत्य मधुर अक्षरों से हमारे चित्त को आनन्दित करते हुए आपने प्रेम के योग्य क्या नहीं किया तथा क्या नहीं कहा।' इस प्रकार कहते हुए उनका अत्यधिक सम्मान किया।

**एवंविधे च व्यतिकरे वैतालिकः प्रस्तुतमपाठीत्—**

**आपूर्वापरदक्षिणोत्तरककुप्पर्यन्तबेलावना-**
**दाज्ञां मौलिषु मालिकामिव नृपाः कुर्वन्तुः दीर्घायुषोः।**
**ब्रह्मस्तम्बविलम्बिकीर्तितलयोर्विस्तारिलक्ष्मीकयो-**
**रन्योन्यस्य दिनानि यान्तु युवयोः स्नेहेन सौख्येन च ॥ ४ ॥**

**अन्वयः**—आपूर्वापरदक्षिणोत्तरककुप्पर्यन्तवेलावनात् नृपाः दीर्घायुषोः आज्ञां मौलिषु मलिकाम् इव कुर्वन्तु। ब्रह्मस्तम्बविलम्बिकीर्तितलयोः युवयोः दिनानि अन्योऽन्यस्य स्नेहेन सौख्येन च यान्तु ॥ ४ ॥

**सुधा**—एवमिति। एवंविधे=ईदृशे। व्यतिकरे=अवसरे। वैतालिकः=स्तुति-पाठकः। प्रस्तुतम्=उपस्थितं श्लोकम्। पपाठ=अपठत्।

**आपूर्वेति**। आपूर्वापरदक्षिणोत्तरककुप्पर्यन्तवेलावनात्—आ=समन्तात्, पूर्वम्=प्राक्, अपरम्=प्रत्यङ्, दक्षिणम् उत्तरञ्च, ककुप्पर्यन्तम्=दिशान्तम्, यद् वेलावनम्=तटान्तभूमिस्तस्मात्। नृपाः=राजानः। दीर्घायुषोः—दीर्घम् आयुर्ययोस्तयोः=चिरजीविनोः। आज्ञाम्=अनुज्ञाम्। मौलिषु=भालपट्टेषु। मालिकाम् इव=स्रगिव। कुर्वन्तु=धारयन्तु। ब्रह्मस्तम्बविलम्बिकीर्तितलयोः—ब्रह्मस्तम्बः=ब्रह्माण्डम्, तत्र विलम्बिकीर्तितम्=प्रख्यातम्, लयो ययोस्तयोः। विस्तारिलक्ष्मीकयोः—विस्तारिता=प्रसारिता, लक्ष्मीः=श्रीः याभ्यां तयोः। युवयोः=भवतोः। दिनानि=दिवसाः। अन्योन्यस्य=परस्परस्य। स्नेहेन=प्रेम्णा। सौख्येन=आनन्देन च। यान्तु=गच्छन्तु। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

**हिन्दी**—इस प्रकार के अवसर पर वैतालिक ने प्रस्तुत श्लोक पढ़ा—पूर्व से पश्चिम एवम् उत्तर से दक्षिण दिशाओं तक की तटान्त भूमि के भूपति चिरजीवी आप दोनों की आज्ञा को शिर पर माला के समान धारण करें। समस्त ब्रह्माण्ड में विस्तृत कीर्ति वाले तथा लक्ष्मी का प्रसार करने वाले आप दोनों के दिवस परस्पर में स्नेह तथा आनन्द से व्यतीत होवें ॥ ४ ॥

**एवमुपक्रमाविरुद्धविद्ग्धालापलीलया परस्परमाश्यानतुहिनशिलाशकलाकारकर्पूरपारीपरिकरिततांम्बूलार्पणप्रणयेन च परितुष्टपरिजनपरिहास-गोष्ठ्या च किमप्यभिनवम्, किमपि पुरातनम्, किमप्युत्पाद्यम्, किमपि यथावस्थितं जल्पाकजनजल्पितं भावयन्तौ तस्थतुः स्थवीयसीं वेलाम्।**

**सुधा—एवमिति।** एवम्=इत्थम्। उपक्रमाविरुद्धविद्वदालापलीलया—उपक्रमस्य=प्रसङ्गस्याविरुद्धम्=अनुकूलम्, विदुषाम्=पण्डितानाम्, आलापस्य=वार्तायाः, या लीला=क्रीडा, तया। परस्परम्=अन्योन्यम्। आश्यानतुहिनशिलाशकलाकारकर्पूरपारीपरिकरितताम्बूलार्पणप्रणयेन—आश्यानम्=अविलीनम्, यत्तुहिनम्=हिमम्, तस्य यत् शिलाशकलम्=शिलाखण्डम्, तदाकारस्य कर्पूरस्य पारी=शकलम्, तया परिकरितस्य ताम्बूलस्यार्पणप्रणयेन=प्रदानप्रेम्णा च। परितुष्टपरिजनपरिहासगोष्ठ्या—परितुष्टानाम्=प्रसन्नानाम्, परिजनानाम्=सेवकानाम्, या परिहासगोष्ठी=परिहास-परिषत्, तया च। किमपि=किञ्चिदपि। अभिनवम्=नूतनम्। किमपि पुरातनम्=प्राचीनम्। उत्पाद्यम्=कल्पितम्। यथावस्थितम्=यथास्थितम्, जल्पाकजनजल्पितम्=बावदूककथितम्। भावयन्तौ=अनुभवन्तौ। स्थवीयसीम्—स्थूला स्थवीयसी, ताम्। वेलाम्=कालम्। तस्थतुः=अतिष्ठताम्।

**हिन्दी**—इस प्रकार प्रसङ्गानुसार विद्वानों की बातचीत के आनन्द से परस्पर अविगलित शिलाखण्डसदृश कर्पूरखण्डमिश्रित ताम्बूल समर्पण के प्रणय द्वारा प्रसन्न परिजनों की परिहास-गोष्ठी द्वारा तथा कुछ नूतन कुछ पुरातन तथा कुछ कल्पित एवम् कुछ यथास्थित वावदूक ( वकवादी ) व्यक्तियों के वार्तालाप का आनन्द लेते हुए दोनों बहुत देर तक बैठे रहे।

**अनन्तरमनुसरति मध्यभागमम्बरस्यांशुमालिनि नलः 'स्वगृहानलंकुर्वन्तु भवन्तः' इति प्रश्रयेण विदर्भेश्वरं विससर्ज।**

**सुधा—अनन्तरमिति।** अनन्तरम्=पश्चात्। अम्बरस्य=गगनस्य। मध्यभागम्=अन्तरालम्। अंशुमालिनि=सवितरि। अनुसरति=अनुगच्छति। नलः=निषधराजः। भवन्तः=श्रीमन्तः। स्वगृहान्=निजनिवासस्थानानि। अलङ्कुर्वन्तु=शोभयन्ताम्। इति=एवम्। प्रश्रयेण=नम्रतया। विदर्भेश्वरम्=नृपं भीमम्। विससर्ज=विसर्जयामास।

**हिन्दी**—तदनन्तर अंशुमाली भगवान् सूर्य के मध्याकाश को चले जाने पर नल ने यह कह कर कि—'अब आप लोग अपने अपने निवास स्थानों को शोभित करें।' नम्रता के साथ विदर्भेश्वर को विदा किया।

**गते च तस्मिन् 'अहो वात्सल्यम्, अहो परमौदार्यम्, अहो लोकवृत्तकौशलम्, अहो वाग्विभववैदग्ध्यम्, अहो प्रश्रयोऽस्य विदर्भराजस्य' इति तद्गुणप्रवणाः कथाः कुर्वन्नाप्तजनपरिजनेन सह मुहूर्तमिवासाञ्चक्रे।**

**सुधा—गते चेति।** तस्मिन्=नृपे विदर्भेश्वरे। गते=प्रस्थिते। अहो वात्सल्यम्=धन्या वत्सलता। परमौदार्यम्—परमम्=अत्यन्तम्, औदार्यम्=उदारता। लोकवृत्तकौशलम्=जनवृत्तान्तदाक्षिण्यम्। वाग्विभववैदग्ध्यम्—वाचः=वाण्याः, विभवः=ऐश्वर्यम्, तस्य वैदग्ध्यम्=चातुर्यम्। अस्य=एतस्य, विदर्भराजस्य=विदर्भनृपतेः। प्रश्रयः=नम्रत्वम्। इति=इत्थम्। तद्गुणप्रवणाः—तस्य=विदर्भनृपस्य, गुणप्रवणाः=गुणाढ्याः, कथाः=वार्ताः। कुर्वन्=विदधन्। आप्तजनपरिजनेन सह—आप्तजनेन=

प्रामाणिकेन, परिजनेन=अनुचरेण, सह=साकम्। मुहूर्त्तम्=क्षणम्। इव आसांचक्रे =यापयामास।

हिन्दी—विदर्भराज के चले जाने पर—'विदर्भराज की वत्सलता धन्य है। उनकी परम उदारता भी धन्य है। लोकवृत्त में कुशलता कैसी है! वाणी के वैभव की प्रगाढता ( गहन ज्ञान ) भी धन्य है। उनकी नम्रता कैसी विचित्र है।' इस प्रकार उनके गुणों से युक्त वार्तालाप करते हुए अपने प्रामाणिक परिजन के साथ वह थोड़ी देर वहाँ बैठा रहा।

**चिन्तितवांश्च—**

**अनुगुणघटनेन यद्यपीयं भवति हि हस्तगतेव कार्यसिद्धिः।**
**भयतरलभुजङ्गवक्रवृत्तेस्तदपि न विश्वसिमो वयं विधातुः ॥ ५ ॥**

अन्वयः—यद्यपि इयम् कार्यसिद्धिः हस्तगता इव अनुगुणघटनेन भवति हि। तदपि वयं विधातुः भयतरलभुजङ्गचक्रवृत्तेः न विश्वसिमः ॥ ५ ॥

सुधा—चन्तितवानिति। च=तथा। चिन्तितवान्=विचारयामास—

अनुगुणेति। यद्यपि, इयम्=एषा। कार्यसिद्धिः=कृत्यसाफल्यम्। हस्तगता इव=सरलतयोपलब्धा यथा। अनुगुणघटनेन—अनुगुणानाम्=अनुकूलगुणानां, घटनेन =संयोजनेन। भवति=जायते हि। तथापि वयम् विधातुः=ब्रह्मणः भाग्यस्य वा भयतरलभुजङ्गवक्रवृत्तेः—भयेन=भिया, तरलः=लोलः, भुजङ्गः=महासर्पः, तस्य या वक्रवृत्तिः=कुटिलता तस्याः, न विश्वसिमः=विश्वासं नैव कुर्मः। तरलत्वं चात्र वक्रतातिशयहेतुः ॥ ५ ॥

हिन्दी—वह सोचने लगा—यद्यपि कार्यसिद्धि हाथ में आई हुई जैसी अनुकूल गुणों के संयोग से होती है। तथापि हम भय से काँप रहे सर्प की भाँति भाग्य की टेढ़ी-मेढ़ी चाल ( व्यवहार ) में विश्वास नहीं करते हैं ॥ ५ ॥

**तथाहि—**

**अङ्गाः कङ्ककलिङ्गवङ्गमगधाः सर्वेऽप्यमी पार्थिवा**
**दिक्पालाश्च मरुत्पतिप्रभृतयः कन्यार्थिनः सङ्गताः।**
**नो विद्मः कथमेष्यतीह घटनां कार्यं यतस्तत्क्षणा-**
**ज्ज्ञानाभङ्गिभिरिन्द्रजालसदृशं दैवं हि चित्रीयते ॥ ६ ॥**

अन्वयः—अङ्गाः कङ्ककलिङ्गवङ्गमगधाः अमी सर्वे अपि पार्थिवाः मरुत्पति-प्रभृतयः दिक्पालाः च कन्यार्थिनः सङ्गताः। नो विद्मः इह कार्यं घटनां कथम् एष्यति। ...

सुधा—अङ्गा इति। अङ्गाः=अङ्गदेशीयाः। कङ्ककलिङ्गवङ्गमगधाः—तत्तद् देशीयाश्च। अमी=एते। सर्वे=निखिला अपि। पार्थिवाः=राजानः। मरुत्पतिप्रभृतयः =पवनादयः। दिक्पालाः=दिगीशाश्च। कन्यार्थिनः=दमयन्त्यभिलाषिणः। सङ्गताः =एकत्रिताः सन्ति। नो विद्मः=नैव जानीमः। इह=विषयेऽस्मिन्। कार्यम्=कृत्यम्। घटनाम्=सम्पन्नताम्। कथम्=केन प्रकारेण। एष्यति=गमिष्यति। यतो हि=

यस्माद् हि । दैवम्=भाग्यम् । नानाभङ्गिभिः=विविधवक्रताभिः । इन्द्रजालसदृशम् =ऐन्द्रजालिकसमम् । चित्रीयते=विचित्रतां प्रदर्शयति । शार्दूलविक्रीडितं वृत्तम् ।

हिन्दी—क्योंकि—अङ्ग, कङ्क, कलिङ्ग तथा मगध देशों के यह समस्त भूपति तथा पवन आदि दिक्पाल उस कन्या ( दमयन्ती ) को ही प्राप्त करने के लिए एकत्र हुए हैं । ऐसी दशा में हमारी समझ में नहीं आ रहा है कि कार्य किस प्रकार सफल हो पायेगा, क्योंकि भाग्य विभिन्न-प्रकार की भङ्गिमाओं से तत्काल ही जादूगर की भाँति आश्चर्यजनक कार्य कर दिखलाता है ॥ ६ ॥

**अथवा—**

**का नाम तत्र चिन्ता प्रभवति पुरुषस्य पौरुषं यत्र ।**
**वाङ्मनसयोरविषये विधौ च चिन्तान्तरं किमिह ॥ ७ ॥**

**अन्वयः**—यत्र पुरुषस्य पौरुषं तत्र का नाम चिन्ता प्रभवति । वाङ्मनसयोः अविषये इह विधौ च चिन्तान्तरं किम् ॥ ७ ॥

**सुधा—का नामेति ।** यत्र=यस्मिन् कार्ये । पुरुषस्य=मनुष्यस्य । पौरुषम्= पुरुषार्थम् भवति । तत्र=तस्मिन् विषये । का नाम चिन्ता=चिन्तैव नास्ति । वाङ्मनसयोः—वाचः=वाण्याः, मनसः=चित्तस्य, च अविषये=अगम्ये । इह= अत्र । विधौ=भाग्ये । च । चिन्तान्तरम्=अपरा चिन्ता । किम्=किमर्थं कार्या । आर्यावृत्तम् ॥ ७ ॥

हिन्दी—अथवा—जहाँ व्यक्ति का पौरुष होता है वहाँ चिन्ता करने की आवश्यकता नहीं रहती है । वाणी तथा मन से अगम्य इस भाग्य पर तो चिन्ता करनी ही नहीं चाहिए ॥ ७ ॥

**एवमनेकवितर्कभङ्गभाजि भूभुजि, भुजबलशालिषु विसर्जितेषु सेवकसामन्तेषु, विरलीकृते परितः परिजने, परिहासपेशलालापाप्तजनगोष्ठीप्रक्रमेणातिक्रान्ते स्तोकसमये, भूरिभव्याभरणावरणरमणीयरूपाः, काश्चिदार्द्रक्रमुकफलहस्ताः, काश्चित्कक्षावलम्बितताम्बूलीपत्त्रपिण्डकरण्डकाः, काश्चित्पिहितपट्टांशुकपटलिकापाणयः, काश्चित्काश्मीरकरम्बितकस्तूरिकामोदामन्दचन्दनभाञ्जि भाजनानि भजमानाः, काश्चिदवाननालिकेरजम्बीरबीजपूरकपूरितपात्रीपाणयः काश्चिदसंख्यखण्डखाद्यविशेषानमूल्यमाङ्गल्यमाल्याभरणानि च सकौतुकमादाय दमयन्त्या प्रहिताः प्रथमप्रबोधितप्रतीहारसूचिताः प्रविविशुरन्युब्जाः कुब्जिका वामनिकाश्च ।**

सुधा—एवमिति । एवम्=इत्थम् । अनेकवितर्कभङ्गभाजि—अनेकानि=बहूनि, वितर्कभङ्गानि भजतीति तस्मिन्=बहुविधचिन्तायुक्ते । भूभुजि=राजनि जाते । भुजबलशालिषु=बाहुबलयुक्तेषु । सेवकसामन्तेषु=अनुचरसामन्तवीरेषु । विसर्जितेषु =परित्यक्तेषु । परितः=सर्वतः । परिजने=सेवकवर्गे । विरलीकृते=विरलतया दृग्गोचरे जाते । परिहासपेशलालापजनगोष्ठीप्रक्रमेण—परिहासेन=हासविलासेन, पेशला-

लापेन = मृदुवार्तालापेन, आप्तजनगोष्ठ्या: = वरिष्ठजनसभायाश्च प्रक्रमस्तेन। स्तोकसमये = किञ्चित्काले। अतिक्रान्ते = व्यपनीते सति। भूरिभव्याभरणावरणरमणीयरूपा:—भूरि = बहुभि: भव्याभरणै: = विशिष्टाभूषणै:, आवरणै: = आच्छादनवस्त्रै:। रमणीयानि = मनोरमाणि, रूपाणि = अकृतय: यासां ता:। काश्चिदार्द्रक्रमुकफलहस्ता:—काश्चित् = कतिपया:, आर्द्राणि = क्लिन्नानि, क्रमुकफलानि हस्तेषु यासां ता:। कक्षावलम्बितताम्बूलीपत्रपिण्डकरण्डका:—कक्षेषु अवलम्बिता: = आधृतास्ताम्बूलीपत्राणाम् = ताम्बूलयुक्तभाजनाम्, पिण्डकरण्डका: = पोटलिका: यासु ता:। पिहितपट्टांशुकपट्टलिकापाणय:—पिहिता: = आवृता:, पट्टांशुकानाम् = कौशेयवस्त्राणाम्, पोटलिका: पाणिषु = हस्तेषु यासां ता:। कश्मीरकरम्बितकस्तूरिकामोदामन्दचन्दनभाञ्जि—काश्मीरकरम्बिताया: = काश्मीरदेशजाताया:, कस्तूरिकाया: आमोदस्य = सुगन्धस्यामन्दानि = उग्राणि, चन्दनभाञ्जि = चन्दनशोभितानि, भाजनानि = पात्राणि। भजमाना: = सेवमाना:। अवाननारिकेरजम्बीरबीजपूरकपूरितपात्रीपाणय:—अवानानि = सार्द्राणि, नारिकेरजम्बीरबीजपूरितानि तै: पूरिता: या पात्री सा पाणिषु यासां ता:। वाचम् शुष्कं फलम्। असंख्यखण्डखाद्यविशेषानमूल्यमाङ्गल्यमाल्याभरणानि—असंख्यानि = वहूनि, खण्डखाद्यविशेषानि = शर्करामिश्रितखाद्य-विशिष्टानि, अमूल्यानि = बहुमूल्यानि, माङ्गल्यमालानि = माङ्गलिकहाराणि, आभरणानि = भूषणानि च तानि। सकौतुकम् = साश्चर्यम्। आदाय = आनीय। दमयन्त्या = विदर्भराजपुत्र्या। प्रहिता: = प्रेषिता:। प्रथमप्रबोधितप्रतीहारसूचिता:—प्रथम: = अद्वितीय:, प्रबोधित: = जागरित:, य:, प्रतीहार: = द्वारपाल:, तेन सूचिता: = सन्दिष्टा:। अन्युब्जा:—न्युब्जा: = अधोमुख्य:, न न्युब्जा: अन्युब्जा: = अनधोमुख्य:। दिदृक्षारसेनोर्ध्ववदना:। कुब्जिका: = कुब्जशरीरा:। वामनिका: = लघुवदनाश्च। प्रविविशु: = अप्रविशन्।

**हिन्दी**—इस प्रकार राजा अनेक भाँति तर्कवितर्क में लीन हो गया। बाहुबलशाली सेवक सामन्तों के विसर्जित कर देने पर राजा चारों ओर से परिजनों से रहित हो गया। हास-परिहास पूर्णवार्तालाप से उसने कुछ समय वरिष्ठ लोगों की गोष्ठी करके व्यतीत किया। (इतने में) अतिसुन्दर वस्त्राभरणों से युक्त मनोरम सौन्दर्यवाली कोई हाथों में ताजे क्रमुकफल लिए हुए, कोई बगल में तम्बाकू की भरी पोटली वाले डिब्बे को लटकाए, कोई हाथों में पट्टांशुक (रेशमी वस्त्र) की बन्दपोटली लिए, कोई काश्मीरी कस्तूरी मिश्रितचन्दनपूर्ण पात्रों से सुशोभित, कोई ताजे नारियल तथा नारङ्गी की फाँकों से भरी थालियाँ हाथों में लिये, कोई असंख्य मधुर खाद्य पदार्थों और बहुमूल्य मांगलिक मालाओं व आभूषणों को कौतुक के सहित लेकर दमयन्ती द्वारा भेजी गई सर्वप्रथम प्रहरी द्वारा मुँह ऊपर उठाये कुबड़ी तथा बौनी दूतियाँ ले जाई गईं।

**प्रविश्य च सविस्मया: स्मररूपातिशायिनं नरपतिमवलोक्य 'साधु भो: स्वामिनि, साधु। स्थानेऽभिनिर्विष्टासि, योग्ये जाताप्रहासि, पात्रे जातस्पृहासि, लप्स्यसे जन्मफलम्, अवाप्स्यसि स्त्रीस्वभावभाग्यम्, अनुभविष्यसि**

**यौवनसुखानि, मानयिष्यसि संसारफलमहोत्सवम्। अहो वन्दनीया सा कापि पुरुषरत्नाकरकुक्षिर्जननी, यस्यां सकलसंसारनरहारावलीमध्यमहानायकोऽयमुत्पन्नः' इत्यवधारयन्त्यो मनाङ्नामितमौलिदोलितसीमन्तमुक्ताफलाः 'स्वामिन्नयमस्मदीयः प्रणामः, अन्यापि क्वापि काचित्प्रणमति' इत्यभिधाय स्मयमानवदनकमलाः सलीलमवनिपालं प्रणेमुः।**

सुधा—प्रविश्येति। प्रविश्य=प्रवेशं कृत्वा। सविस्मयाः=साश्चर्याः। स्मररूपातिशायिनम्=कामरूपातिसुन्दरम्। नरपतिम्=भूपतिम्। अवलोक्य=दृष्ट्वा। साधु भो स्वामिनि=धन्याऽस्ति भर्तृदारिका। स्थाने=समुचिते स्थाने। अभिनिविष्टा =प्रवृत्ता असि। योग्ये=समर्हे। जाताग्रहा—जातः=उत्पन्नः, आग्रहो यस्यै सा= कृताग्रहा असि। पाके=उचिते। जातस्पृहा—जाता=समुत्पन्ना, स्पृहा=कामना, यस्याः सा। असि। जन्मफलम्=जीवनफलम्। अवाप्स्यसि=प्राप्स्यसि। यौवनसुखानि =तारुण्यानन्दानि। अनुभविष्यसि=अनुभूतिं करिष्यसि। संसारफलमहोत्सवः=लोके जन्मधारणोत्सवम्। मानयिष्यसि=करिष्यसि। अहो=आश्चर्यम्। सा=असौ। कापि=काचित्। पुरुषरत्नाकरकुक्षिर्जननी—पुरुषेषु रत्नम् पुरुषरत्नम्। पुरुषरत्नानाम्, आकरः=निधिः सैव कुक्षिजननी=उदराजननी। वन्दनीया=पूजनीयाऽस्ति। यस्यां=यस्यां जनन्याम्। सकलसंसारनरहारावलीमध्यमहानायकः—सकलसंसारस्य= सम्पूर्णविश्वस्य, नराः=पुरुषाः एव हाराः, तेषाम्, आवलिः=पंक्तिस्तस्याः, मध्ये= अन्तरे, महानायकः=महानेता। अयम्=एषः। उत्पन्नः=सञ्जातः। इति=एवम्। अवधारयन्त्यः=निश्चयन्त्यः। मनाङ्नामितमौलिदोलितसीमन्तमुक्ताफलाः—मनाक्= किञ्चित्, नामिताः=नम्रीकृताः, ये मौलयः=मस्तकानि, तैर्दोलितानि=कम्पितानि, सीमन्तमुक्ताफलानि=सीमन्तमौक्तिकानि यासां ताः। स्वामिन्=राजन्! अयम्= एषः। अस्मदीयः=अस्माकम्। प्रणामः=नमस्कारः। अन्यापि=अपरापि। क्वापि =कुत्रापि। काचित्=कापि। प्रणमति=नमस्करोति। इत्यभिधाय=इत्युक्त्वा। स्मयमानवदनकमलाः—वदनमेव कमलं वदनकमलम्, स्मयमानानि=विहसितानि, वदनकमलानि=पद्माननानि यासां ताः। सलीलम्=सकौतुम्। अवनिपालम्= भूपालम्। प्रणेमुः=नमश्चक्रुः।

**हिन्दी—प्रवेश कर सविस्मय कामदेव से भी बढ़ कर सुन्दर नरपति को देख कर—धन्य हो स्वामिनि! धन्य हो। उचित स्थान पर प्रवृत्त हुई हो। योग्य वस्तु के लिए आग्रह किया है, उचित पात्र को पाने की इच्छा की है। जन्म का फल प्राप्त करोगी। स्त्री स्वभाव का भाग्य मिलेगा। यौवन-सुख का अनुभव करोगी। संसार-फल के महान् उत्सव को मनाओगी। अहा—वह कोई पुरुषरत्न की निधिरूप उदर वाली वन्दनीया माता है जिसमें समस्त संसार के पुरुषरूप हारावली के मध्य यह महानायक उत्पन्न हुआ है। यह सोचती हुई थोड़ा-सा शिर झुकाये, मौलि में हिल रहे मोतियों वाली—'स्वामिन्! यह हमारा प्रणाम है और भी कोई कहीं प्रणाम कर**

रही है।' यह कहकर कमल-सदृश मुखवाली सुन्दरियों ने मुस्कराते हुए सकौतुक अवनिपाल को प्रणाम किया।

**अन्योऽन्यकृतसम्बोधनाश्च सहर्षमिदमवोचन्।**

सुधा—अन्योन्यमिति। अन्योन्यकृतसम्बोधनाः—अन्योन्यम् = परस्परम्, कृतम् = विहितम्, सम्बोधनं याभिस्ताः। सहर्षम् = सप्रसन्नम्। इदम् = एतत्। अवोचन् = अकथयन्।

हिन्दी—परस्पर में एक दूसरे को सम्बोधित करती हुई सहर्ष यह कहने लगीं।

**हंहो हंसि चकोरि चन्द्रवदने चन्द्रप्रभे चन्दने**
**चम्पे चङ्गि लवङ्गि गौरि कलिके कक्कोलिके मालति।**
**एत प्राप्नुत जन्मजीवितफलं लावण्यलक्ष्मीनिधौ**
**सौभाग्यामृतनिर्जरे नरपतौ निर्वान्तु नेत्राणि वः॥ ८॥**

अन्वयः—हंहो हंसि, चकोरि, चन्द्रवदने, चन्द्रप्रभे, चन्दने, चम्पे, चङ्गि, लवङ्गि, गौरि, कलिके, कक्कोलिके, मालति! एत जन्मजीवितफलं प्राप्नुत। लावण्यलक्ष्मीनिधौ सौभाग्यामृतनिर्जरे नरपतौ वः नेत्राणि निर्वान्तु॥ ८॥

सुधा—हंहो इति। हंहो = सम्बोधनेऽव्ययः। हंसि, चकोरि = चक्रवाकि, चन्द्रवदने—चन्द्र इव वदनम् = मुखं यस्याः सा, तत्सम्बोधने = अयि विधुवदने! चन्द्रप्रभे—चन्द्रस्य = विधोः, प्रभा = कान्तिरिव कान्तिर्यस्याः सा, तत्सम्बुद्धौ। चन्दने, चम्पे, चङ्गि, लवङ्गि, गौरि, कलिके, कक्कोलिके, मालति! एत = सर्वे आगच्छत। जन्मजीवितफलम्—जन्मनः, जीवितस्य = जीवनस्य च, फलम् = लाभम्। प्राप्नुत = आप्नुवन्तु। लावण्यलक्ष्मीनिधौ—लावण्यस्य = सौन्दर्यस्य, लक्ष्म्याः = सौभाग्यस्य, च निधिः = आकरः, तस्मिन्। सौभाग्यामृतनिर्जरे—सौभाग्यरूपाय, अमृताय = सुधारसाय, निर्जरः = देवो यथा तथाविधे। नरपतौ = राजनि नले। वः = युष्माकम्। नेत्राणि = चक्षूंषि। निर्वान्तु = शान्ति गच्छन्तु। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

हिन्दी—ओ हंसी, चकोरी, चन्द्रवदना, चन्द्रप्रभा, चन्दना, चम्पा, चङ्गी, लवङ्गी, गौरी, कलिका, कक्कोलिका, मालती! सभी आओ, जन्म तथा जीवन का फल प्राप्त करो, सौन्दर्य एवं सौभाग्य के आकर, सौभाग्यरूपी अमृत के लिए सुर-सदृश राजा नल में आप सब अपने नयनों की प्यास बुझायें॥ ८॥

**अपि च—**

**कुन्दे सुन्दरि चन्द्रि नन्दनि हले दिष्टयाद्य वर्धामहे**
**देव्याः सोऽयमनङ्गसुन्दरवपुः प्राणेश्वरः प्राप्तवान्।**
**तस्याः सम्प्रति यत्कृते कृशतनोः क्रीडावने शाखिनां**
**दीर्घश्वासमरुद्भिरग्निपरुषैर्म्लायन्ति ते पल्लवाः॥ ९॥**

अन्वयः—कुन्दे, सुन्दरि, चन्द्रि, नन्दनि, हले! दिष्टया अद्य वर्धामहे। सः अयम्

**यौवनसुखानि, मानयिष्यसि संसारफलमहोत्सवम् । अहो वन्दनीया सा कापि पुरुषरत्नाकरकुक्षिर्जननी, यस्यां सकलसंसारनरहारावलीमध्यमहानायकोऽयमुत्पन्नः' इत्यवधारयन्त्यो मनाङ्नामितमौलिदोलितसीमन्तमुक्ताफलाः 'स्वामिन्नयमस्मदीयः प्रणामः, अन्यापि क्वापि काचित्प्रणमति' इत्यभिधाय स्मयमानवदनकमलाः सलीलमवनिपालं प्रणेमुः ।**

सुधा—प्रविश्येति । प्रविश्य=प्रवेशं कृत्वा । सविस्मयाः=साश्चर्याः । स्मररूपातिशायिनम्=कामरूपातिसुन्दरम् । नरपतिम्=भूपतिम् । अवलोक्य=दृष्ट्वा । साधु भो स्वामिनि=धन्याऽस्ति भर्तृदारिका । स्थाने=समुचिते स्थाने । अभिनिविष्टा=प्रवृत्ता असि । योग्ये=समर्हे । जाताग्रहा—जातः=उत्पन्नः, आग्रहो यस्यै सा=कृताग्रहा असि । पाके=उचिते । जातस्पृहा—जाता=समुत्पन्ना, स्पृहा=कामना, यस्याः सा । असि । जन्मफलम्=जीवनफलम् । अवाप्स्यसि=प्राप्स्यसि । यौवनसुखानि=तारुण्यानन्दानि । अनुभविष्यसि=अनुभूतिं करिष्यसि । संसारफलमहोत्सवः=लोके जन्मधारणोत्सवम् । मानयिष्यसि=करिष्यसि । अहो=आश्चर्यम् । सा=असौ । कापि=काचित् । पुरुषरत्नाकरकुक्षिर्जननी—पुरुषेषु रत्नम् पुरुषरत्नम् । पुरुषरत्नानाम्, आकरः=निधिः सैव कुक्षिजननी=उदराजननी । वन्दनीया=पूजनीयाऽस्ति । यस्यां=यस्यां जनन्याम् । सकलसंसारनरहारावलीमध्यमहानायकः—सकलसंसारस्य=सम्पूर्णविश्वस्य, नराः=पुरुषाः एव हाराः, तेषाम्, आवलिः=पंक्तिस्तस्याः, मध्ये=अन्तरे, महानायकः=महानेता । अयम्=एषः । उत्पन्नः=सञ्जातः । इति=एवम् । अवधारयन्त्यः=निश्चयन्त्यः । मनाङ्नामितमौलिदोलितसीमन्तमुक्ताफलाः—मनाक्=किञ्चित्, नामिताः=नम्रीकृताः, ये मौलयः=मस्तकानि, तैर्दोलितानि=कम्पितानि, सीमन्तमुक्ताफलानि=सीमन्तमौक्तिकानि यासां ताः । स्वामिन्=राजन् ! अयम्=एषः । अस्मदीयः=अस्माकम् । प्रणामः=नमस्कारः । अन्यापि=अपरापि । क्वापि=कुत्रापि । काचित्=कापि । प्रणमति=नमस्करोति । इत्यभिधाय=इत्युक्त्वा । स्मयमानवदनकमलाः—वदनमेव कमलं वदनकमलम्, स्मयमानानि=विहसितानि, वदनकमलानि=पद्माननानि यासां ताः । सलीलम्=सकौतुम् । अवनिपालम्=भूपालम् । प्रणेमुः=नमश्चक्रुः ।

**हिन्दी**—प्रवेश कर सविस्मय कामदेव से भी बढ़ कर सुन्दर नरपति को देख कर—धन्य हो स्वामिनि ! धन्य हो । उचित स्थान पर प्रवृत्त हुई हो । योग्य वस्तु के लिए आग्रह किया है, उचित पात्र को पाने की इच्छा की है । जन्म का फल प्राप्त करोगी । स्त्री स्वभाव का भाग्य मिलेगा । यौवन-सुख का अनुभव करोगी । संसार-फल के महान् उत्सव को मनाओगी । अहा—वह कोई पुरुषरत्न की निधिरूप उदर वाली वन्दनीया माता है जिसमें समस्त संसार के पुरुषरूप हारावली के मध्य यह महानायक उत्पन्न हुआ है । यह सोचती हुई थोड़ा-सा शिर झुकाये, मौलि में हिल रहे मोतियों वाली—'स्वामिन् ! यह हमारा प्रणाम है और भी कोई कहीं प्रणाम कर

रही है।' यह कहकर कमल-सदृश मुखवाली सुन्दरियों ने मुस्कराते हुए सकौतुक अवनिपाल को प्रणाम किया।

**अन्योऽन्यकृतसम्बोधनाश्च सहर्षमिदमवोचन् ।**

सुधा—अन्योन्यमिति । अन्योन्यकृतसम्बोधनाः—अन्योन्यम् = परस्परम्, कृतम् = विहितम्, सम्बोधनं याभिस्ताः । सहर्षम् = सप्रसन्नम् । इदम् = एतत् । अवोचन् = अकथयन् ।

हिन्दी—परस्पर में एक दूसरे को सम्बोधित करती हुई सहर्ष यह कहने लगीं।

**हंहो हंसि चकोरि चन्द्रवदने चन्द्रप्रभे चन्दने**
**चम्पे चङ्गि लवङ्गि गौरि कलिके कक्कोलिके मालति ।**
**एत प्राप्नुत जन्मजीवितफलं लावण्यलक्ष्मीनिधौ**
**सौभाग्यामृतनिर्जरे नरपतौ निर्वान्तु नेत्राणि वः ॥ ८ ॥**

**अन्वयः**—हंहो हंसि, चकोरि, चन्द्रवदने, चन्द्रप्रभे, चन्दने, चम्पे, चङ्गि, लवङ्गि, गौरि, कलिके, कक्कोलिके, मालति ! एत जन्मजीवितफलं प्राप्नुत । लावण्यलक्ष्मीनिधौ सौभाग्यामृतनिर्जरे नरपतौ वः नेत्राणि निर्वान्तु ॥ ८ ॥

**सुधा—हंहो इति ।** हंहो = सम्बोधनेऽव्ययः । हंसि, चकोरि = चक्रवाकि, चन्द्रवदने—चन्द्र इव वदनम् = मुखं यस्याः सा, तत्सम्बोधने = अयि विधुवदने ! चन्द्रप्रभे—चन्द्रस्य = विधोः, प्रभा = कान्तिरिव कान्तिर्यस्याः सा, तत्सम्बुद्धौ । चन्दने, चम्पे, चङ्गि, लवङ्गि, गौरि, कलिके, कक्कोलिके, मालति ! एत = सर्वे आगच्छत । जन्मजीवितफलम्—जन्मनः, जीवितस्य = जीवनस्य च, फलम् = लाभम् । प्राप्नुत = आप्नुवन्तु । लावण्यलक्ष्मीनिधौ—लावण्यस्य = सौन्दर्यस्य, लक्ष्म्याः = सौभाग्यस्य, च निधिः = आकरः, तस्मिन् । सौभाग्यामृतनिर्जरे—सौभाग्यरूपाय, अमृताय = सुधारसाय, निर्जरः = देवो यथा तथाविधे । नरपतौ = राजनि नले । वः = युष्माकम् । नेत्राणि = चक्षूंषि । निर्वान्तु = शान्तिं गच्छन्तु । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

**हिन्दी**—ओ हंसी, चकोरी, चन्द्रवदना, चन्द्रप्रभा, चन्दना, चम्पा, चङ्गी, लवङ्गी, गौरी, कलिका, कक्कोलिका, मालती ! सभी आओ, जन्म तथा जीवन का फल प्राप्त करो, सौन्दर्य एवं सौभाग्य के आकर, सौभाग्यरूपी अमृत के लिए सुर-सदृश राजा नल में आप सब अपने नयनों की प्यास बुझायें ॥ ८ ॥

**अपि च—**

**कुन्दे सुन्दरि चन्द्रि नन्दनि हले दिष्टयाद्य वर्धामहे**
**देव्याः सोऽयमनङ्गसुन्दरवपुः प्राणेश्वरः प्राप्तवान् ।**
**तस्याः सम्प्रति यत्कृते कृशतनोः क्रीडावने शाखिनां**
**दीर्घश्वाससमर्गलैरनिपरुषैर्म्लायन्ति ते पल्लवाः ॥ ९ ॥**

**अन्वयः**—कुन्दे, सुन्दरि, चन्द्रि, नन्दनि, हले ! दिष्टया अद्य वर्धामहे । सः अयम्

देव्याः अनङ्गसुन्दरवपुः प्राणेश्वरः प्राप्तवान् । यत्कृते सम्प्रति कृशतनोः तस्याः क्रीडावने ते अग्निपरुषैः दीर्घश्वासमरुद्भिः शाखिनां पल्लवाः म्लायन्ति ॥ ९ ॥

**सुधा—कुन्द इति ।** कुन्दे, सुन्दरि, चन्द्रि, नन्दनि, हले ! दिष्टया=सौभाग्येन । अद्य=अस्मिन् दिवसे । वर्धामहे=वयमेधावहे । ( यतः ) सः=तथाविधः । अयम्=एषः । देव्याः=दमयन्त्याः । अनङ्गसुन्दरवपुः—अनङ्ग इव सुन्दरम् वपुर्यस्य सः=मदनसुन्दरशरीरः । प्राणेश्वरः=जीवितेश्वरः । प्राप्तवान्=लब्धवान् । यत्कृते=यदर्थम् । सम्प्रति=साम्प्रतम् । कृशतनोः—कृशम्=क्षीणम्, तनुः=शरीरम् यस्यास्तस्याः । तस्याः=दमयन्त्याः । क्रीडावने=लीलाकानने । ते=तव । अग्निपरुषैः—अग्निरिव परुषैः=उष्णैः । दीर्घश्वासमरुद्भिः=दीर्घोच्छ्वाससमीरैः । शाखिनाम्=पादपानाम् । पल्लवाः=किसलयानि । म्लायन्ति=शुष्काणि भवन्ति । शार्दूलविक्रीडितं वृत्तम् ।

**हिन्दी**—और भी—ओ कुन्दे, सुन्दरि, चन्द्रि, नन्दनि सखियो ! सौभाग्य से आज हम सब बढ़ रही हैं क्योंकि ऐसे यह देवी दमयन्ती के कामदेव से भी बढ़कर सुन्दर शरीर वाले प्राणेश्वर आ पहुँचे हैं जिनके लिए इस समय क्षीण शरीर वाली उस ( दमयन्ती ) के क्रीडावन में अग्नि से भी अधिक उष्ण ( जलाने वाली ) उच्छ्वासों की वायु से वृक्षों के पत्ते भी मलिन हो जाते हैं ॥ ९ ॥

**अपि च—**

**यं श्रुत्वैव मनोभवालसदृशा देव्या धृतोन्मादया**
**नीयन्ते गृहदीर्घिकातटतरुच्छायाश्रये वासराः ।**
**प्राप्तः शोणसरोजपत्रनयनो निःशेषसीमन्तिनी-**
**भ्राम्यन्नेत्रपतत्रिविश्रमतरुः सोऽयं नलो नैषधः ॥ १० ॥**

**अन्वयः**—यं श्रुत्वा एव धृतोन्मादया मनोभवालसदृशा देव्या गृहदीर्घिकातटतरुच्छायाश्रये वासराः नीयन्ते । सः अयं शोणसरोजपत्रनयनः निःशेषसीमन्तिनीभ्राम्यन्नेत्रपतत्रिविश्रमतरुः नैषधः नलः प्राप्तः ॥ १० ॥

**सुधा—यमिति ।** यं श्रुत्वा=यमाकर्ण्य एव । धृतोन्मादया—धृतः=स्थापितः, उन्मादो यया तया । मनोभवालसदृशा—मनोभवस्य=कामदेवस्यालसदृष्टिरिव दृक् यस्यास्तया । देव्या=दमयन्त्या । गृहदीर्घिकातटतरुच्छायाश्रये—गृहदीर्घिकायाः=गृहवाप्याः, तटस्य ये तरवस्तेषां छायायाम् आश्रयः, तस्मिन्=गृहवापीतटपादपच्छायाश्रये । वासराः=दिवसाः । नीयन्ते=याप्यन्ते । सः=असौ । अयम्=एषः । शोणसरोजपत्रनयनः—शोणसरोजपत्रमिव नयने यस्य सः=रक्ताम्भोजदलनेत्रः । निःशेषसीमन्तिनीभ्राम्यन्नेत्रपतत्रिविश्रमतरुः—निःशेषसीमन्तिनीनाम्=समस्तसुन्दरीणाम्, भ्राम्यन्ति=चङ्क्रमितानि, नेत्राण्येव पतत्रिणः=पक्षिणः, तेषां विश्रामस्य तरुः=वृक्षसदृशः । नैषधः=निषधदेशीयः । नलः=नलाभिधो भूपतिः । प्राप्तः=समागतः ।

**हिन्दी—और भी**—जिसको सुनकर ही उन्मादपूर्ण, कामालसदृष्टि वाली देवी ( दमयन्ती ) घर की बावली के किनारे खड़े वृक्ष की छाया में जाकर दिवस व्यतीत

करती है, वही यह रक्तकमल-दल सदृश सुन्दर नयनों वाले, समस्त सीमन्तिनियों ( सुन्दरियों ) के घूमते हुए नेत्ररूपी पक्षियों के विश्राम वृक्ष सदृश निषध-नृपति नल आये हैं ।। १० ।।

**एवमन्योन्यमभिधाय समीपमुपसृतास्ताः क्षितिपतिस्त्वनुरागतरङ्गतरत्तारकेण सादरं दूरोत्क्षिप्तपक्ष्मणा चक्षुषा सन्तोषपुञ्जमञ्जूषिका इव, आनन्दकन्दलीरिव, अमृतपङ्कपुत्रिका इव, मधुमासविकसितसहकारमञ्जरीरिव, दमयन्तीप्रेषिताः सस्पृहमवलोकयन् 'इत एत कुशलं तत्रभवतीनाम्, उपविशत, गृह्णीत ताम्बूलम्, आवेदयत भवत्स्वामिनीसन्देशम्', इति ससम्भ्रमं सम्भाषयामास ।**

**सुधा**—एवमिति । एवम् = इत्थम् । अन्योऽन्यम् = परस्परम् । अभिधाय = कथयित्वा । समीपम् = पार्श्वम् । उपसृताः = गताः । ताः = एताः । क्षितिपतिः = भूपतिर्नलः, तु । अनुरागतरङ्गतरत्ताकेण = प्रेमोर्मिचञ्चत्कनीनिकेन । सादरम् = ससम्मानम् । दूरोत्क्षिप्तपक्ष्मणा—दूरम् = दूरस्थलम्, उत्क्षिप्तानि = प्रक्षिप्तानि, पक्ष्माणि यस्य तत्तेन । चक्षुषा = नयनेन । सन्तोषपुञ्जमञ्जूषिका इव—सन्तोषपुञ्जस्य = सन्तुष्टिराशेः पुञ्जिकाः इव । आनन्दकन्दलीरिव—आनन्दस्य = सुखस्य, कन्दल्यस्ताः, इव = यथा । अमृतपङ्कपुत्रिका इव—अमृतपङ्कस्य = सुधाकर्दमस्य, पुत्रिकाः = दारिकाः, इव = यथा । मधुमासविकसितसहकारमञ्जरीरिव—मधुमासे = वसन्तमासे, विकसितस्य = पुष्पितस्य सहकारस्य = आम्रस्य, मञ्जरीः = कलिकाः । इव = यथा । दमयन्तीप्रेषिताः = दमयन्त्या = भैम्याः, प्रेषिताः = प्रहिताः ताः । सस्पृहम्—स्पृहया = कामनया, सहितम् = सकामम् । अवलोकयन् = पश्यन् । इत एत = इत आगच्छत । तत्रभवतीनाम् = श्रीमतीनाम् । कुशलम् = क्षेमं वर्तते । उपविशत = आसीनाः भवत । ताम्बूलं गृह्णीत = = ताम्बूलपत्राणि स्वीकुरुत । भवत्स्वामिनीसन्देशम्—भवत्स्वामिन्याः = निजभर्तृदारिकायाः, दमयन्त्याः, सन्देशम् = सन्दिष्टम् । आवेदयत = निवेदयत । इति = एवं क्षितिपतिर्नलः । ससम्भ्रमम् = सरभसम् । सम्भाषयामास = अभाषत ।

**हिन्दी**—इस प्रकार परस्पर में कहकर समीप बैठी ( आई हुई ) दमयन्ती द्वारा प्रेषित उन दूतियों से राजा नल ने—अनुराग रूपी लहरों से तरङ्गित पुतलियों वाले, ऊपर उठाये पलकों वाले नयनों से सन्तोष राशि की पिटारी सदृश, आनन्द के कुन्दों जैसी, सुधा से सनी मिट्टी की पुतलियों जैसी, मधुमास (वसन्त) में बौराये हुए आमों की मञ्जरी सदृश दमयन्ती द्वारा भेजी गई दूतियों को सस्पृह देखते हुए—इधर आइये आप सब कुशल से तो हैं, बैठिये पान ग्रहण कीजिये, तथा अपनी स्वामिनी ( राजकुमारी दमयन्ती ) का सन्देश कहिये ।' इस प्रकार ससम्भ्रम कहा ।

**ताश्च 'महानयं प्रसादः' इति ब्रुवाणाः समुपविश्य 'राजाधिराज, राजीवदलदीर्घाक्षी क्षेमवार्त्तां पृच्छति 'न नाम देवस्यापघने घर्मांशुघर्मोर्मिनिर्मितः कोऽपि खेदः समपद्यत, न वा समविषममार्गलङ्घनश्रमेण क्वापि परमार्त्तिनी विलम्बितम् । इदं च परिजनस्य ग्लानिरभूत्, बहूनि दिनानि देवेनाध्वनि**

**तया प्राणेश्वरस्य प्रियं प्राभृतं प्रहितम्, इदमुक्तम्, इदमेकान्तसन्दिष्टम्, इदं प्रकाशप्रश्रयापलीलायितम्', इति राजानमञ्जसा जजल्पुः ।**

**सुधा—ताश्चेति** । ताः=दूतिकाश्च । अयम्=एषः । महान् प्रसादः=अतिशयानुकम्पाप्रकारः । इति=एवम् । ब्रुवाणाः=कथ्यमानाः । समुपविश्य=आसनस्थानान्यधिगृह्य । राजाधिराज=भो राजराजेश्वर ! राजीवदलदीर्घाक्षी—राजीवदलम्=कमलदलम्, इव दीर्घे=विशाले, अक्षिणी=नयने, यस्याः सा । क्षेमवार्ताम्=कुशलसमाचारम् । पृच्छति । देवस्य=भवतः । अपघने=शरीरे । घर्मांशुघर्मोर्मिनिर्मितः—घर्मांशोः=सूर्यस्य, घर्मोर्मिभिः=घर्म-किरणैः, निर्मितः=उत्पादितः । कः अपि=कश्चिदपि । खेदः=क्लेशः । तु न नाम समपद्यत=नैव समभवत् ? वा=अथवा । समविषममार्गलंघनश्रमेण—समविषमस्य=उच्चावचस्य, मार्गस्य=वर्त्मनः, लंघननेन=चलनेन यो श्रमः=आयासस्तेन । परिजनस्य=अनुचरवृन्दस्य । कापि=काचित् । परिमाथिनी=परमाकुलयित्री । ग्लानिः नाभूत्=न बभूव । बहूनि=अनेकानि । दिनानि=अहानि । देवेन=प्रभुणा भवता । अध्वनि=वर्त्मनि । विलम्बितम्=वेलातिक्रमितम् । इदम्=एतत् । प्राणेश्वरस्य=जीवितेश्वरस्य । प्रियम्=रुचिकरम् । प्राभृतम्=उपहारवस्तु-तया=देव्या, दमयन्त्या । प्रहितम्=प्रेषितम् । इदम्=एतत् । उक्तम्=कथितम्, इदम्=एतत् । एकान्तसन्दिष्टम्—एकान्ते=रहसि, सन्दिष्टम् । प्रकाशप्रश्रयापलीलायितम्–प्रकाशम्=प्रकटरूपम्, प्रश्रयेण=नम्रतया, अलापलीलायितम्=आलापलीलापूर्णकृत्यम् । इति । अञ्जसा=नम्रतया । राजानम्=भूपतिम् । ( ताः ) जजल्पुः=ऊचुः ।

**हिन्दी**—वे भी—'बड़ी यह कृपा है ।' यह कहती हुई बैठ कर—हे राजाधिराज, कमलदल सदृश विशाल नेत्रों वाली स्वामिनी ( आपकी ) कुशलक्षेम पूछती हैं क्या सूर्य भगवान् की किरणों से उत्पन्न हुई धूप से कोई क्लेश तो नहीं हुआ ? अथवा ऊँचे नीचे मार्ग को पार करने के परिश्रम से परिजनों को कोई अत्यन्त ग्लानि तो नहीं हुई । मार्ग में महाराज ने बहुत दिन लगा दिये ! तथा यह 'प्राणेश्वर' के लिए उन्होंने ( दमयन्ती ने ) प्रिय उपहार भेजा है और यही उनका एकान्तसन्देश है, यही प्रकट रूप में नम्रतापूर्ण आलापलीलायें हैं ।' इस प्रकार सरलतया राजा से (उन्होंने) कहा ।

**सोऽपि स्मरव्यापारकोरकिताभिः शृङ्गाररससेकपल्लविताभिर्मुग्धस्मितांशुमञ्जरिताभिरमृतच्छटाभिरिव वाग्भिः किमपि सरलाभिः, किमपि नर्मोक्तिकुटिलाभिः, किमपि कथयन् किमपि पृच्छन्, किमपि सन्दिशन्, अनुजल्पमनुजल्पितम्, अनुहासमनुहसितम्, अनुसुभाषितमनुसुभासितम्, अनुप्रियमनुप्रीतम्, प्रसादप्रवानोद्दीपितोद्दामानुरागास्तः कुर्वन्नतिचिरमिव गोष्ठीलीलयावतस्थे ।**

**सुधा—सोऽपीति** । सः=नृपः नलः अपि । स्मरव्यापारकोरकिताभिः—स्मरस्य=मदनस्य, व्यापारः=कार्यं प्रेम, तेन कोरकिताभिः=कुड्मलिताभिः । शृङ्गाररससेकपल्लविताभिः—शृङ्गाररसस्य सेकेन=सेचनेन, पल्लविताभिः=मुग्धस्मितांशु-

मञ्जरिताभिः—मुग्धेन=मनोहरेण, स्मितांशुना=मन्दहासकिरणेन, मञ्जरिताभिः=मञ्जरीयुक्ताभिः। अमृतच्छटाभिः=अमृतशोभिभिः। वाग्भिः=वाणीभिः। किमपि=किञ्चिदपि। सरलाभिः=ऋजुभिः। किमपि नर्मोक्तिकुटिलाभिः=नम्रतापूर्णवक्रताभिः। कथयन्=वदन्। पृच्छन्=पृच्छा कुर्वन्। सन्दिशन्=सन्देशं वितरन्। अनुजल्पम्=कथनानन्तरम्। अनुजल्पितम्=अनुवदितम्। अनुहासम्=हासानन्तरम्। अनुहसितम्=विहसितम्। अनुसुभाषितम्=सूक्त्यनन्तरम्। अनुसुभाषितम्=पश्चात् सुभाषितम्। अनुप्रियम्=प्रियानुकूलम्। अनुप्रीतम्=अनुप्रसादितम्। प्रसादप्रदानोद्दीपितोद्दामानुरागाः—प्रसादप्रदानेन=प्रसन्नतया, उद्दीपितः, तीव्रानुरागः=तीक्ष्ण प्रेम यासां ताः। ताः=क्रियाः। कुर्वन्=विदधन्। अतिचिरम् इव=बहुकालमिव। गोष्ठीलीलया=गोष्ठीक्रीडया। अवतस्थे=स्थितवान्।

**हिन्दी**—वह भी काम व्यापार से कोरकित, शृङ्गाररस के सिञ्चन से पल्लवित, मुग्धमुस्कान की छटा से मञ्जरित, अमृत छटा के सदृश कुछ सरल मधुरवाणी द्वारा कुछ नम्र वक्रोक्तियों द्वारा कहते हुए, कुछ पूछते हुए, कुछ सन्देश देते हुए, बात में बात मिलाते हुए हँसी में हँसी करते हुए, सूक्तियों पर सूक्तियाँ कहते हुए, प्रियजनों में प्रसन्नता प्रकट करते हुए, प्रसन्नता-प्रदर्शन द्वारा बढ़े हुए अनुराग को और बढ़ाते हुए उन सभी क्रियाओं को करते हुए बहुत समय तक नरपति नल गोष्ठी लीला करते रहे।

**'अहो नु खल्वस्य नरपतेः, अनश्लीलं शीलम्, अनाहार्यमौदार्यम्, अवञ्चनं वचनम्, अदैन्यं दानम्, अस्मयं स्मितम्, अविचारगोचरं गाम्भीर्यम्', इति भावयन्त्यस्ताश्च कांचिदुचितविनोदैरतिवाह्य वेलाम्, अनुभूय किमपि गोष्ठीसुखम्, आख्याय च किञ्चिदिव दमयन्तीविनोदविलासव्यतिकरम् 'आज्ञापयतु देवोऽस्मान् गमनाय, भवद्वार्त्तामृतपानार्थिनी देवी त्वरिताऽस्मत्प्रत्यावृत्तिमवेक्षमाणा तिष्ठति' इत्यभिधायानुमता यथागतमगच्छन्।**

**सुधा**—अहोन्विति। अहो नु=आश्चर्यम्। खलु=नूनम्। अस्य=एतस्य। नरपतेः=भूपतेः। शीलम्=स्वभावः। अनश्लीलम्=अश्लीलताशून्यम्। औदार्यम्=उदारता। अनाहार्यम्=अकृत्रिमम्। वचनम्=कथनम्। अवञ्चनम्=छलरहितम्। दानम्। अदैन्यम्=दीनताशून्यम्। स्मितम्=मृदुहासः, अस्मयम्=अहंकारशून्यम्। गाम्भीर्यम्=गम्भीरता। अविचारगोचरम्=सुस्पष्टम्। इति भावयन्त्यः=इति विचारयन्त्यः। ताः=दूतिकाः। उचितविनोदैः=उपयुक्तमनोरञ्जनैः। काञ्चिद् वेलाम्=किमपि कालम्। अतिवाह्य=व्यतीत्य। किमपि=किञ्चित्। गोष्ठीसुखम्=सभासुखम्। अनुभूय=अनुभवं कृत्वा। दमयन्तीविनोदविलासव्यतिकरम्—दमयन्त्याः, विनोदस्य=मनोरञ्जनस्य, विलासः=आनन्दम्, तस्य व्यतिकरम्=वार्ताप्रसङ्गम्। आख्याय=कथयित्वा। देवः=स्वामी। अस्मान्=दूतिकाः। गमनाय=प्रस्थानाय। आज्ञापयतु=आदिशतु। देवी=राजपुत्री दमयन्ती। भवद्वार्तामृतपानार्थिनी—भवतः=श्रीमतः, वार्ता=समाचारः, तदेवामृतम् तस्य पानार्थिनी=पातुकामा। त्वरिता=द्रुततरा।

अस्मत्प्रत्यावृत्तिम् = अस्माकं प्रत्यावर्तनम् । अवेक्ष्यमाणा = निरीक्ष्यमाणा । तिष्ठति = वर्तते । इति = एवम् । अभिधाय = उक्त्वा । अनुमताः = आज्ञप्तास्ताः दूतिकाः । यथा-गतम् = गन्तव्यस्थानम् । अगच्छन् = जग्मुः ।

हिन्दी—अहा—वास्तव में इस राजा का स्वभाव अश्लीलतारहित है इसकी उदारता अकृत्रिम, वचन छलप्रपञ्च-शून्य है, दान देने में दीनता नहीं प्रकट होती है, मन्दहास अहंकारशून्य तथा गम्भीरता नितान्त स्पष्ट है । यह सोचती हुई वे उचित मनोविनोदों से कुछ समय व्यतीत कर, कुछ गोष्ठी सुख का अनुभव कर तथा दमयन्ती के विनोद के विलास की कुछ बातचीत कर—'महाराज हमें जाने की आज्ञा दें, ( क्योंकि ) आपके समाचार रूपी अमृतपान करने की इच्छुक देवी दमयन्ती शीघ्र हमारे वापस होने की प्रतीक्षा कर रही हैं ।' यह कह कर वे दूतियाँ अनुमति लेकर यथास्थान चली गईं ।

**गतासु च तासु, प्रगल्भं प्रज्ञायाम्, अचरमं वाचि, कुशलं कलासु, निपुणं नीतौ, सप्रतिभं सभायाम्, आश्चर्यभूतमाहूय पर्वतकनामानं वामनकमुपायनीकृत्य कर्कशकर्कन्धूफलस्थूलोज्ज्वलमुक्तावलीमुख्यभव्यभूषणांशुकादिसम्मानादरपरितोषितेन पुष्कराक्षपुरःसरं किन्नरमिथुनेन सह दमयन्तीं प्रति प्रेषयामास ।**

सुधा—गतास्विति । तासु = दूतिकासु । गतासु = प्रयातासु । प्रज्ञायाम् = बुद्धौ । प्रगल्भम् = निपुणम् । वाचि = वाण्याम् । अचरमम् = प्रवीणम् । कलासु = साहित्यादि-कलासु । कुशलम् = दक्षम् । नीतौ = नीतिमार्गे । निपुणम् = कुशलम् । सभायाम् = सदसि । सप्रतिभम् = प्रतिभासम्पन्नम् । आश्चर्यभूतम् = विचित्रम् । पर्वतकनामानम् = पर्वतकाभिधम् । वामनकम् = वामनरूपं जनम् । उपायनीकृत्य = उपहाररूपे विधाय । कर्कशकर्कन्धूफलस्थूलोज्ज्वलमुक्तावलीमुख्यभव्यभूषणांशुकादिसम्मानादरपरितोषितेन—कर्कशम् = कठोरम् यत् कर्कन्धूफलम्, तद्वत्स्थूलम् = बृहदाकारम्, उज्ज्वलमुक्ता-वलीमुख्यम् = दीप्तिमन्मुक्तावलीप्रमुखम्, भव्यम् = सुन्दरम्, भूषणम् = विभूषणम्, अंशु-कादिश्च = वस्त्रादिकश्च, तैः सम्मानेन, आदरेण च परितोषितः = सन्तोषितस्तथा-विधेन । पुष्कराक्षपुरःसरम् = पुष्कराक्षपूर्वकम् । किन्नरमिथुनेन = किंपुरुषयुगलेन, सह = साकम् । दमयन्तीम् प्रति = दमयन्तीपार्श्वम् । प्रेषयामास = प्राहिणोत् ।

हिन्दी—उन दूतिकाओं के चले जाने पर प्रज्ञा में प्रगल्भ वाणी में प्रवीण, कलाओं में कुशल, नीतिशास्त्र में निपुण, सभा में प्रतिभायुक्त अत्यद्भुत पर्वतक नामक बौने को बुलाकर तथा उसे उपहार बनाकर कठोर कर्कन्धू फल सदृश स्थूल उज्ज्वल मुक्तावली प्रमुख आभूषण तथा वस्त्रों आदि से सम्मान, आदर देकर सन्तुष्ट कर पुष्कराक्ष नामक व्यक्ति को किन्नरमिथुन के साथ कर दमयन्ती के पास भेजा ।

**स्वयं च शाङ्खिकमुखमरुत्पूर्यमाणशङ्खस्वनविभिन्नभाङ्कारिमध्याह्न-भेरीरवेण निर्यद्वेलाविलासिनीचरच्चरणाभरणरणन्मणिनूपुरझङ्कारेण च निवेद्यमाने मध्याह्नसमये माध्याह्निककरणायोदतिष्ठत् ।**

सुधा—स्वयमिति। स्वयम्=आत्मना च। शाङ्खिकमुखमरुत्पूर्यमाणशङ्खस्वन-विभिन्नभांकारिमध्याह्नभेरीरवेण—शङ्खं वादयतीति शाङ्खिकः, शाङ्खिकमुखस्य, मरुता =वायुना पूर्यमाणो यः शङ्खः, तस्य स्वनेन=ध्वनिना, विभिन्नस्य=अतिरिक्तस्य भांकारिणा=ध्वनिकारिणा, मध्याह्नस्य=माध्यन्दिनवर्तिनः, भेरीरवेण=भेरीध्वनिना। निर्यद्वेलाविलासिनीचरच्चरणाभरणरणन्मणिनूपुरझङ्कारेण—निर्यद्वेलाविलासिनीनाम् =निर्गच्छद्वाराङ्गनानाम्, चलताम्=प्रचलताम्, चरणानाम्=पादानाम्, यानि आभरणानि=नूपुरादीनि, तेषां रणतां मणिनूपुराणां यो झङ्कारः=झङ्कृतिस्तेन। निवेद्यमाने=कथ्यमाने। मध्याह्नकाले=माध्यन्दिन-समये। माध्याह्निककरणाय= माध्यन्दिनकार्यसम्पादनाय। उदतिष्ठत्=उदचलत्।

हिन्दी—स्वयम् शंखवादक के मुख की वायु से भरी हुई शंखध्वनि के अतिरिक्त गम्भीर ध्वनि करने वाले दोपहर को बजने वाले नगाड़े की आवाज से निकलती हुई वाराङ्गनाओं के चलते हुये चरणों के आभूषणों ( नूपुरादि ) की झङ्कार से दोपहर हो जाने की बात समझ कर दोपहर के सन्ध्यावन्दनादि कृत्य करने के लिए राजा उठ खड़ा हुआ।

**क्रमेण च निःसृते समस्तसेवकजने, विश्रान्ततूर्यतालगीतासु निर्यातनर्तकी-विरहखेदादिव मूकीभूतासु नृत्यशालासु, निःशब्दतया सुप्तास्विवार्थाधिकारककुटीषु, शून्यतया मध्याह्नतन्द्रीमूर्च्छितेष्विव समस्तमण्डपेषु, सङ्क्रान्तसेवाविलासिनीचरणकुङ्कुमपदपङ्क्तितया विकीर्णविकसितरक्तारविन्द इव प्रकाशमाने राजभवनाङ्गणे, घनं ध्वनन्तीषु भोजनावसरशङ्खकाहलासु, प्रधावमानेषु प्रत्यास्वादकजनेषु, परिमृज्यमानास्वतिथिसत्त्रशालासु, सज्जीक्रियमाणेष्वप्राशनब्राह्मणेषु, प्रवेश्यमानासु गोग्रासयोग्यासु कपिलासु पुण्यगवीषु, प्रक्षाल्यमानेषु वायसबलिस्तम्भशिखरफलकेषु, बहिर्दीयमानेषु, दीनानाथभिक्षुकभैक्ष्यपिण्डेषु, समुपलिप्यमानासु भोजनस्थानवेदीषु, सञ्चार्यमाणेषु चकोरपञ्जरेषु, निवेद्यमाननैवेद्यासु पूज्यराज्याधिदेवतासु वैश्वदेवाहुतिगन्धवाहिनि वहति विविधान्नपाकपरिमलमनोहरे महानसमरुति, निर्वर्तितमज्जनादिक्रियाकलापे भजति भोजनभुवं भूभुजि, बहिः सूपकारकलकलः समुल्ललास।**

सुधा—क्रमेणेति। क्रमेण=क्रमशः। समस्तसेवकजने=सम्पूर्णपरिजने। निःसृते= निर्गते। विश्रान्ततूर्यतालगीतासु—विश्रान्तम्=विरतम्, तूर्यतालगीतम्=तूर्यादिस्वनम्, याभ्यस्तथाविधासु। निर्यातनर्तकीविरहखेदात् इव=निर्गतनृत्याङ्गनावियोगदुःखाद् यथा। मूकीभूतासु=मौनतां गतासु। नृत्यशालासु=रङ्गशालासु। निःशब्दतया= नीरवतया। अर्थाधिकारककुटीषु—अर्थाधिकारकाणां=वित्ताधिकारिणाम्, कुटीषु= कुटीरेषु। सुप्तासु=निद्रांगतासु। शून्यतया=रिक्ततया। मध्याह्नतन्द्री-मूर्च्छितेषु= माध्यन्दिवसालस्यमूर्च्छितेषु। इव=यथा। समस्तमण्डपेषु=सर्वमण्डपेषु। संक्रान्तसेवा-

विलासिनीचरणकुङ्कुमपद-पंक्तितया—सङ्क्रान्तानाम् =संलग्नानाम् सेवाविलासिनीनाम् =सेवारमणीनाम्, चरणकुङ्कुमस्य=पदकेसरस्य, पंक्तितया =चिह्नत्वेन। विकीर्णविकसितरक्तारविन्दे—विकीर्णे =प्रसृते, विकसितरक्तारविन्दे =विकच-रक्ताम्भोजे। प्रकाशमाने =देदीप्यमाने। इव =यथा। राजभवनाङ्गणे =राज-प्रासादप्राङ्गणे, भोजनावसरशङ्खकाहलासु—भोजनस्यावसरे =समये, शंखाः काहलाश्च यत्र, तासु। ध्वनन्तीषु =रणन्तीषु। प्रत्यास्वादकजनेषु =विभिन्नस्वादिष्टभोज्य-पाचकेषु। प्रधावमानेषु =द्रुतं धावितेषु। परिमृज्यमानासु =स्वच्छतां नीतासु। अतिथिसत्रशालासु =अभ्यागतयज्ञशालासु। अग्राशनब्राह्मणेषु =प्रथमपङ्क्तौ भोजनीयविप्रेषु। सज्जीक्रियमाणेषु =सन्नद्धतां नीयमानेषु। गोग्रासयोग्यासु =गोग्रासदातव्यासु। कपिलासु =कपिलवर्णासु। प्रवेश्यमानेषु =प्रवेशाय नीयमानेषु। पुण्यगवीषु =पूतधेनुषु। वायसबलिस्तम्भशिखरफलकेषु =काकबलिदेयस्तम्भशिखरपटलेषु। प्रक्षाल्यमानेषु=क्षाल्यमानेषु। दीनानाथभिक्षुकभैक्ष्यपिण्डेषु —दीनेभ्यः =विपन्नेभ्यः, अनाथेभ्यश्च =अशरणेभ्यश्च, भिक्षुकेभ्यः =याचकेभ्यः, भैक्ष्यपिण्डेषु =भोज्यपिण्डेषु। बहिः =राजप्रासादेभ्यो बाह्य-स्थाने। दीयमानेषु =समर्प्यमाणेषु। भोजनस्थानवेदीषु =भोजनस्थलवेदिकासु। समुपलिप्यमानासु=गोमयाद्युपलेपन-निवृत्तासु। चकोरपञ्जरेषु—चकोरपक्षि-पञ्जरेषु। सञ्चार्यमाणासु=प्रचाल्यमानासु। पूज्यराज्याधिदेवतासु =पूजनीयासु राज्याधिष्ठात्रिदेवीषु। निवेद्यमाननैवेद्यासु—निवेद्यमानम् =अर्पण-योग्यं नैवेद्यं निवेद्यते यत्र तासु। वैश्वदेवाहुतिगन्धवाहिनि—वैश्वदेवाय =अग्नये, या आहुतिः, तस्याः गन्धम्=सुरभिम्, वहतीति यस्तादृशि। विविधान्नपाकपरिमलमनोहरे—विविधान्नानाम्=अनेकविधभोज्यान्नानाम्, पाकेन =पाचनेन, परिमलः =सुगन्धिर्मनोहरः =मनोरमश्च, यस्तथाविधे। महानसमारुति—महानसस्य =पाकशालायाः, मारुति =पवने। वहति =प्रवहति। निर्वर्तितमज्जनादिक्रियाकलापे—निर्वर्तितः =सम्पादितः, मज्जनादिक्रियाकलापः=स्नानादिकर्म येन तथाविधे। भोजनभुवम् =अशन-गृहम्। भूभुजि =राजनि। भजति =शोभमाने सति। बहिः=बाह्यस्थाने। सूपकारकलकलः—सूपकाराणाम्=पाचक-पुरुषाणाम्, कलकलः =कोलाहलः। समुल्ललास =शुशुभे।

**हिन्दी**—क्रमशः समस्त सेवकों के चले जाने पर तुरुही वाद्य, ताल तथा गीत बन्द हो गये। नृत्यशालाएँ नर्तकियों के निकल जाने से उनके वियोग-दुःख से मानों मौन हो गयीं थीं। निःशब्दता ( खामोशी ) के कारण अर्थाधिकारियों की कुटीरें जैसे सोई हुई थीं। शून्यता के कारण समस्त मण्डप मानों दोपहर के आलस्य से बेहोश से पड़े थे। सेवा, विलासिनियों रमणियों के इधर-उधर घूमने से पावों के लगे कुङ्कुम के पदचिह्नों से राजभवन का प्राङ्गण फैले विकसित अरुण-कमल जैसा प्रकाशित हो रहा था। भोजन के अवसर पर शंख तथा काहल की ध्वनियाँ तीव्र हो उठी थीं। आस्वादक पदार्थों के बनाने वाले पाचक इधर-उधर दौड़ रहे थे। अतिथिसत्रशालाएँ धोई तथा साफ सुथरी की जा रहीं थीं। अग्राशन (प्रथम पंक्ति में भोजन करने वाले ) ब्राह्मणों को तैयार किया जा रहा था। गोग्रासयोग्य कपिल ( कपासी वा

शुभ्रवर्ण वाली ) पवित्र गायों को लाया जाने लगा था। वायसों ( कौवों ) के बलि-स्तम्भों की चोटियों के ऊपर के फर्श धोये जा रहे थे। बाहर दीनदुःखियों तथा अनाथ-भिक्षुकों को भिक्षा-पिण्ड बाँटे जा रहे थे। भोजन करने की वेदियों ( चौतरियों ) को भली-भाँति लीपा जा रहा था। चकोरों के पिंजड़े ( इधर-उधर ) घुमाये जा रहे थे। पूजनीय राज्य की अधिष्ठात्रि देवताओं को नैवेद्य निवेदन किये जा रहे थे। विविध पकवान् के बनाये जाने की सुगन्ध से मनोरम, वैश्वदेव के लिए दी हुई आहुति को सुगन्धवाही रसोईघर की वायु प्रवाहित हो रही थी स्नानादि क्रियाकलापों से निवृत्त होकर नृपति भोजन करने के स्थान पर पहुँच चुके थे तथा बाहर सूपकारों (पाचकों–रसोइयों ) का कोलाहल हो उठा था।

**आज्यं प्राज्यमभिन्नकुन्दकलिकाकल्पश्च शाल्योदनो**
**धूपामोदमनोहरा शिखरिणी स्वादूनि शाकानि च।**
**पेयास्वाद्यकवल्यलेह्यबहुलं नानाविधं भुज्यतां**
**भोज्यं भीममहानृपस्य सुतया सम्प्रेषितं सैनिकाः॥ ११॥**

अन्वयः—सैनिकाः! भीममहानृपस्य सुतया सम्प्रेषितं प्राज्यम् आज्यम्, अभिन्न-कुन्दकलिकाकल्पः शाल्योदनः च, धूपामोदमनोहरा शिखरिणी, स्वादूनि शाकानि च पेयास्वाद्यकवल्यलेह्यबहुलं नानाविधं भोज्यं भुज्यताम्॥ ११॥

**सुधा—आज्यमिति।** सैनिकाः=भटाः। भीममहानृपस्य=महाराजभीमस्य। सुतया=दुहितया। सम्प्रेषितम्=प्रहितम्। प्राज्यम्=पर्याप्तम्। आज्यम्=सर्पिषम्। अभिन्नकुन्दकलिकाकल्पः—अभिन्नकुन्दकलिकया, कल्पते=उपमीयत इति तथाविधः। शाल्योदनः=शालिधान्यस्योदनः। धूपामोदमनोहरा—धूपस्यामोदेन=गन्धेन, मनोहरा=मनोरमा। शिखरिणी=दधि। स्वादूनि=स्वादिष्टानि। शाकानि च। पेयास्वाद्य-कवल्यलेह्यबहुलम्—पातुं योग्यं पेयम्, आस्वादनयोग्यम् आस्वाद्यम्, कवलेन खाद्यम् कवल्यम्, लेह्यम्=लेह्य-पदार्थश्च, बहुलेन=आधिक्येन यस्मिन्, तथाविधम्। नानाविधम्=बहुप्रकारकम्। भोज्यम्=भोजनयोग्यं खाद्यम्। भुज्यताम्=खाद्यताम्। शार्दूलविक्रीडितं वृत्तम्।

**हिन्दी—**सैनिको! महाराज भीम की दुहिता ( दमयन्ती ) द्वारा भेजे गये पर्याप्त घृत, अभिन्न कुन्दकलिका सदृश शाल्योदन ( भात ) धूप की सुगन्ध जैसी मनोरम मसालायुक्त दही तथा स्वादिष्ट शाक, पेय ( पीने योग्य ) अस्वाद्य ( चखने योग्य ) कवल्य ( कवलों के रूप में खाने योग्य ) तथा लेह्य ( चाटने योग्य ) अनेक प्रकार के भोज्य पदार्थ आप लोग खायें॥ ११॥

**अहो नु खल्वमी मत्स्यमांसैर्विरहितमुदीच्यप्रतीच्यप्राच्यजनाः प्रियसक्तवो भोक्तुमेव न जानन्ति।**

**सुधा—अहोन्विति।** अहो=आश्चर्यम्! नु खलु=नूनमेव। अमी=एते सैनिकाः। उदीच्यप्रतीच्यप्राच्यजनाः-उदीच्याम्=उत्तरदिशायाम्, प्रतीच्याम्=पश्चिम-दिशायाम्,

प्राच्यम्=प्राचीदिशायाम्, च निवासिनः, जनाः=लोकाः। प्रियसक्तवः—सक्तूनि प्रियाणि=रुचिकराणि येभ्यस्ते। मत्स्यमांसैः=मीनपललैः। विरहितम्=रहितम्। भोक्तुम्=अत्तुम् एव। न जानन्ति=नैव विदन्ति।

हिन्दी—अहा—आश्चर्य है कि, उत्तर-पश्चिम तथा पूर्वदिशाओं के निवासी जिन्हें सतुए ही रुचिकर हैं, ऐसे यह सैनिक तो मछली तथा मांसरहित भोजन करना ही नहीं जानते हैं।

**विरलः खलु दाक्षिणात्येषु मांसाशनव्यवहारः। तदाकर्ण्यतां भो नैषधाः।**

**सुधा—विरल इति।** खलु=किल। दाक्षिणात्येषु=दक्षिणादेशवासिजनेषु। मांसाशनव्यवहारः—मांसासनस्य=मांसभक्षणस्य, व्यवहारः=व्यापारः। विरलः। तत्=अतः। भो नैषधाः=निषधनिवासिनः। आकर्ण्यताम्=श्रूयताम्।

हिन्दी—दक्षिण देशवासियों में कोई कोई ही मांस खाता है, अतः हे निषध-निवासियो, सुनो—

**आज्यप्राज्यपरान्नकूरकवलैर्मन्दां विधाय क्षुधां**
**चातुर्जातकसंस्कृतो नु शनकैरिक्षो रसः पीयताम्।**
**सम्भारस्पृहणीयतेमनरसामास्वाद्य किञ्चित्ततः**
**स्निग्धस्तब्धदधिद्रवेण सरसः शाल्योदनो भुज्यताम्॥ १२॥**

**अन्वयः**—आज्यप्राज्यपरान्नकूरकवलैः क्षुधां मन्दां विधाय चातुर्जातकसंस्कृतः इक्षोः रसः शनकैः पीयताम्। ततः सम्भारस्पृहणीयतेमनरसान् किञ्चिद् आस्वाद्य स्निग्धस्तब्धदधिद्रवेण सरसः शाल्योदनः भुज्यताम्॥ १२॥

**सुधा—आज्येति।** आज्यप्राज्यपरान्नकूरकवलैः—आज्यम् च तत् प्राज्यपरम्=अतिपर्याप्तघृतम्, तेन कूरम्=तन्नामोदनविशेषः, तस्य कवलैः। क्षुधाम्=बुभुक्षाम्। मन्दाम्=शिथिलाम्। विधाय=कृत्वा। चातुर्जातकसंस्कृतः—'त्वगेलापत्रकं चैव त्रिगन्धं च त्रिजातकम्। तदेव मरिचैर्युक्तं चातुर्जातकमुच्यते' इत्यनेन—एलामरिचेन संस्कृतः=कृतगुणान्तश्चातुर्जातकसंस्कृतः। इक्षोः=इक्षुदण्डस्य। रसः=द्रवः। शनकैः=मन्दम्। पीयताम्=पानं क्रियताम्। ततः=तत्पश्चात्। सम्भारस्पृहणीयतेमन-रसान्—सम्भारस्पृहणीयान्=मरिचादियुक्तस्वादिष्टान्, तेमनरसान्=शाकरसान्। किञ्चित्=किमपि। आस्वाद्य=आस्वादनं कृत्वा। स्निग्धस्तब्धदधिद्रवेण—स्निग्धेन=स्नेह-युक्तेन, स्तब्धेन=गाढेन, दधिद्रवेण=दधिरसेन। सरसः=रसयुक्तः। शाल्यो-दनः=शालिभक्तः। भुज्यताम्=खाद्यताम्। सरसः=सुनिष्पन्नदीर्घताण्डुलपाकजः। अतिविलन्नतादिदोषरहितश्च। दधिद्रवो वस्त्रगालितं दधि। शार्दूलविक्रीडितं वृत्तम्।

हिन्दी—पर्याप्त घृत में बने कूरनामक चावलों के भात के कवलों से भूख शान्त कर इलायची तथा मरीच (मिर्च) से युक्त ईख (गन्ने) के रस को धीरे-धीरे पीजिये। तत्पश्चात् विविध मसालों से पकाये गये सब्जियों के रस को थोड़ा सा चखकर चिकने, गाढ़े दधिरस से शाल्योदन (भात) खाइये॥ १२॥

**राजा तु 'प्रतीहार, विनिश्चीयतां किमयं बहिः कलकलव्यतिकरः' इत्यभिधाय तत्कालयोग्यपरिजनपरिवृतो भोक्तुमुपाविशत् ।**

सुधा—राजेति । राजा=नृपस्तु । प्रतीहार=अयि द्वारपाल ! विनिश्चीयताम्=निश्चीयताम् । अयम्=एषः । बहिः=बाह्यभागे । कलकलव्यतिकरः=कोलाहलध्वनिः किमिति । इति=एवम् । अभिधाय=कथयित्वा । तत्कालयोग्यपरिजनपरिवृतः—तत्कालयोग्यम्=तत्क्षणोचितम्, तथाविधेन परिजनेन=सेवकवृन्देन, परिवृतः=परावृतः । भोक्तुम्=खादितुम् । उपाविशत्=उपविवेश ।

हिन्दी—राजा—'हे प्रतीहार ! निश्चय करो कि यह बाहर कोलाहल क्या है' यह कहकर तत्कालोचित परिजनों से घिरा हुआ भोजन करने को बैठ गया ।

**त्वरितं च गत्वागतश्च स प्रतीहारो विज्ञापयाम्बभूव—देव, दमयन्त्या प्रहिताः सूपकाराः सैन्यजनम्, आब्राह्मणान्त्यजगोपालकम्, आकरितुरगवाहनम्, आसामन्तनियुक्तम् आस्वाद्यैस्तैस्तैरन्नविशेषैर्भोजयन्ति ।**

सुधा—त्वरितमिति । त्वरितम्=द्रुतं च । गत्वा=प्रस्थाय । आगतः=आयातः च । सः=असौ । प्रतीहारः=द्वारपालः । विज्ञापयाम्बभूव=निवेदयामास । देव=राजन् ! दमयन्त्या=भैम्या । प्रहिताः=प्रेषिताः । सूपकाराः=पाचकाः । सैन्यजनम्=बलवृन्दम् । आब्रह्मणान्त्यजगोपालम्—आ=समन्तात्, ब्राह्मणान्=विप्रान्, अन्त्यजान्=शूद्रान्, गोपालान्=गोपांश्च । आकरितुरगवाहनम्—आ=समन्तात्, करिणः=गजान्, तुरगान्=घोटकान्, वाहनानि च । आसामन्तनियुक्तम्—आसामन्तकान्=आश्रितनृपान् नियुक्तान् । आस्वाद्यैः=स्वादिष्टैः । तैस्तैः=तथाविधैः । अन्नविशेषैः=विशिष्टभोज्यान्नैः । भोजयन्ति=खादयन्ति ।

हिन्दी—शीघ्र जाकर तथा वापस आये हुये उस प्रतीहार ने निवेदन किया कि देव ! दमयन्ती द्वारा भेजे गये सूपकार ( पाचक ) सैनिकों को, ब्राह्मणों से लेकर शूद्रों तक सभी लोगों और ग्वालों को एवम् हाथी, घोड़ों, सामन्तों व कर्मचारियों को स्वादिष्ट पूर्व-वर्णित अन्न-विशेष से भोजन करा रहे हैं ।

**लग्नाः सर्वतो दृश्यन्ते पर्वताः पक्वान्नस्य, राशयः शाल्योदनस्य, स्तूपा सूपस्य, निर्झराः सर्पिषः, सिन्धवो मधुनः, निकाराः शर्करायाः, स्रोतांसि दधिदुग्धयोः, शैलाः शाकानाम्, निपानानि पानकानाम्, कुल्याः फलरसानाम्, कूटाः कषायाम्ललवणतिक्तमधुरोपदंशानाम् । एवमकार्पण्यमिच्छया भोजितं सैन्यम् ।**

सुधा—लग्ना इति । सर्वतः=परितः । पक्वान्नस्य=पक्वभोज्यपदार्थस्य । पर्वताः=भूधराः । इव दृश्यन्ते=अवलोक्यन्ते । शाल्योदनस्य=शालि-भक्तस्य । राशयः=राशिभूताः । सूपस्य=सूपखाद्यस्य । स्तूपाः=स्तम्भाः । सर्पिषः=घृतस्य । निर्झराः=स्रोतांसि । मधुनः=पुष्परसस्य । सिन्धवः=सागराः । शर्करायाः=इक्षुरसभूतायाः शर्करायाः । निकाराः=राशयः । दधिदुग्धयोः=दधिपयसोः । स्रोतांसि=निर्झराः ।

शाकानाम्, शैलाः=पर्वताः । पानकानाम्=पेयपदार्थानां । निपानानि=स्थानानि । फलरसानाम्=फलतत्त्वानाम् । कुल्याः=जलप्रवाहाः । कषायाम्ललवणतिक्तमधुरोपदंशानाम्=मधुरादिरसोपदंशानाम् । कूटाः=राशयः । लग्नाः=संलग्नाः । दृश्यन्त इति । एवम्=इत्थम् । इच्छया=अभिलाषया । सैन्यम्=बलम् । अकार्पण्यम्=उदारतायुक्तम् । भोजितम्=अशनं कारितम् ।

**हिन्दी**—यह पकवान के चारों ओर पहाड़, शालिभात के ढेर, दाल के ढेर, घी के झरने, शहद के सागर, शक्कर की राशियाँ, दही-दूध के सोते, सब्जियों के शैल, पेय पदार्थों के ढेर, फलों के रसों के नाले तथा कसैले-खट्टे-लवण-तीखे एवम् मधुर अचारों की राशियाँ दिखलाई पड़ रही हैं। इस प्रकार सेना को जीभर कर उदारतापूर्वक भोजन करा दिया गया है।

**अपि च—**

**भुक्तान्ते घृतदिग्धहस्ततलयोरुद्वर्तनं चन्दनं**
**पश्चान्नागरखण्डपाण्डुरदलैस्ताम्बूलदानक्रमः ।**
**एकैकस्य मृणालतन्तुमृदुनी दत्ते ततो वाससी**
**देव्या किञ्चिदचिन्त्यमेव भवतः सैन्यातिथेयं कृतम् ॥ १३ ॥**

अन्वयः—भुक्तान्ते, घृतदिग्धहस्ततलयोः चन्दनम् उद्वर्तनं, पश्चात् नागरखण्डपाण्डुरदलैः ताम्बूलदानक्रमः । ततः एकैकस्य मृणालतन्तुमृदुनी वाससी दत्ते । देव्या किञ्चित् अचिन्त्यम् एव भवतः सैन्यातिथेयं कृतम् ॥ १३ ॥

**सुधा**—भुक्तान्त इति । भुक्तान्ते=भोजनोपरान्तम् । घृतदिग्धहस्ततलयोः—घृतेन=आज्येन, दिग्धे=स्निग्धे, ये हस्ततले=करतले, तयोः । चन्दनम्=मलयजम् । उद्वर्तनम् । पश्चात्=तदनन्तरम् । नागरखण्डपाण्डुरदलैः—नागरैः=विदग्धैर्जनैः खण्डचन्ते=चर्व्यन्ते बनवासदेशोद्भवानि नागवल्लीदलानि, इति नागरखण्डानि तथाविधानि पाण्डुरदलानि=पीतवर्णपत्राणि, तैः । ताम्बूलदानक्रमः—ताम्बूलानां दानक्रमः=प्रदानक्रमः । ततः=तत्पश्चात् । एकैकस्य=प्रत्येकस्य । मृणालतन्तुमृदुनी—मृणालतन्तुम्=कमलतन्तुम्, इव मृदुनी=कोमले । वाससी=वस्त्रे । दत्ते=समर्पिते । देव्या=दमयन्त्या । किञ्चित्=किमपि । अचिन्त्यम् एव=अविचार्यम् एव । भवतः=स्वामिनः । सैन्यातिथेयम्=सैन्यस्यातिथेयम्=अतिथिसत्कारः । कृतम्=सम्पादितम् ।

**हिन्दी**—और भी—भोजन कर लेने के बाद घी से चिकनी बनी हाथों की हथेलियों पर चन्दन का उबटन, फिर नागर खण्ड सदृश पीले पत्तों वाले पान देने का क्रम, तदनन्तर प्रत्येक को कमल तन्तु जैसे कोमल दो (एक जोड़े) वस्त्र प्रदान किये। इस प्रकार दमयन्ती ने आपकी सेना का उदारतापूर्वक अतिथ्यसत्कार किया ॥ १३ ॥

**इयं च रसवती देवस्य तथा स्वहस्तपल्लवपरिमलनसंस्कृतैः पाकविशेषैरलङ्कृत्य स्वमुद्रया मुद्रिता प्रहिता—इत्यभिधाय व्यरंसीत् ।**

**सुधा**—इयमिति । इयम्=एषा च । तया=दमयन्त्या । स्वहस्तपल्लवपरिमलनसंस्कृतैः—स्वहस्त एव पल्लवे=निजकरपल्लवे, ताभ्यां परिमलनम्=यथोचितगन्ध-

द्रव्यक्षेपेण सुरभिकरणम्, तेन संस्कृतैः। पाकविशेषैः=विशिष्टपक्वान्नैः। अलङ्कृत्य =भूषयित्वा। स्वमुद्रया=आत्मनामाङ्कितमुद्रया। मुद्रिता=चिह्निता। रसवती प्रहिता=प्रेषिता। इति=एवम्। अभिधाय=कथयित्वा। व्यरंसीत्=विरराम।

हिन्दी—यह उस दमयन्ती द्वारा अपने करपल्लवों के यथोचित द्रव्य को डाल कर सुगन्ध युक्त पकाये गये विशेष प्रकार के पकवानों से अलंकृत कर रसवती भेजी गई है। यह कह कर ( वह ) चुप हो गया।

**राजा तु मनाक्तरलितशिराः सस्मितम्—'अहो निरतिशयमुदारगम्भीर-मुचितव्यवहारहारि लीलायितं तस्याः, स्पृहणीयपरिमलश्चायमपूर्व इव कोऽपि पाकक्रमः।**

**सुधा**—राजेति। राजा=नृपस्तु। मनाक्=किञ्चित्। तरलितशिराः—तरलितम् कम्पितम्, शिरः=उत्तमाङ्गम्, यस्य सः। सस्मितम्=स्मयेन सहितम्। अहो= आश्चर्यम्। तस्याः=दमयन्त्याः। लीलायितम्=क्रीडितम्। निरतिशयम्=अत्यन्तम्। उदारगम्भीरम्—उदारम्, गम्भीरञ्च तयोः समाहारः=उदारगहनम्। उचितव्यवहार-हारि=उपयुक्तव्यवहारोचितम्। अयम्=एषः। स्पृहणीयपरिमलः=मनोरमसुरभि-युक्तः। अपूर्वः=अद्भुतः। कोऽपि=कश्चिदपि। पाकक्रमः=रसवती पाचनक्रमः अस्तीति।

हिन्दी—राजा ने कुछ शिर हिलाकर ( कहा )—अहा, उस दमयन्ती का अत्यन्त उदार, गम्भीर तथा उपयुक्त व्यवहारोचित क्रिया-कलाप, तथा यह अद्भुत मनोरम सुरभियुक्त कोई पाकक्रम ( भोज्य सामग्री ) है।

**तथाहि—इदमम्लमप्यनम्लास्वादम्, इदमीषत्कषायमपि मधुरतां नीतम्, इदमेकरसमप्यनेकरसीकृतम्, इदमतिमृष्टतयाऽमृतमप्यतिशेते, रसवत्यामपि रसवती विदर्भराजात्मजा' इति विभावयंस्तांस्तया प्रहितान् पाकविशेषाना-दरेणास्वादयामास।**

**सुधा**—तथाहि इदमिति। तथा हि=यतोहि। इदम्=एतत्। अम्लम्=अम्लरस-युक्तम् अपि। अनम्लास्वादम्—अन् अम्लं स्वादं यस्य तत्=अम्लत्वरहितम्। ईषत् कषायम्=स्तोकं कषायरसयुक्तम्। अपि। मधुरताम्=मिष्ठताम्। नीतम्=प्रापितम्। एकरसम्=अद्वितीयरसम् अपि। अनेकरसीकृतम्=बहुरसयुक्तम्। अतिमिष्टतया= अतिमधुरतया। अमृतमपि=सुधामपि। अतिशेते=अतिशयस्थानमावहति। रसवत्याम् अपि रसवती=रसिका रागिणी वा। विदर्भराजात्मजा=विदर्भराजदुहिता। इति= एवम्। विभावयन्=सम्भावयन्। तया=दमयन्त्या। प्रहितान्=प्रेषितान्। तान्= कथितान्। पाकविशेषान्=विशिष्टपक्वान्नानि। आदरेण=सादरम्। आस्वादयामास।

हिन्दी—क्योंकि—यह खट्टा होता हुआ भी स्वाद में खट्टा नहीं है, थोड़ा थोड़ा कसैला होता हुआ भी मधुरतायुक्त है, एक प्रमुख रस वाला होकर भी अनेक रसों से परिपूर्ण कर दिया गया है। अधिक मिठास के कारण अमृत से भी बढ़कर है। रस-वती ( पाकक्रिया ) में भी दक्ष होती हुई रसिका विदर्भराज दुहिता है। इस प्रकार

सोचते हुये उस ( दमयन्ती ) द्वारा भेजे हुये उन पाकविशेषों ( खाद्यपदार्थों ) का आदर से राजा ने आस्वादन किया ।

**चिन्तितवांश्च—**

**षड्रसाः किल वैद्येषु भरतेऽष्टौ नवापि वा ।**
**तया तु पद्मपत्राक्ष्या सर्वमेकरसीकृतम् ॥ १४ ॥**

**अन्वयः**—किल वैद्येषु षड्रसाः, भरते अष्टौ वा नवापि । तया पद्मपत्राक्ष्या तु सर्वम् एकरसीकृतम् ॥ १४ ॥

**सुधा—चिन्तितवानिति** । चिन्तितवान् = विचारयामास । च = तथा ।

**षडिति** । किल = खलु । वैद्येषु = भिषजेषु । षड्रसाः = मधुराम्ललवणकटुकषायतिक्तेति, षट्संख्यका = रसाः । भरते = भरतस्य नाट्यशास्त्रे । अष्टौ = शृङ्गारहास्यादयः । वा = अथवा । नव=शान्तादियुक्ताः । अपि भवन्ति । ( किन्तु ) तया = दमयन्त्या । पद्मपत्राक्ष्या = कमलनेत्र्या तु । सर्वम् = सम्पूर्णम् । एकरसीकृतम् = उत्कृष्टास्वादीकृतम् । आत्मविषये वा एकानुरागीकृतम् । यदनेकरसं तत्कथमेकरसीभवेदिति विरोधं पुनरर्थस्तु शब्द उद्भावयति । अनुष्टुब्वृत्तम् ॥ १४ ॥

**हिन्दी**—और वह सोचने लगा—आयुर्वेद में छः रस—मधुराम्ललवणकटुकषायतिक्त तथा भरतमुनि के नाट्यशास्त्र में शृङ्गारादि आठ अथवा शान्तसहित नौ रस होते हैं ( किन्तु ) उस कमल-नयनी दमयन्ती ने तो सब एकरस ही कर दिया है ॥

**तथाहि—**

**अग्रस्थामिव चेतसः पुर इव व्यालम्बमानां दृशो-**
**र्जल्पन्तीमिव रुन्धतीमिव मनाङ् मुग्धं हसन्तीमिव ।**
**निद्रामुद्रितलोचना अपि वयं तां विश्वरूपायितां**
**पश्यामो बहिरन्तरे निशि दिवा मार्गेषु गेहेषु च ॥ १५ ॥**

**अन्वयः**—चेतसः अग्रस्थाम् इव, दृशोः पुरः व्यालम्बमानाम् इव, जल्पन्तीम् इव, रुन्धतीम् इव, मनाक् मुग्धं हसन्तीम् इव, निद्रामुद्रितलोचना वयं विश्वरूपायिताम् अपि तां बहिः अन्तरे निशि दिवा मार्गेषु गेहेषु च पश्यामः ॥ १५ ॥

**सुधा—अग्रेति** । चेतसः = चित्तस्य । अग्रस्थाम् = अग्रेऽवस्थिताम् । इव = यथा । दृशोः = चक्षुषोः । पुरः = समक्षम् । व्यालम्बमानाम् = वर्तमानाम् इव । जल्पन्तीम् = कथयन्तीम् इव । रुन्धतीम् = अवरुन्धतीम् यथा । मनाक् = स्तोकम् । मुग्धं हसन्तीम् इव = विहसन्तीं यथा । निद्रामुद्रितलोचना—निद्रया=निद्राहेतुना, मुद्रिते = मुकुलिते, निमीलिते वा, लोचने = नयने, येषाम् ते । वयम् । विश्वरूपायिताम्—विश्वम् = समस्तम्, रूपायिताम् = रूपयुक्ताम् अपि, ताम् = दमयन्तीम् । बहिः = बाह्यभागे । अन्तरे = हृदि गृहाभ्यन्तरे वा । निशि = निशायाम् । दिवा = दिवसे । मार्गेषु = वर्त्मसु । गेहेषु = भवनेषु च । पश्यामः = अवलोकयामः । अनेनात्मानुभवसम्भावनाद्वारेणैकरसत्वमेव व्यनक्ति । विश्वं रूपमस्येति विश्वरूपो हरिः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

हिन्दी—क्योंकि—चित्त के आगे स्थित, आँखों के सामने उपस्थित, मानों कुछ कहती हुई, रोकती हुई, कुछ मृदुहास करती हुई विश्वरूपायिता ( समस्त संसार के रूपों में व्याप्त ) उस दमयन्ती को अर्द्धनिमीलितनयनों वाले हम नींद के कारण आँखें बन्द हो जाने पर भी बाहर, भीतर, रात में, दिन में तथा मार्गों में, घरों में सभी स्थानों पर देख रहे हैं ॥ १५ ॥

एवमवधारयन् अतृप्त इव तया प्रहितेषु स्वहस्तपक्वपाकरसविशेषेषु, असन्तुष्टस्तत्कथायाम्, आचम्य, चन्दनागुरुपरिमलेन पाण्डुरितपाणिपल्लवः, लवङ्गकक्कोलकरम्बितताम्बूलमुत्सर्पिकर्पूरपरिमलमादाय, विकीर्णविविधकुसुमप्रकरहारिणी यक्षकर्दमाच्छच्छटोच्छोटितपर्यन्तभित्तिभागे लम्बितप्रलम्बजाम्बूनदपद्मदाम्नि धूपधूमामोदिनि चूर्णितकर्पूररङ्गरेखाभाजि भोजनान्तरमपरेऽपराह्णविनोदमण्डपे मनाग्विश्रम्य रणरणकाक्रान्तहृदयो दूरदिगन्तालोकनकुतूहलितः सरित्तीरोत्तम्भिताभ्रंलिहसौधस्कन्धभूमिमारुह्य च तस्यामूर्ध्व एव ध्रियमाणमायूरातपत्रयुगलः, सलीलालसपदैरितस्ततः परिक्रामन्, नेदीयसि सरित्संगमाम्भसि मध्याह्नमखिलमवगाहनसुखमनुभूय तीरमुत्तीर्णासु तिमिरशङ्कया कृतदूरचङ्क्रमणैश्चक्रवाकचक्रवालैराकुलमवलोक्यमानासु, पुलिनपांसुविहरणविरामे विकसितविविधवीरुन्धि रोधांसि दन्तीषु दन्तिपंक्तिषु दत्तदृष्टिः, विरलनलिनीपत्रान्तरालसुप्तोत्थितस्य, किंचिदवाञ्चितचटुलचञ्चोः, चरतः चटुलचञ्चरीकिणि विकचकमलवने, राजहंसकुलकलापस्य करिकलभदन्तदण्डपाण्डुबिसकाण्डभङ्गटङ्कारानाकर्णयन्, अपराह्णमज्जनागताभिः कुण्डिनपुरपुरन्ध्रिभिराश्चर्यरसोर्मिमुषितनिमेषैर्निष्कम्पनीलोत्पलपलाशलीलायमानैर्नेत्रपुटैरापीयमानमुखेन्दुद्युतिः, दर्शिततरङ्गभ्रूभङ्ग्या दूरोच्छलद्बालशफरीच्छलेन विस्फारितविलोचनया, सरित्सङ्गमसलिलाधिदेवतयाऽपि विलोक्यमानरूपसम्पत्तिरिव, क्षणमविरलचलच्चञ्चरीकचक्रचुम्बिताम्बुरुहासु क्रीडाकमलसरसीषु, क्षणमुपान्तपङ्क्तीभूतमञ्जरितसहकारराजिषु स्मरवाजिवाह्यालीषु, क्षणमुत्पतत्पताकापटपल्लवराजितासु भीमभूपालान्तःपुरप्रासादपङ्क्तिषु, क्षणमवकीर्णकुसुमरङ्गावलीरम्यासु नगरवीथीषु विश्रान्तविलोचनश्चिरमवतस्थे ।

सुधा—एवमवधारयन्निति । एवम्=इत्थम् । अवधारयन्=विचारयन् । अतृप्तः इव=अतृप्तो तथा । तयां=दमयन्त्या । प्रहितेषु=प्रस्थितेषु । स्वहस्तपक्वपाकरसविशेषेषु—स्वहस्ताभ्याम्=निजकराभ्याम्, पक्वाः ये पाकरसविशेषास्तेषु=निजकरपाचित-पक्वान्नविशिष्टेषु । असन्तुष्टः, तत्कथायाम्=तस्याः वार्त्तायाम् । आचम्य=आचमनं कृत्वा । चन्दनागुरुपरिमलेन—चन्दनस्य=मलयजस्यागुरोश्च यः परिमलः=सुगन्धिस्तेन । पाण्डुरितपाणिपल्लवः—पाण्डुरिते=पीतवर्णकृते । पाणिपल्लवे=

करदले, यस्य सः। लवङ्गकक्कोलकरम्बिततताम्बूलम्—लवङ्गेन कक्कोलेन च करम्बितम्=मिश्रितम् यत्ताम्बूलम्, तत्। उत्सर्पिकर्पूरपरिमलम्—उपसर्पि=विकिरत्, यत् कर्पूरपरिमलम्=कर्पूरसुगन्धिः, तत्। आदाय=गृहीत्वा। विकीर्णविविधकुसुमप्रकरहारिणी—विकीर्णानाम्=विकसितानाम्, विविधकुसुमानाम्=विभिन्नपुष्पाणाम्, यः प्रकरः=समूहः, तं हरतीति सा। यक्षकर्दमाच्छच्छटोच्छोटितपर्यन्तभित्तिभागे—यक्षकर्दमस्याच्छच्छटया उच्छोटितः=शोभितः, यः पर्यन्तभित्तिभागस्तस्मिन् लम्बितप्रलम्बजाम्बूनदपद्मदामानि – लम्बितानि=प्रलम्बितानि, प्रलम्बानि=दीर्घाणि, जाम्बूनदपद्मदामानि=स्वर्णकमलमालाः, यत्र तस्मिन्। धूपधामामोदिनि—धूपधामस्यामोदः=सुगन्धिर्यत्र तस्मिन्। चूर्णितकर्पूररङ्गरेखाभाजि—चूर्णितेन=पिष्टेन, कर्पूररङ्गेण, रेखा=पङ्क्तयः, भजन्ति=शोभन्ते, यत्र तथाविधे। अपरे=अन्ये। अपराह्णविनोदमण्डपे=मध्याह्नोपरान्तमनोरञ्जनमण्डपे। भोजनानन्तरम्=भोजनं पश्चात्। मनाक्=किञ्चित्। विश्रम्य=विश्रामं कृत्वा। रणरणकाक्रान्तहृदयः—रणरणकेन=उत्साहेन, आक्रान्तम्=आविष्टम्, हृदयम्=चेतो यस्य सः। दूरदिगन्तालोकनकुतूहलितः—दूरम्=सुदूरम्, दिगन्तम्=दिशापर्यन्तम्, आलोकनेन=प्रकाशितेन, कुतूहलितः=कौतूहलयुक्तः। सरित्तीरोत्तम्भिताभ्रंलिहसौधस्कन्धभूमिम्—सरितः=नद्याः, तीरे=तटे, उत्तम्भितस्य=तत्कालारोपितस्य, जङ्गमस्य चित्रकूटाख्यस्य अभ्रंलिहस्य=गगनचुम्बिनः, सौधस्य=राजप्रासादस्य, या स्कन्धभूमिः=सैन्यशिविरभूमिस्ताम्। आरुह्य=अधिरुह्य। तस्याम्=तत्स्कन्धभूमौ, ऊर्ध्वं एव=उपर्येव। ध्रियमाणमायूरातपत्रयुगलः—ध्रियमाणम्=स्थाप्यमानम्, मायूरातपत्रयुगलम्=मयूराकृतिच्छत्रद्वन्द्वम्, येन सः। सलीलालसपदैः—सलीलम्=सक्रीडम्, सकौतुकं वा, अलसपदानि, तैः। इतस्ततः=दिक्षु। परिक्रामन्=परिचालयन्। नेदीयसि=निकटतरे। सरित्सङ्गमाम्भसि—सरितोः=नद्योः, सङ्गमस्य=सम्मिलनस्य, यदम्भस्तस्मिन्। मध्याह्नम्=मध्यन्दिनम्। अखिलम्=सम्पूर्णम्। अवगाहनसुखम्=निमज्जनानन्दम्। अनुभूय=अनुभूतिं कृत्वा। तीरम्=तटम्। उत्तीर्णासु=पारंगतासु। तिमिरशङ्कया=अन्धकारसन्देहेन। कृतदूरचङ्क्रमणैः—कृतम्=विहितम्, दूरे चङ्क्रमणम्=परिभ्रमणम्, यैस्तैः। चक्रयाकचक्रवालैः=चक्रवाककुलैः। आकुलम्=व्याकुलम्। अवलोक्यमानासु=दृश्यमानासु। पुलिनपांसुविहरण-विरामे—पुलिनस्य=तटवर्तिनः, पांसुनि=रेणौ, विहरणम्=विचरणम्, तस्य विरामे=स्थगिते। विकसितविविधवीरुन्धि—विकसितानि=विकचितानि, विविधानि=अनेकानि, वीरुधानि=लताकुञ्जानि, यत्र तथाविधानि, रोधांसि=तटानि। दन्तीषु=करिषु। दन्तपंक्तिषु=रदःपंक्तिषु। दत्तदृष्टिः=न्यस्तदृष्टिः। विरलनलिनीपत्रान्तरालसुप्तोत्थितस्य—विरले=यस्मिन् कस्मिन्, नलिनीपत्रस्य=कमलदलस्यान्तराले, सुप्तात्=शयनात्, उत्थितस्य=उद्गतस्य। किञ्चित्=किमपि। अवाञ्चितचटुलचञ्चोः—अवाञ्चितम्=अधःकृतम्, चटुलम् चञ्चुर्येन तथाविधस्य। चरतः=भ्रमतः। चटुलचञ्चरीकिणि=चपलभ्रमरे। विकचकमलवने—विकसितपद्मवने। राजहंसकुलकलापस्य=हंस-

वृन्दस्य । करिकलभदन्तदण्डपाण्डुबिसकाण्डभङ्गटङ्कारान्—करिकलभस्य=गजशावकस्य, दन्तसमम्=रदसदृशम्, दण्डपाण्डु=शुभ्रम् । कमलदण्डं तस्य विसकाण्डस्य=विसतन्तोः, यो भङ्गः=नाशः, तस्य टङ्कारान्=ध्वनीन् । आकर्णयन्=शृण्वन् । अपराह्णमज्जनागताभिः—अपराह्णे=मध्याह्नोपरान्ते, मज्जनाय=स्नानाय, आगताभिः=आगच्छन्तीभिः । कुण्डिनपुरपुरन्ध्रिभिः=कुण्डिननगरयुतिभिः, आश्चर्यरसोर्मिमुषितनिमेषैः—आश्चर्यरसस्य=आश्चर्यानन्दस्य, उर्मिभिः=तरङ्गैः, मुषितानि निमेषाणि=पक्ष्माणि, येषां तैः । निष्कम्पनीलोत्पलपलाशलीलायमानैः—निष्कम्पानि=स्थिराणि, नीलोत्पलानि=नीलकमलानि, तेषां यानि पलाशानि=दलानि, तथा लीलायमानानि=शोभायमानानि, यानि तैः । नेत्रपुटैः=नयनपुटैः । आपीयमानमुखेन्दुद्युतिः—आपीयमाना=पीयमाना, मुखेन्दोः=मुखचन्द्रस्य, द्युतिः=कान्तिर्यस्य सः । दर्शिततरङ्गभ्रूभङ्ग्या=प्रदर्शितोर्मिभ्रूभङ्ग्या । दूरोच्छलद्बालशफरीच्छलेन—दूरम् उच्छलन्ती याः बालशफर्यः=लघुमत्स्याः, तासां छलेन=मिषेण । विस्फारितविलोचनया—विस्फारिते=विस्तारिते, लोचने=नयने यया, तथाविधया । सरित्सगमसलिलाधिदेवतया=नदीसङ्गमजलाधिष्ठात्रिदेव्या । अपि । विलोक्यमानरूपसम्पत्तिः इव=वीक्ष्यमाणरूपसम्पदिव । क्षणम्=निमिषम् । अविरलचलच्चञ्चरीकचक्रचुम्बिताम्बुरुहासु—अविरलम्=निरन्तरम्, चलता=भ्रमता । चञ्चरीकचक्रेण=अलिसमूहेन, चुम्बितानि=आलिङ्गितानि, अम्बुरुहाणि=कमलानि, यासां तथाविधासु । क्रीडाकमलसरसीषु=क्रीडाकमलतडागेषु । क्षणम्=निमिषमेकम् । उपान्तपङ्कीभूतमञ्जरितसहकाराजिषु—उपान्ते=पार्श्वे, पङ्कीभूताः=कर्दमीभूताः, मञ्जरिताः=मञ्जरीयुक्ताः, ये सहकाराः=आम्रवृक्षास्तेषां, राजयः=पङ्क्तयः, यत्र तथाविधासु । स्मरवाजिवाह्यालीषु—स्मरवाजिनः=कामाश्वस्य, वाह्यालीषु=विहारभूमिषु । उत्पतत्पताकापटपल्लवराजितासु—उत्पतन्तीनाम्=उड्डीयन्तीनाम्, पताकानाम्=तोरणानाम्, पटपल्लवानि=वस्त्रपल्लवानि, राजितानि=शोभितानि, यत्र तथाविधासु । भीमभूपालान्तःपुरप्रासादपंक्तिषु—भीमभूपालस्य = विदर्भनरेशस्यान्तःपुरस्य, ये प्रासादाः=राजभवनानि, तेषां पंक्तिषु=राजिषु । अवकीर्णकुसुमरङ्गावलीरम्यासु—अवकीर्णानाम्=विकीर्णानाम्, रङ्गावलीनाम् रम्याः=रमणीयास्तासु । नगरवीथीषु=पुरवीथीषु । विश्रान्तविलोचनः=अपलकनयनः । नृपः नलः । चिरम्=बहुकालम् । अवतस्थे=अतिष्ठत् ।

**हिन्दी**—इस प्रकार विचार करते हुए उस ( दमयन्ती ) के द्वारा भेजे गये तथा उसी के द्वारा पकाये गये विशेष प्रकार के पकवानों में वह अतृप्त-सा रह गया । उसकी चर्चा से उसका मन नहीं भर सका । आचमन कर चन्दन तथा अगुरु की सुगन्ध से पाण्डुवर्ण जैसे पाणिपल्लव वाले ( राजा ) ने लौंग तथा कक्कोल ( दालचीनी ) से युक्त जिससे कपूर की सुगन्ध निकल रही थी, पान लिया । फिर अपराह्ण ( दोपहर बाद ) मनोरञ्जन मण्डप में जिसकी दीवारें विभिन्न प्रकार के फूलों की बिखेरती हुई सुगन्ध वाली थी । यक्षकर्दम जैसी स्वच्छ, छटा से मिश्रित लम्बी

स्वर्ण कमल की मालाएँ लटक रहीं थीं। धूप के धुएँ की सुगन्ध से युक्त कपूर के चूर्ण की रेखाओं से शोभित वह मण्डप था। भोजनोपरान्त उस मण्डप में थोड़ा विश्राम कर, उत्साहित हृदय, दूर दिशाओं में देखने से कौतूहल-युक्त ( राजा ) नदी तट पर बने गगनचुम्बी राजप्रासाद की स्कन्धभूमि ( ऊपरी भाग ) पर चढ़ गया जिसके ऊपर ही बने मयूराकृति के दो छत्र लगे थे ( वह ) कौतुक से आलस्य युक्त कदमों से इधर-उधर घूमता हुआ निकट ही नदियों के संगम जल में दोपहर को पूर्ण स्नान का आनन्द लेकर किनारे पर निकले हुए हाथियों की पंक्तियों को देखने लगा। अन्धकार के भ्रम से चक्रवाक पक्षी दूर चक्कर काटते हुये व्याकुल हो रहे थे। हाथियों ने पुलिन की बालू में घूमना बन्द कर दिया था। तटवर्ती विविध वृक्ष लताएँ विकसित थीं। किसी किसी नलिनी दल के मध्य सोने से उठे, कुछ-कुछ खुली चञ्चल चोंच को थोड़ा नीचे किये चपल भौंरों से युक्त विकसित कमलवन में राजहंस-समूह घूमने लगा था। हाथियों के बच्चों के दाँतों के समान शुभ कमल-दण्ड को ( हंसों द्वारा ) तोड़े जाने की ध्वनि सुनते हुए, अपराह्न में स्नान के लिए आईं कुण्डिनपुर की रमणियों द्वारा आश्चर्य रस की लहरियों में डूबते हुये अपलक कम्पन-हीन नीलकमलदल के विलास को प्रस्तुत करने वाले नयनों से उनके मुखचन्द्र की कान्ति को पी रही थीं। तरङ्ग रूपी भ्रूभङ्गिमा दिखलाकर दूर उछलती हुई छोटी-सी मछली के बहाने आश्चर्य चकित नेत्रों से मानों नदी सङ्गम की जल देवी रूप-सम्पदा को देख रही थी। क्षण भर अविरल चञ्चल भौंरों द्वारा चुम्बित कमलों वाली क्रीड़ा-कमल-सरोवरों में, क्षण भर समीपवर्ती पंक्तिवद्ध खड़े बौराये आम्र-वृक्षों की कतारों में कामरूपी अश्व की बाह्य लीलाओं में, क्षण भर उड़ रही पताकाओं के पट-पल्लवों से शोभित नृपति भीम के अन्तःपुर के भवनों की पंक्तियों में, क्षण भर बिखरी पुष्परङ्गावली से रम्य बनी नगरवीथिकाओं में अपने नयनो को विश्राम देता हुआ ( राजा नल ) बहुत देर तक खड़ा रहा।

**चिन्तितवांश्च—**

**नोद्याने न तरङ्गिणीपरिसरे नो रम्यहर्म्ये न वा**
**पुष्प्यत्पुष्करगर्भगुञ्जदलिषु क्रीडातडागेष्वपि।**
**वात्या घूर्णितशीर्णपर्णतरला वृष्टिर्मदीयाधुना**
**लुभ्यल्लुब्धकभीषितेव हरिणी श्रान्तापि विश्राम्यति ॥ १६ ॥**

**अन्वयः**—वात्या घूर्णितशीर्णपर्णतरला मदीया दृष्टिः अधुना श्रान्ता अपि लुभ्यल्लुब्धकभीषिता हरिणी इव न उद्याने न तरङ्गिणीपरिसरे नो रम्यहर्म्ये, वा न पुष्प्यत्पुष्करगर्भगुञ्जदलिपु क्रीडातडागेषु अपि विश्राम्यति ॥ १६ ॥

**सुधा**—चिन्तितवानिति। चिन्तितवांश्च=विचारयामास च—

**नोद्यान इति।** वात्या=झञ्झावायुना। घूर्णितशीर्णपर्णतरला—घूर्णिता, शीर्णपर्णम्=जीर्णपत्रम् इव, तरला=चञ्चला। मदीया=मम। दृष्टिः=दृक्। अधुना=सम्प्रति। श्रान्ता=श्रमयुक्ता अपि। लुभ्यल्लुब्धकभीषिता—लुभ्यता=लोभ-

युक्तेन, लुब्धकेन=व्याधेन, भीषिता=त्रस्ता। हरिणी=मृगी इव। न=नैव। उद्याने=उपवने। तरङ्गिणीपरिसरे=नदीतटे। नो रम्यहर्म्ये=नैव रमणीये भवने। वा=अथवा। पुष्प्यत्पुष्करगर्भगुञ्जदलिषु—पुष्प्यताम्=विकचितानाम्. पुष्कराणाम्=कमलानाम्, गर्भे=अन्तरे, गुञ्जन्तः=गुञ्जारवं कुर्वन्तः, अलयः=मधुकराः यत्र तथाविधेषु। तडागेषु=सरसीषु अपि। न विश्राम्यति=विश्रामं नो लभते। अत्रोपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

हिन्दी—( वह ) सोचने लगा—आँधी में फँसी टकटकी बाँधे नेत्रों से देखती सूखे पत्ते जैसी काँपती हुई हरिणी के समान मेरी दृष्टि न तो उद्यान में टिकती है न नदी तट पर, न रमणीक भवनों पर और न खिल रहे कमलों के अन्दर गुनगुनाते भौंरों वाले तड़ागों में ही विश्राम पा रही है ॥ १६ ॥

अपि च—

**न गम्यो मन्त्राणां न च भवति भैषज्यविषयो**
**न चापि प्रध्वंसं व्रजति विहितैः शान्तिकशतैः।**
**भ्रमावेशादङ्गे कमपि विदधद्भङ्गमसमं**
**स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ १७ ॥**

अन्वयः—अयं स्मरापस्मारः न मन्त्राणां गम्यः न च भैषज्यविषयः भवति, अपि च न विहितैः शान्तिकशतैः प्रध्वंसं व्रजति। भ्रमावेशात् कम् अपि अङ्गम् असमं विदधत् दृशं भ्रमयति च घूर्णयति ॥ १७ ॥

**सुधा—न गम्य इति।** अयम्=एषः। स्मरापस्मारः=स्मररूपः अपस्माररोगः। मन्त्राणां गम्यः, न=नास्ति। भैषज्यविषयः=ओषधिना शमनयोग्यः। अपि न भवति। अपि च न=नैव। विहितैः=कृतैः। शान्तिकशतैः=शतशान्तिपाठाद्युपायैः। प्रध्वंसम्=विनाशम्। व्रजति=याति। भ्रमावेशात्=भ्रान्त्यावेगात्। कम् अपि अङ्गम्=शरीरभागम्। असमम्=असह्यम्। विदधन्=कुर्वन्। दृशम्=दृष्टिम्। भ्रमयति=भ्रमे पातयति। च=तथा। घूर्णयति=मोहयति। शिखरिणीवृत्तम् ॥१७॥

हिन्दी—और भी—यह काम रूपी अपस्मार ( मृगी ) रोग न तो मन्त्रों से दूर किये जाने योग्य है न औषधि द्वारा ही ठीक किया जा सकता है और न किये गये सैकड़ों शान्तिपाठादि उपायों से वह विनाश को प्राप्त होता है। भ्रम के आवेश से किसी न किसी अङ्ग को वह असह्य वेदना युक्त करता हुआ दृष्टि को भ्रमित कर देता है तथा मूर्च्छित कर देता है ॥ १७ ॥

किञ्चान्यदद्भुतम्—

**पौष्पाः पञ्चशराः शरासनमपि ज्याशून्यमिक्षोर्लता**
**जेतव्यं जगतां त्रयं प्रतिदिनं जेताप्यनङ्गः किल।**
**इत्याश्चर्यपरम्पराघटनया चेतश्चमत्कारयन्**
**व्यापारः सुतरां विचारपदवीवन्ध्यो विधेर्वन्द्यताम् ॥ १८ ॥**

**अन्वयः**—पञ्चशराः पौष्पाः, शरासनम् अपि ज्याशून्यम् इक्षोः लता, जेतव्यं जगतां त्रयं, प्रतिदिनम् अपि अनङ्गः जेता किल इति आश्चर्यपरम्पराघटनया चेतः चमत्कारयन् विधेः विचारपदवीवन्ध्यः व्यापारः सुतरां वन्द्यताम् ॥ १८ ॥

**सुधा**—किञ्चेति। किञ्च=किन्तु, अन्यत्=अपरम्। अद्भुतम्=विचित्रम्।

**पौष्पा इति।** (स्मरस्य) पञ्चशराः=पञ्चबाणाः। पौष्पाः=पुष्पमयाः सन्ति। शरासनम्=धनुः अपि। ज्याशून्यम्=प्रत्यञ्चाविरहितम्। इक्षोः=इक्षुदण्डस्य लता। जेतव्यम्=जयनीयम्। जगतां त्रयम्=त्रिभुवनम्। प्रतिदिनम्=प्रत्यहम् अपि। अनङ्गः=मदनः। जेता=विजयी। किल=खलु। शरासनस्य ज्याशून्यस्य शरापेक्षया द्वितीयश्च जेतुरनङ्गस्य प्रतिदिनजेतव्यजगत्त्रयापेक्षया वैषम्यव्यञ्जकोऽत्र प्रथमः 'अपि' शब्दः। आश्चर्यपरम्पराघटनया—आश्चर्यपरम्परायाः घटना, तया। चेतः=चित्तम्। चमत्कारयन्=चमत्कारमुत्पादयन्। विधेः=विधातुः। विचारपदवीबन्ध्यः=विचारपदवीरोधकः। व्यापारः=कार्यम्। सुतराम्=नितराम् वन्द्यताम्=नमस्क्रियताम् ॥ १८ ॥

**हिन्दी**—बल्कि और भी विचित्र बात है—(मदन के) पाँचों बाण पुष्पों के ही हैं, धनुष भी ज्या (डोरी) रहित इक्षुलता (गन्ना) है। जीतने का क्षेत्र त्रिभुवन है और उसका प्रतिदिन जेता अनङ्ग (शरीररहित) ही है। इन विचित्र परम्पराओं की घटना से चित्त को चमत्कृत करता हुआ विधाता का विचार-पदवी से शून्य व्यापार वन्दनीय है ॥ १८ ॥

**एवमनेकविधवितर्कतरलितहृदये कुण्डिननगरवीथीविश्रान्तदृशि शनैरुद्वेल्लितमल्लिकाक्षपल्लवस्य मृदुतरतरङ्गितसरितः कमलवनवायोः समर्पितवपुषि निषधभूभुजि, भुजगनिर्मोकधवले वसानो वाससी, रणन्मणिकङ्कणैराकूर्परं पूरितप्रकोष्ठः श्रीखण्डपिण्डपाण्डुरिततनुरपूर्व इव पर्वतकः प्रतीहारसूचितः प्रविवेश।**

**सुधा—एवमिति।** एवम्=इत्थम्। अनेकविधवितर्कतरलितहृदये—अनेकविधैः=बहुप्रकारैः, वितर्कैः=तर्कैः, तरलितम्=कम्पितम्, हृदयम्=चेतो यस्य तस्मिन्। कुण्डिननगरवीथीविश्रान्तदृशि—कुण्डिननगरस्य=कुण्डिनपुरस्य, वीथीषु विश्रान्ता दृक्=दृष्टिर्यस्य तस्मिन्। शनैः=मन्दम्। उद्वेल्लितमल्लिकाक्षपल्लवस्य—उद्वेल्लितानि=उत्कम्पितानि, मल्लिकानाम्=तन्नामहंसविशेषणाम्, अक्षपल्लवानि येन तथाविधः। मृदुतरतरङ्गितसरितः—अतिशयेन मृदु मृदुतरम्, मृदुतरम्=मन्दतरम्, तरङ्गिता=कम्पिता सरित् येन तस्य। कमलवनवायोः=अम्भोजवनवातस्य। समर्पितवपुषि—समर्पितं वपुः येन तस्मिन्=अर्पितशरीरे। निषधभूभुजि=निषधनृपे। भुजगनिर्मोकधवले—भुजगस्य=सर्पस्य, केचुलमिव धवले=उज्ज्वले। वाससी=वस्त्रे। वसानः=बिभ्राणः। रणन्मणिकङ्कणैः—रणद्भिः=क्वणद्भिः, मणिकङ्कणैः=मणिवलयैः। आकूर्परम् मणिबन्धपर्यन्तम्। पूरितप्रकोष्ठः=भरित-प्रकोष्ठः। श्रीखण्डपिण्डपाण्डुरिततनुः—श्रीखण्डस्य=चन्दनस्य पिण्डेन पाण्डुरितम्=पीतवर्णं सञ्जातम्, तनुः=शरी-

रम् यस्य सः । अपूर्वः=विलक्षणः, इव पर्वतकः=पर्वतकनामकः । प्रतीहारसूचितः—प्रतीहारेण=द्वारपालेन, सूचितः=अनुमतः । प्रविवेश=प्राविशत् । चिरदृष्टस्यापि पर्वतकस्य वामनस्यापूर्वत्वमिह पूर्वमभूषितस्य सम्प्रति पारितोषिकभूषणभूषितत्वाद्दयितोदन्तप्रश्नातात्पर्याङ्का ।

हिन्दी—उस प्रकार बहुविध तर्कों से तरलित हृदय, कुण्डिन नगर की वीथियों में दृष्टि डाले शनैः शनैः मल्लिकाक्ष जाति के हंस विशेष के पंखों को कम्पित और अत्यन्त मृदुल तरङ्गों से युक्त नदी के कमल-वन की वायु को निषधराज के शरीर को सौंप दिये जाने पर, साँप की केचुली के समान शुभ्र वस्त्रयुगल धारण किए, बजती हुई मणिकङ्कणों से प्रकोष्ट को पूरित किये हुये, प्रतिहार से अनुमति लिए हुए अद्भुत जैसा लग रहे पर्वतनामक बौने ने प्रवेश किया ।

**प्रविश्य च प्रकटितप्रणयप्रणामः प्रभुणा सविस्मयस्मितहुङ्कारेणाभिभाषितः स्तोकोन्नमितभ्रूसंज्ञया विज्ञापयितुमारेभे ।**

**सुधा—प्रविश्येति ।** प्रविश्य=प्रवेशं कृत्वा । प्रकटितप्रणयप्रणामः—प्रकटितः प्रणयेन प्रणामः=नम्रतया प्रणतिर्येन सः । प्रभुणा=स्वामिना । सविस्मयस्मितहुङ्कारेण —सविस्मयम्=साश्चर्यम्, स्मितेन=मृदुहासयुक्तेन हुङ्कारेण='हुं' इति ध्वनिना । अभिभाषितः=कथितः । स्तोकोन्नमितभ्रूसंज्ञया—स्तोकम्=किञ्चित् उन्नमिता=उत्थापिता या भ्रू, तस्याः संज्ञया=संकेतेन । विज्ञापयितुम्=सूचयितुम् । आरेभे=प्रारभत ।

हिन्दी—प्रवेश कर नम्रता से प्रणाम करना प्रकट कर तथा महाराज के द्वारा सविस्मय मुस्कराकर हुंकार किये जाने पर थोड़ी सी भौंह ऊँची कर संकेत से (उसने) कहना आरम्भ किया ।

**'देव श्रूयताम् । इतो गतवानहम् । अनन्तरमतिशयितस्वर्गान्मार्गाननेकविधचर्चाचारूणि चत्वराणि विलङ्घ्य, विहितमनःप्रसादान् प्रासादानवलोकयन्, इतस्ततः सस्मितस्मरालसचलद्वेलाविलासिनीविकारकूणितकोणेक्षणाक्षिप्तहृदयः सेवाविरामनिःसरत्सामन्तसङ्कुलम्, अविरलगलन्मधुमञ्जरीपुञ्जपिञ्जरितसरससहकारवननिकुञ्जपुञ्जितपुंस्कोकिलकुलकलरवरमणीयोद्यानमालावलयितम्, उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षह्लेषितराजवल्लभतुरङ्गम्, उत्तुङ्गशृङ्गसङ्गतमङ्गलध्वजम्, अङ्गणोत्सङ्गरङ्गत्क्रीडाकुरङ्गविहङ्गम्, अभङ्गाङ्गरक्षिरक्षितकक्षान्तररममाणराजकुमारकम्, अतिसूक्ष्ममुक्ताफलरचिततरङ्गरम्यरङ्गरेखाराजिराजिताजिरं राजभवनमविशम् ।**

**सुधा—देव इति ।** देव=महाराज ! श्रूयताम्=आकर्ण्यताम् । इतः=अस्मात् स्थानात् । अहम्=पर्वतकः । गतवान्=प्रस्थितवान् । अन्तरम्=पश्चात् । अतिशयितस्वर्गान्=स्वर्गादप्यतिशयसुन्दरान् । मार्गान्=पथः । अनेकविध-

चर्चाचारूणि—अनेकविधानि=बहुविधानि, चर्चाचारूणि=वार्तारुचिराणि। चत्वाराणि=चत्वरवर्त्मानि। विलङ्घ्य=उल्लङ्घ्य। विहितमनःप्रसादान्=कृतचेतःप्रसन्नान्। प्रासादान्=भवनानि। अवलोकयन्=पश्यन्। इतस्ततः। सस्मितस्मरालसचलद्वेलाविलासिनीविकारकूणितकोणेक्षणाक्षिप्तहृदयः—सस्मितम्=सहासम्, स्मरालसेन=कामालसेन, चलन्तीनाम्=गच्छन्तीनाम्, वेलाविलासिनीनाम्=वाराङ्गनानाम्, विकार-कूणितेन=विकार-वक्रेण, कोणेनाक्ष्णा=वंकिमनयनेन, आक्षिप्तम्=आकुलितम्, हृदयम्=चेतः, यस्य तथाविधः। सेवाविरामनिःसरत्सामन्तसङ्कुलम्—सेवाविरामे=सेवाकार्यसमाप्तौ, निःसरद्भिः=निर्गच्छद्भिः, सामन्तैः=सामन्तजनैः, सङ्कुलम्=परिपूर्णम्। अविरलगलन्मधुमञ्जरीपुञ्जपिञ्जरितसरससहकारवननिकुञ्जपुञ्जितपुंस्कोकिलकुलकलरवरमणीयोद्यानमालावलयितम्—अविरलम् = अनवरतम्, गलता=पतता, मधुमञ्जरीपुञ्जेन=पुष्परसमञ्जरीराशिना, पिञ्जरितानि=पीतवर्णंकृतानि, सरसानि=रुचिराणि, सहकारवननिकुञ्जानि=आम्रवननिकुञ्जानि, तेषु पुञ्जितानाम्=राशिकृतानाम्, पुंस्कोकिलानाम्=पिकानाम्, कुलम्=वृन्दम्। तस्य कलरवेण=कोलाहलेन, रमणीया, या उद्यान-माला=उद्यान-पंक्तिस्तया, बलयितम्=परिवृतम्। उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षह्रेषितराजवल्लभतुरङ्गम्—उपान्ते=पार्श्वे, मणिमन्दुरामन्दिरेषु=मणिनिर्मितवाजिशालासु, निबद्धाः=बद्धाः, स्निग्धपोषणस्य=स्निग्धपुष्टतायाः, उत्कर्षहर्षेण=महत्या प्रसन्नतया, ह्रेषिताः=ह्रेषाध्वनिकृताः, राजवल्लभतुरङ्गाः=राजपुत्रवाजिनः, यत्र तथाविधम्। उत्तुङ्गशृङ्गसङ्गतमङ्गलध्वजम्—उत्तुङ्गेषु,=उन्नतेषु, शृङ्गेषु=शिखरेषु, संगतानि=सम्पन्नानि, मंगलध्वजानि=मांगलिकध्वजानि, यत्र तथाविधम्। अङ्गणोत्सङ्गरङ्गत्क्रीडाकुरङ्गविहङ्गम्—अङ्गणोत्सङ्गेषु=अजिरेषु, रङ्गन्तः=विनुदन्तः, क्रीडाकुरङ्गाः=क्रीडामृगाः, विहङ्गाश्च, यत्र तथाविधम्। अभङ्गाङ्गरक्षिरक्षितकक्षान्तररममाणराजकुमारकम्—अभङ्गाङ्गरक्षिणा=सम्पूर्णरक्षिवर्गेण, रक्षिते=संरक्षितेः, कक्षान्तरे=अन्यकक्षभागे, रममाणः=विहरमाणः, राजकुमारः=राजपुत्रः यत्र तथाविधम्। यतिसूक्ष्ममुक्ताफलरचिततरङ्गरम्यरङ्गरेखाराजिराजिताजिरम्—अतिसूक्ष्मैः, मुक्ताफलैः=अतिक्षुद्रमुक्तकैः, रचिताः=निर्मिताः, ये तरङ्गास्तैः, रम्याः=रमणीया रङ्गरेखाराजिः=रङ्गपंक्तिराशिः, तेन राजितम्=शोभितम्। अजिरम्=प्राङ्गणम् यस्य तादृशम्। राजभवनम्=राजप्रासादम्। अविशम्=अहं प्राविशम्।

**हिन्दी**—हे महाराज ! सुनिये। मैं यहाँ से गया। तदनन्तर अध्यधिक सुन्दर ( स्वर्ग से भी बढ़कर ) मार्गों तथा अनेक प्रकार की चर्चाओं के कारण मनोरम चौराहों को लाँघ कर मन को प्रसन्न कर देने वाले प्रासादों को देखते हुए इधर-उधर मुस्कराती हुई कामालस घूम रही वाराङ्गनाओं की वासनाद्योतक तिरछी निगाहों से व्याकुल हृदय, सेवा कार्य के विराम पर निकल रहे सामन्तों से भरे हुये, अविरल टपक रहे मधुरस वाले मञ्जरी पुञ्ज से पिञ्जरित सरस आम्रवनों के निकुञ्जों में एकत्र कोकिलकुल के कलरव से रमणीक उद्यान मालाओं से घिरे हुये, समीप ही मणि-

निर्मित अश्व शालाओं में बँधे स्निग्ध, पोषण की उत्कृष्टता से प्रसन्न हिनहिनाते हुये राजाओं को प्रसन्न करने वाले घोड़ों से युक्त, जिसके ऊँचे शिखरों पर मङ्गल ध्वज लगे हुये थे, तथा आँगन में क्रीडामृग एवम् पक्षी क्रीडाएँ कर रहे थे, जिसके दूसरे कक्ष में सर्वप्रकारेण अङ्गरक्षकों से रक्षित राजकुमार रमण कर रहा था, ऐसे अतिसूक्त मुक्ताफलों से बनी तरङ्गाकृतियों के कारण रमणीक रङ्गरेखाओं की पंक्तियों से शोभित आँगन वाले राजभवन में मैं प्रविष्ट हुआ।

**अतिमनोहारिणि यत्र सुपुष्करमालानि क्रीडावापीपयांसि नागयूथं च, सारवाणि लीलोद्यानसारसमिथुनानि सेवककविवृन्दं च विलम्बितानि काञ्चनकुङ्कुमदामानि गीतं च, अनलसङ्गानि लक्षप्रदीपवर्तिसुखानि प्रेक्षणकं च।**

**सुधा**—अतिमनोहारिणीति। यत्र=यस्मिन् राजभवने। अतिमनोहारिणि=मनोरमे। सुपुष्करमालानि=सुन्दरजलकमलमालानि। क्रीडावापीपयांसि=लीलावाप्याः जलानि, पक्षे--सुष्ठुं पुष्करं=शुण्डाग्रं यस्य तथोक्तम्। आलानम्=अर्गलास्तम्भोऽस्यास्तीति तथा नागयूथम्=गजवृन्दम्। सारवाणि=सारयुक्तानि। लीलोद्यानसारसमिथुनानि—लीलोद्याने=क्रीडाकानने सारसमिथुनानि=सारसपक्षियुग्मानि। च=तथा सह आरवैः सारवाणि। सेवककविवृन्दम्—सेवकानाम्=परिचराणाम्, कवीनाम्=सूरिणाम्, वृन्दम्=यूथम्, सारोत्कृष्टा वाणी यस्य तथाविधम्। विलम्बितानि=लम्बमानानि, काञ्चनकुङ्कुमदामानि=स्वर्णकुङ्कुमस्रजानि। विशेषेण लम्बायमानिकृतानि। गीतं च स्वरकृतविलम्बोपेतं तानोपेतं च। अनलसङ्गानि=अग्नियुक्तानि। लक्षप्रदीपवर्तिसुखानि—लक्षम्=शतसहस्रसंख्यकानि प्रदीपवर्तिसुखानि=आनन्दानि। पक्षे नालसममनलसमोजस्वि। प्रेक्षणकम्=दृश्यम्। उच्चैः स्थाने गीयमानत्वात्। तथा गानमस्यास्तीति इनिः। लक्षसंख्यद्रव्यपतीनां हि वेश्मसु यावल्लक्षं दीपा ज्वाल्यन्ते इति ख्यातिः।

**हिन्दी**—जहाँ अतिमनोहर सुन्दर पुष्करमालाओं से युक्त क्रीडावापियों के जल तथा सुन्दर शुण्डाग्रभाग वाला हाथियों का समुदाय है। जहाँ सुन्दर लीला-उद्यानों में सारसों की जोड़ियाँ और सेवकों तथा कवियों का समुदाय तथ्ययुक्त बातें करने वाला है। जहाँ काञ्चनकुङ्कुममालाएँ लटक रही हैं तथा विलम्बित (मन्थर स्वर वाले) गीत एवम् तानें गूँजती रहती हैं जहाँ लाखों विपत्तियों का प्रकाश ज्वालामय एवम् दृश्य ओजस्वी गान से युक्त हैं।

**किं बहुना—**

**सुस्थिततेजोराशेर्लक्ष्मीजनकस्य रत्ननिलयस्य।**
**तस्योपरि प्लवन्ते वार्धेरिव वर्णकाः सर्वे॥ १९॥**

**अन्वयः**—सर्वे वर्णकाः सुस्थिततेजोराशेः लक्ष्मीजनकस्य रत्ननिलयस्य तस्य उपरि वार्धेः इव प्लवन्ते॥ १९॥

सुधा—सुस्थितेति । सर्वे=निखिलाः । वर्णकाः=वर्णनकर्तारः । सुस्थिततेजोराशेः—सुस्थितः तेजोराशिः=प्रतापचयो बडवानलो वा यस्य तस्य । लक्ष्मीजनकस्य =शोभोत्पादकस्य, लक्ष्म्याः पितुर्वा । रत्ननिलयस्य=रत्नाकरस्य सिन्धोर्वा । तस्य =राज्ञः सागरोपमस्य । उपरि=ऊर्ध्वम् । वार्धेः इव—वारो जलानि धीयन्तेऽस्मिन्निति वार्धिस्तस्य=सिन्धोरिव । प्लवन्ते=तरन्ति । अपरिच्छिन्नगुणत्वादलब्धमध्यमध्या बाह्यमेव वर्णयन्तीति भावः । आर्यावृत्तम् । अत्रोपमालङ्कारः ॥ १९ ॥

हिन्दी—अधिक क्या कहें—सभी स्तुतिपाठकसुस्थिर तेजस्वी लक्ष्मीजनक, रत्नाकर उस नृप के ऊपर सागर के समान तैरते हैं ॥ १९ ॥

तत्र चलत्कञ्चुकिसङ्कुलं पातालमिवान्तःपुरमनन्तालयं प्रविश्य विविधकुसुमसम्पत्सम्पन्नपुण्यपादपपरिकरिताङ्गणवापीपरिसरचलच्चक्रवाके चन्द्रशालाशालिनि, शैलूष इवानेकभूमिकाभाजि, धनञ्जय इव सुभद्रान्विते, कुरुवंशाख्यान इव चारुचित्रविचित्रभित्तिभाजि, तुहिनाचलोच्चकूटायमाने सुधाधवलस्कन्धे धाम्नि ध्वजावलीविलसत्सप्तसप्तिसप्तौ सप्तमभूमिकायाम् इतो मुखवातायने निविष्टाम्, इतो गतास्ताः कुब्जवामनकन्यकास्त्वद्वार्ताव्यतिकरविनोदारम्भिणीः सम्भाषयन्तीम्, अनवरततरललोचनालोकनैर्नीलोत्पलोपहारमिव त्वदधिष्ठितायै दिशे दिशन्तीम्, उत्तरीयांशुकस्याच्छतया दृश्यमानमदनबाणव्रणकिणानुकारिकस्तूरिकापङ्कपत्रलताङ्कितकुचकलशश्रियम्, अष्टमीशशाङ्कशकलश्रीशोभाभाजि ललाटपट्टे समरपरवशत्रिपुरुषैरिव 'ममेयं ममेयं ममेयम्' इति संहर्षात्कृतं स्ववर्णानुकारिस्वीकारचिह्नमिव कुङ्कुममृगमदमलयजरसरचितत्रिपुण्ड्रकरेखात्रितयमुद्वहन्तीम्, आलोहितेन च त्वद्वार्तामृतपानबालप्रवालप्रणालकेनेव कर्णप्रणयिना बालपल्लवेन विराजितवदनाम् आसन्नमणिभित्तिदर्पणसङ्क्रान्तप्रतिबिम्बतया त्वत्सङ्गमवाञ्छाकृतसन्तापसंविभागार्थमिव बहून्यात्मरूपाणि सृजन्तीम्, आसन्नवर्तिनीभिर्वीणादिविनोदविदुषीभिः समानवयोवेषाभिः सखीभिः सरस्वतीमिव सकलविद्याधिदेवताभिरुपास्यमानाम्, उन्मिषत्कुसुमाभरणरमणीयाभिश्चामरग्राहिणीभिर्वनदेवताभिरिव शरीरिणीं वसन्तमासश्रियमुपसेव्यमानाम्, अनुलेपनपुष्पपाणिभिः प्रसाधिकाभिर्भवानीमिवानेकनाकनायकनारीभिराराध्यमानाम्, इतस्ततो निपतन्मण्डनमणिमयूखमञ्जरीजालच्छलेनामान्तमिव कान्तिरसविसरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु प्रतिबिम्बतैरासन्नचित्रभित्तिरूपकैर्मायाविभिः सुरासुरैरिव विधीयमानाश्लेषाम्, अप्रस्थिते पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणि शशिनीव करुणयार्पितच्छायाम्, अशेषजगद्विजयास्त्रशालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, विपणिमिव लावण्यस्य, शिल्पसर्वस्व-

**परिणामरेखामिव विधातुः, अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमद्राक्षम् ।**

सुधा—तत्रेति । तत्र=तस्मिन् राजभवने । चलत्कञ्चुकिसङ्कुलम्—चलद्भिः=भ्रमद्भिः, कञ्चुकिभिः वृद्धैः राजान्तःपुरचारिभिः, सङ्कुलम्=परिपूर्णम् । पक्षे—सञ्चरद्भिरुरगैः सङ्कुलम् । पातालम्=नागलोकमिव । अनन्तालयम्=बहुनिलयम्, शेषनिलयम् वा । अन्तःपुरम्=राजकन्यकान्तःपुरम् । प्रविश्य=प्रवेशं कृत्वा । विविधकुसुमसम्पत्सम्पन्नपुण्यपादपपरिकरिताङ्गणवापीपरिसरचलच्चक्रवाके—विविधकुसुमसम्पद्भिः=अनेकविधपुष्पसम्पदाभिः, सम्पन्नम्=परिपूर्णम्, पुण्यपादपैः=पावनवृक्षैश्च, परिकरितम्=परिवृतम्, अङ्गणम्=अजिरम्, तस्य वाप्याः=सरस्याः, परिसरे=तटभूमौ, चलन्तः=चङ्क्रमन्तश्चक्रवाकाः=चक्रवाकपक्षिणः, यत्र तथाविधे चन्द्रशालाशालिनि=सर्वोच्चप्रकोष्ठयुक्ते । शैलूष इव=नट इव । अनेकभूमिकाभाजि—अनेकाः=बहुविधाः भूमिकाः, भजन्ते=शोभन्ते यत्र तथाविधे, बहुग्रहक्षणशोभि वा । धनञ्जय इव=अर्जुनसमः । सुभद्रान्विते—सुभद्रया=अर्जुनपत्न्याऽन्विते=संयुक्ते, सुष्ठु=शोभनानि भद्राणि=कल्याणकराणि ग्रहावयवविशेषास्तैरन्विते । चारुचित्रविचित्रभित्तिभाजि—चारुचित्रेण, विचित्रा भित्तीर्भजते यत्र । पक्षे—चित्रविचित्रौ=शान्तनुसुतौ तावेव भित्तिभूतौ भजेते यत्र तादृशे । कुरुवंशाख्यान इव=कुरुवंशवर्णन इव । तुहिनाचलोच्चकूटायमाने=हिमालयोच्चपर्वतसदृशे । सुधाधवलस्कन्धे—सुधया, धवलाः=उज्ज्वलाः, स्कन्धाः=स्तम्भाः, यत्र तथाविधे । धाम्नि=तेजोमये । ध्वजावलीविलसत्सप्तिसप्तौ—ध्वजावल्या=ध्वजपंक्त्या, विलसत्=शोभितः, सप्तसप्तिः=सूर्यः यत्र तस्मिन् । पक्षे सप्ताश्वाः यत्र तथाविधे । सप्तभूमिकायाम्=सप्तमप्रासादे । इतः=अस्मात् स्थानात् । मुखवातायने—मुखम्=आननम्, वातायने=गवाक्षे । निविष्टाम्=धृताम् । इतो गतास्ताः=समाप्तिं गताः । कुब्जवामनकन्यकाः—कुब्जाः वामनाश्च याः कन्यकाः=कन्याजनास्ताः । त्वद्वार्ताव्यतिकरविनोदारम्भिणीः—त्वत्=तव, वार्ताव्यक्तिकरेण=कथालपनेन, विनोदम्=मनोरञ्जनम् आरभन्ते यास्ताः । सम्भाषयन्तीम्=आलपन्तीम् । अनवरततरललोचनालोकनैः—अनवरतम्=निरन्तरम्, तरलैः=चञ्चलैः लोचनैः=नयनैः आलोकनैः=दर्शनैः । नीलोत्पलोपहारम् इव=इन्दीवरोपहारम् इव । त्वदधिष्ठितायै—त्वत्=ते, अधिष्ठितायै=सनाथितायै । दिशे=ककुभायै । दिशन्तीम्=दीपयन्तीम् । उत्तरीयांशुकस्य=उत्तरीयवस्त्रस्याच्छतया=स्वच्छता । दृश्यमानमदनवाणव्रणकिणानुकारिकस्तूरिकापङ्कपत्रलताङ्कितकुचकलशश्रियम्—दृश्यमानाः, मदनबाणस्य=कामशरस्य, ये व्रणास्तेषु, किणानुकारिकस्तूरिका=चिह्नानुकारिकस्तूरिका, तस्याः पङ्केन=रजसा, पत्रलताङ्किता=पत्रलतादिचिह्निता, कुचकलशयोः=पयोधरकुम्भयोः, श्रीः=शोभा, यस्यास्ताम् । अष्टमीशशाङ्कशकलश्रीशोभाभाजि—अष्टमीशशाङ्कः=अष्टमीतिथिचन्द्रः, तस्य शकलश्रीशोभा=खण्डशोभा, भजते=शोभते, यत्र तथाविधे । ललाटपट्टे=भालपटले । स्मरपरवशत्रिपुरुषैरिव—स्मरपरवशैः=कामव्यग्रैस्त्रिपुरुषैः इव—त्रयाणां सत्वरज-

स्तमसां पुरुषास्त्रिपुरुषाः तैरिव । यथा—'न बाधतेऽस्य त्रिगणः परस्परम्' इत्यत्र त्रयाणां धर्मादीनां गणः । यथा च चण्डसिंहकृते चण्डिकाचरिते—प्रियस्त्रिवर्गश्चक्रमे सकामम् इति । मम इयम्=एषा मम । इति । सहर्षात्कृतम्=सानन्दकृतम् । स्ववर्णानुकारिस्वीकारचिह्नम् इव=स्वीकृतिचिह्नसदृशम् । कुङ्कुममृगमदमलयजरसरचितत्रिपुण्ड्करेखात्रितयम्—कुङ्कुममदमृगस्य=कस्तूरिकायाः, मलयजस्य=चन्दनस्य च रसः, तेन रचितम्=मण्डितम्, त्रिपुण्ड्करेखात्रितयम्—त्रिपुण्ड्कस्य=तिलकस्य, रेखात्रितयम् =चिह्नत्रयम् । उद्वहन्ती=धारयन्तीम् । त्वद्वार्तामृतपानबालप्रवालप्रणालकेन—त्वत्=ते, वार्तामृतपानाय=कथासुधाश्रवणाय, बालेन=लघुना, प्रवालेन=मण्डलेन प्रणालकेन=प्रणालकमार्गेण । कर्णप्रणयिना=कर्णप्रियेण । आलोहितेन=आरक्तेन। बालपल्लवेन=नूतनकिसलयेन इव । विराजितवदनाम्—विराजितम्=शोभितम्, वदनम्=मुखं यस्यास्ताम् आसन्नमणिभित्तिदर्पणसङ्क्रान्तप्रतिबिम्बतया—आसन्नम्= सन्निकटम्, मणिभित्तिदर्पणे=मणिनिर्मितभित्तिमुकुरे या प्रतिबिम्बिता, तया । त्वत्सङ्गमवाञ्छाकृतसन्तापसम्विभागार्थम्—तव सङ्गमाकांक्षया कृतः=विहितः यः सन्तापसम्विभागः=दुःखसंविभागस्तदर्थम् । बहूनि=अनेकानि, रूपाणि=स्वरूपाणि, सृजन्तीम्=उत्पादयन्तीम् इव । आसन्नवर्तिनीभिः=निकटवर्तिनीभिः । वीणादिविनोदविदुषीभिः—वीणादिभिः=तन्त्रीप्रभृतिभिः विनोदे=मनोरञ्जने या विदुष्यः= पण्डितास्ताभिः । समानवयोवेषाभिः—समानम् वयः=आयुः, वेषः=आकृतिश्च, यासां ताभिः । सखीभिः=सहचरीभिः । सकलविद्याधिदेवताभिः=समस्तविद्याधिष्ठात्रिदेवीभिः । सरस्वतीम्=वाग्देवीम् । उपास्यमानाम् इव=आराध्यमानाम् इव । उन्मिषत्कुसुमाभरणरमणीयाभिः—उन्मिषताम्=विकसितानाम्, कुसुमानाम्=पुष्पाणाम्, आभरणैः=भूषणैः, रमणीयाभिः=मनोरमाभिः । चामरग्राहिणीभिः=चामरधारिणीभिः । वनदेवताभिरिव=वनदेवीभिर्यथा । शरीरिणीम्=सदेहाम् । वसन्तमासश्रियम्=वसन्तमासशोभाम् । उपसेव्यमानाम्=सेव्यमानाम् । अनुलेपनपुष्पपाणिभिः—अनुलेपनम्=कर्पूरागुरुचन्दनलेपनम्, पुष्पाणि=कुसुमानि, च, पाणिषु यासां ताभिः । प्रसाधिकाभिः=प्रसाधननारीभिः । अनेकनाकनायकनारीभिः=अनेकपुरन्दर- =परितः । निपतन्मण्डनमणिमयूखमञ्जरीजालच्छलेन—निपतताम्=स्खलताम्, मण्डनमणिषु=आभूषणरत्नेषु, मयूखमञ्जरीणाम्=किरणमञ्जरीणाम्, जालम्= समूहम्, तस्य च्छलेन=व्याजेन । अमान्तम् इव । कान्तिरसविसरम्=उज्ज्वलं प्रभारसप्रसरम् । उत्सृजन्तीम् इव=उत्पादयन्ती यथा । अशेषाङ्गावयवेषु=सम्पूर्णशरीरभागेषु । प्रतिबिम्बितैः=प्रतिभासितैः । चित्रभित्तिरूपकैः=चित्रभित्तिस्वरूपैः । मायाविभिः=मायायुक्तैः । सुरासुरैः=देवदानवैः । विधीयमानाश्लेषाम्=क्रियमाणालिङ्गनाम् इव । अग्रस्थिते=पुरःस्थिते । पद्मरागमणिदर्पणे—पद्मरागमणेः, दर्पणे= मुकुरे । कन्दर्पातुरे=कामातुरे । रागिणि=प्रणयिनि । शशिनि=चन्द्रमसि । करुणया=दयया । अर्पितच्छायाम् इव=अर्पितप्रतिबिम्बाम् इव । मन्मथस्य=मदनस्य ।

अशेषजगद्विजयास्त्रशालाम् इव—अशेषस्य=सम्पूर्णस्य, जगतः=संसारस्य, विजयस्य=जयस्यास्त्रशालाम्, इव=आयुधशालाम्, यथा। समस्तसौन्दर्यगुणानाम्=निखिलसुन्दरतागुणानाम्। सङ्केतवसतिम् इव=संकेतवासस्थानम् इव। सौभाग्यस्य आनन्दस्याधिदेवताम् इव=अधिष्ठात्रिदेवीम्। इव। लावण्यस्य=कमनीयतायाः। विपणिम्=आगाराम् इव। विधातुः=ब्रह्मणः। शिल्पसर्वस्वपरिणामरेखाम् इव=सम्पूर्णशिल्पकलापरिणामचिह्नाम् इव। अनन्तसंसाररोहणैकरत्नकन्दलीम् इव—अनन्तसंसाररूपस्य, रोहणस्य=रोहणनामपर्वतस्य, एकरत्नकन्दलीम् इव=एकमात्रमणिकन्दलीसमाम्। दमयन्तीम्=भैमीम्। अद्राक्षम्=अहमपश्यम्।

**हिन्दी**—चञ्चल सापों से संकुल पाताल लोक के समान कञ्चुकि वर्ग से परिपूर्ण वह अन्तःपुर है। जैसे पाताल अनन्तालय ( शेषनाग का घर ) है, वैसे ही उस अन्तःपुर में अनेक भवन हैं इस प्रकार के अन्तःपुर में मैंने प्रवेश किया।

वहाँ विभिन्न पुष्प-सम्पदा से सम्पन्न पवित्र वृक्षों से घिरे आँगन की बावली के तट पर चक्रवाक पक्षी घूम रहे थे। ( अन्तःपुर ) चन्द्रशालाओं ( ऊँचे-ऊँचे भवनों ) से युक्त नट के सदृश अनेक भूमिकाओं ( भूभागों ) से शोभित सुभद्रा से युक्त धनञ्जय के समान सुन्दर चित्र-विचित्र-भित्ति (विविध रङ्गीन चित्रमय दिवारों से शोभित कुरुवंश के आख्यान के समान, हिमालय के उच्च शिखर सदृश चूने से पूते उच्च भाग वाले भवन पर जिसके सातवें भाग ( सतमञ्जिले ) पर ध्वजश्रेणियाँ सूर्य के सात घोड़ों से ( सप्तरश्मियों से ) विलास कर रहीं थीं वहीं इधर को ही दृष्टि लगाये हुये खिड़की पर बैठी दमयन्ती को मैंने देखा।

वह इधर-उधर घूम रही कुब्जाओं तथा वामनकन्याकों से आपके सम्बन्ध की कथाओं ( चर्चाओं ) में संलग्न मनोविनोद कर रही सेविकाओं से बातचीत कर रही थी। निरन्तर तरलनयनों के द्वारा अवलोकन से तुम्हारी अभीष्ट दिशा (इसी ओर) को मानो नीलकमलहार से प्रकाशित कर रही थी। उत्तरीयांशुक की स्वच्छता से मदनबाण के घावों के अनुरूप कस्तूरिका से बनी पत्र-लताओं से चिह्नित पयोधर-कुम्भों की शोभा दिखलाई पड़ रही थी। ललाट पर अष्टमी के चन्द्रखण्ड जैसी शोभा लग रही थी। कुङ्कुम-कस्तूरी तथा चन्दन-रस से उसने त्रिपुण्ड लगा रखा था जिसकी कि कामवश त्रिपुरुषों ( सत्व, रज और तम ) द्वारा अपने वर्णों के अनुरूप ( चन्दन-शुभ्र, कुङ्कुम-रक्त, कस्तूरिका-कृष्ण ) रेखाओं के कारण जैसे "यह रेखा मेरी है, यह रेखा मेरी है" इस प्रकार सहर्ष स्वीकारोक्ति की जा रही थी। कान पर लगाये अरुणाभपल्लवों से युक्त उसका सुन्दर मुख आपका वार्तालाप रूपी अमृत-पान के लिए छोटे छोटे थलहों को सींचने के लिए बरहे जैसा बना हुआ था। निकट-वर्त्ती मणिभित्तियों पर पड़ रहे प्रतिबिम्ब के कारण आपके संगम की अभिलाषा से किये गये सन्ताप के बटवारे के समान उसके बहुत से स्वरूप लग रहे थे। पार्श्व-वर्तिनी वीणा आदि द्वारा मनोरंजन करने में निपुण समान अवस्था तथा वेषभूषा वाली सखियों द्वारा समस्त विद्याओं की अधिदेवताओं से सेवित वह सरस्वती देवी

जैसी प्रतीत हो रही थी। विकसित कुसुमाभरणों से मनोरम, चामर डुलाने वाली सेविकाओं से सेवित वह वनदेवियों से शोभित सदेह बसन्त मास की श्री ( शोभा ) जैसी लग रही थी। अनुलेपन ( चन्दनकर्पूर आदि ) तथा फूल हाथों में लिए सजाने सँवारने वाली सेवकाओं से वह अनेक स्वर्गनायकों की पत्नियों से अराध्यमान पार्वती देवी जैसी थी।

इधर उधर बिखर रहीं मण्डन-मणियों की किरणों के जाल के बहाने उज्ज्वल कान्ति रस उत्पन्न करती हुई, सम्पूर्ण शरीरावयवों पर प्रतिबिम्बित आसन्नवर्ती भित्तियों ( दीवारों ) के दृश्यों से मायावी देवताओं तथा दानवों द्वारा मानों आलिंगन की जा रही, सामने रखे हुये पद्मराग के मणिदर्पण पर कामपीड़ित अनुरागी चन्द्रमा पर कृपया पड़ रही छाया जैसी परछाई से युक्त समस्त जगत् को जीतने वाले मन्मथ की अस्त्रशाला जैसी, समस्त सौन्दर्य गुणों की संकेत भूमि जैसी, सौभाग्य की अधिदेवता सदृश, लावण्य की दूकान समान, विधाता की सर्वोत्तम शिल्परेखा जैसी, अनन्त विश्व में रोहण नामक पर्वत की रत्नमयी कन्दली सदृश दमयन्ती थी।

**टिप्पणी**—चित्रविचित्र—कुरुवंश के मूलपुरुष चित्र तथा विचित्र नामक महापुरुष थे जिनकी अम्बिका तथा अम्बाला पत्नियाँ थीं। इन्हीं से पाण्डु तथा धृतराष्ट्र का जन्म हुआ था।

स्मरपरवशत्रिपुरुष—दमयन्ती के ललाट में लगे त्रिपुण्ड की तीनों रेखायें तीन रंग की थीं जो कि कुङ्कुम-कस्तूरी तथा चन्दन से खींची गई थीं। कवि ने इन्हीं तीनों वर्णों को लक्षित कर त्रिगुण ( सत्व-रजः-तमः ) की कल्पना की है। चन्दन की शुभ्रता से सत्व, कुङ्कुम की अरुणिमा से रजः तथा कस्तूरी की काली रेखा से तमोगुण को इंगित किया गया है। यही गुण त्रिपुरुष माने गये हैं।

**ईक्षणामृतशलाकामवलोक्य च तामतिहर्षविस्मयकौतुकोत्तानितचक्षुश्चिन्तितवानहम्।**

**सुधा—ईक्षणेति।** ईक्षणामृतशलाकाम्—ईक्षणाय=अवलोकनायामृतशलाकां =सुधाशलाकासमां, ताम् दमयन्तीम्। अवलोक्य=दृष्ट्वा। अतिहर्षविस्मयकौतुकोत्तानितचक्षुः—अतिहर्षेण=महदानन्देन, विस्मयेन, कौतुकेन=आश्चर्येण च उत्तानिते =विस्फारिते चक्षुषी=नयने यस्य तथाविधः। अहम् चिन्तितवान्=विचारितवान्।

हिन्दी—आँखों के लिए अमृतशलाका जैसी उस ( दमयन्ती ) से अति हर्ष विस्मय तथा कौतुक से विस्फारित नेत्र मैं सोचने लगा।

**इयं हि—**

**स्मरराजराजधानी मङ्गलवलभी विलासविहगानाम्।**
**शृङ्गाररङ्गशाला हरति न बाला मनः कस्य॥ २०॥**

**अन्वयः**—स्मरराजराजधानी विलासविहगानां मङ्गलवलभी शृङ्गाररङ्गशाला बाला कस्य मनः न हरति॥ २०॥

**सुधा—स्मरेति ।** स्मरराजराजधानी—स्मरराजस्य=कामाधीशस्य, राजधानी । विलासविहगानाम्=विलासरूपपक्षिणाम् । मङ्गलवलभी=कल्याणभूमिः । शृङ्गार-रङ्गशाला—शृङ्गारस्य=शृङ्गाररसस्य, रङ्गशाला=रङ्गभूमिः । इयम् बाला= रमणी । कस्य=कस्य जनस्य । मनः=चेतः । न हरति=न मोहयति । आर्या वृत्तम् । अत्र रूपकालङ्कारः ॥ ३० ॥

**हिन्दी**—क्योंकि यह—कामदेव की राजधानी, विलासरूपी पक्षियों की विलास-भूमि तथा शृङ्गार की रंगशाला यह बाला किस पुरुष का मन नहीं हर लेती है ॥ २१ ॥

**अपि च—**

**दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि ।**
**इत्यपवादभयादिव हरिणाक्षी वेधसा विहिता ॥ २१ ॥**

**अन्वयः**—दग्धः विधिः कम् अपि जनं सर्वगुणसुन्दरं न विधत्ते इति अपवादभयात् इव वेधसा हरिणाक्षी विहिता ॥ २१ ॥

**सुधा—दग्ध इति ।** दग्धः=निन्द्यः । अत्र दग्धशब्दस्य निन्द्यो लक्ष्यार्थः । विधिः= विधाता । कम् अपि जनम्=कमपि पुरुषम् । सर्वगुणसुन्दरम्=पूर्णगुणरमणीयम् । न विधत्ते=न विदधाति । इति=इदम् । अपवादभयात्=अपवादत्रासात् । वेधसा =ब्रह्मणा । हरिणी इव=मृगीव सुनयना । इयं विहिता=रचिता । आर्यावृत्तम् । अत्रोपमालङ्कारः ॥ २१ ॥

**हिन्दी**—और भी—निन्दनीय विधाता किसी भी व्यक्ति को सर्वगुणसुन्दर नहीं बनाता है ( कोई न कोई त्रुटि उसमें अवश्य रखता है ) इस अपवाद के भय से विधाता ने यह ( दमयन्ती ) मृगनयनी बनाई है ॥ २१ ॥

**किं चान्यत्—**

**लावण्यपुण्यपरमाणुदलं तदन्य-**
**दन्यः स चापि निपुणः खलु कोऽपि वेधाः ।**
**येनाद्भुता कृतिरियं विहिता विशिष्टः**
**कार्येण कारणविशेषगुणोऽनुमेयः ॥ २२ ॥**

**अन्वयः**—तत् लावण्यपुण्यपरमाणुदलम्, अन्यत् खलु सः निपुणः कः अपि वेधाः चापि अन्यः, येन इयम् अद्भुता कृतिः विहिता । विशिष्टकार्येण कारणविशेषगुणः अनुमेयः ॥ २२ ॥

**सुधा—लावण्येति ।** तत्=तथाविधम् । लावण्यपुण्यपरमाणुदलम्—लावण्यस्य =सौन्दर्यस्य, परमाणुदलम् । अन्यत्=भिन्नम् एवास्ति । खलु=किल । सः= असौ । निपुणः=कुशलः । कः अपि=कश्चिदपि । वेधाः=विधाता चापि । अन्यः= अपरः, भविष्यति । येन=येन वेधसा । इयम्=एषा । अद्भुता=अनुपमा । कृतिः= रचना दमयन्ती । विहिता=रचिता । विशिष्टकार्येण दमयन्त्याः रचना-विशेषकर्मणा ।

तस्याम् । कारणविशेषगुणः=कारणविशेषेण गुणविशेषः । अनुमेयः=अनुमातुं योग्यः अस्ति । वसन्ततिलका वृत्तम् ॥ २२ ॥

**हिन्दी**—वह लावण्यता का परमाणु दल कुछ और ही है । निःसन्देह वह कोई और ही होगा जिसने यह अद्भुत कृति निर्मित की है । ( दमयन्ती ) विधाता की विशिष्ट रचना है अतः उसमें गुण-विशेष होने का भी अनुमान किया जा सकता है ॥ २२ ॥

**एवं वितर्कयन्तं सापि मां पुष्कराक्षसूचितमुचितसम्भ्रमेण मनाग्वलितकन्धराकन्दलीकम्पितकर्णोत्पलमवलोक्य स्वागतप्रश्नानन्तरम् 'अहो बहोः कालादभूत्सुप्रभातमद्योद्द्योतितमिव तमस्काण्डपिण्डीकृतं कुण्डिनम्, अकाण्डाडम्बरितवसन्तविकासोत्सव इवाभवत्सरित्सङ्गमोपकण्ठवनविभागः, चिरात् सम्पन्ना सलक्षणा दक्षिणा दिगियम्, उन्निद्रित इव सह्यादिः, अमृतद्रवार्दित इवोज्जीवितोऽयं जनः' इत्यभिधाय 'पर्वतक, कच्चित्कुशलीपरबलदलदावानलो नलः' इति स्मितमुग्धमधुरया गिरा समभाषत ॥**

**सुधा**—एवमिति । एवम्=इत्थम् । वितर्कयन्तम्=तर्कं कुर्वन्तम् । माम्=पर्वतकनामानम् । सा=दमयन्ती, अपि । पुष्कराक्षसूचितम्—पुष्कराक्षेण सूचितम्=विज्ञापितम् । उचितसम्भ्रमेण=उपयुक्तसन्देहेन । मनाक्=स्तोकम् । वलितकन्धराकन्दलीकम्पितकर्णोत्पलम्—वलिता या कन्धराकन्दली=वक्रिमग्रीवाङ्कुरा, तया कम्पिते=चलिते, कर्णोत्पले=कर्णपुष्पे यस्य तादृशम् । अवलोक्य=दृष्ट्वा । स्वागतप्रश्नान्तरम्=कुशलक्षेमपृच्छापश्चात् । अहो=आश्चर्यम् । बहोः कालात्=भूयसः समयात् । अद्य=अस्मिन् दिवसे । उद्योतितम्=दीप्तिमन्तम् । सुप्रभातम् इव=सुन्दरप्रातःकालसमम् । तमस्काण्डपिण्डीकृतम्—तमस्काण्डेन=अन्धकारराशिना, पिण्डीकृतम्=आवृतम्, कुण्डिनम्=कुण्डिनपुरम् । उद्योतितम्=प्रकाशितम् । सरित्सङ्गमोपकण्ठवनविभागः—सरितो=नद्योः, सङ्गमस्योपकण्ठे=पार्श्वे, यो वनविभागः काननभूभागः, अकाण्डाडम्बरितवसन्तविकासोत्सव इव—अकाण्डे=असमये, आडम्बरितस्य=प्रफुल्लितस्य, वसन्तस्य=वसन्तर्त्तोः, विकासोत्सवः इव=उल्लासोत्सवो यथा । तथा अभवत्=बभूव । चिरात्=बहुकालात् । इयं दक्षिणा दिक्=एषा अवाची दिशा । सलक्षणा=लक्षणयुक्ता । सम्पन्ना=परिपूर्णा जाता । सह्याद्रिः=सह्याचलः । उन्निद्रित इव=सजगो यथा । अमृतद्रवार्दितः—सुधारससिक्तः अयं जनः=इयम् दमयन्ती । उज्जीवितः=पुनर्जीविताः जाता । इति=एवम् । अभिधाय=उक्त्वा । पर्वतक=अयि पर्वतक ! परवलदलदावानलः—परवलस्य=शत्रुसैन्यस्य यद्दलम्=समूहम्, तस्य दावानलः=विनाशकः, नलः=नलनृपः । कच्चित्कुशली=सकुशलस्तु वर्तते । इति=इत्थम् । स्मितमुग्धमधुरया—स्मितमुग्धेन=मृदुहासेन मधुरा=मनोरमा, तया । गिरा=वाण्या । समभाषत=अकथयत् ।

**हिन्दी**—वह ( दमयन्ती ) भी इस प्रकार पुष्कराक्ष द्वारा सूचित, उचित सम्भ्रम से थोड़ा-सी गर्दन रूपी कन्दली के घुमाने के कारण हिल रहे कर्णपुष्पों वाले तर्क

कर रहे मुझ पर्वतक को देखकर स्वागत प्रश्न पूछने के बाद—"अहा, बहुत समय पश्चात् आज उद्योतित सुप्रभात के सदृश अन्धकार से आवृत कुण्डिन नगर जगमगा उठा है, नदियों के संगम की निकटवर्ती वनभूमि असमय में प्रफुल्लित वसन्त ऋतु के उल्लासोत्सव जैसा हो उठी है। यह दक्षिण दिशा बहुत दिनों बाद शुभ लक्षणों से सम्पन्न हुई है, सह्य पर्वत जग-सा पड़ा है तथा यह व्यक्ति ( मैं दमयन्ती ) सुधा-रस से सिक्त सा पुनः जीवित हो उठा है" यह कह कर—"हे पर्वतक ! शत्रु सैन्य-समूह को दावानल के समान नष्ट करने वाले महाराज नल कुशल से तो हैं !" इस प्रकार मृदु मुस्कराहट से मधुरवाणी से उसने कहा।

**अहमपि प्रणम्य यथोचितमनन्तरमतित्वरितसखीजनोपनीतमासनमध्यास्य देवेन प्रहितानि तान्याभरणोपायनान्युपानैषम्।**

**सुधा—अहमिति।** अहम्=पर्वतकः अपि। यथोचितम्=यथोपयुक्तम्। प्रणम्य =नमस्कृत्य। अनन्तरम्=पश्चात्। अतित्वरितसखीजनोपनीतम्—अतित्वरितम्= अतिशीघ्रम्, सखीजनेन=सख्या, उपनीतम्=समानीतम्। असनम्=विष्टरम्। अध्यास्य=असीनो, भूत्वा। देवेन=स्वामिना। प्रहितानि=प्रेषितानि। तानि= तथाविधानि। आभरणोपायनानि=आभूषणाद्युपहारवस्तूनि। उपानैषम्=समर्पयामासम्।

**हिन्दी**—मैंने भी यथोचित प्रणाम कर, तदनन्तर अतिशीघ्र सखीजन द्वारा लाये गये आसन पर बैठ कर महाराज द्वारा प्रेषित आभरणोपहार वस्तुएँ प्रस्तुत कीं।

**आदरेण तया गृहीतेषु तेषु, बहुमते मयि, प्रक्रान्ते त्वद्गुणग्रहणगोष्ठीव्यतिकरे, नर्मसुखालापलीलयातिक्रामति स्तोककालकलापे, पुष्कराक्षोऽप्यभाषत।**

**सुधा—आदरेणेति।** तया=दमयन्त्या। आदरेण=आदरपूर्वकम्। तेषु=उपाहारवस्तुषु। गृहीतेषु=स्वीकृतेषु। मयि=पर्वतके। बहुमते=सम्मानिते। त्वदगुणगोष्ठीव्यतिकरे—त्वद्गुणानां गोष्ठ्याः=सभायाः, व्यतिकरे=प्रसङ्गे। प्रकान्ते= प्रारम्भे सति। नर्मसुखालापलीलया=मधुरसुखवार्ताक्रीडया। स्तोककालकलापे= किञ्चित्समये। अतिक्रामति=समाप्तौ। पुष्कराक्षः=पुष्कराक्षनामकः अपि। अभाषत=अकथयत्।

**हिन्दी**—उस ( दमयन्ती ) के द्वारा सादर उपहार वस्तुएँ ले लेने पर मुझे भी सम्मानित किया गया। आपके गुणगान का प्रसङ्ग छिड़ जाने पर मधुर सुख संवाद लीला में कुछ समय व्यतीत करने पर पुष्कराक्ष कहने लगा।

**'देवि, विज्ञापयामि यद्यभयम्।**

**सुधा—देवीति।** देवि=भो देवि ! यदि=चेत्। अभयम्=निर्भयः स्याम्। (तर्हि) विज्ञापयामि=निवेदयामि।

**हिन्दी—हे देवि ! यदि अभय-प्रदान करें, तो मैं निवेदन करूँ।**

**एवमनुश्रुतमस्माभिः 'किल सकलनाकिनायकपुरन्दरपुरःसराः सर्वेऽपि लोकपालास्त्वामभिलषन्तोऽन्तःकरणारण्यलग्नमदनदावानला नलमायान्तमभ्यर्थितवन्तो यथा महानुभावा भवन्ति हि भवादृशाः परोपकारव्रतधर्माणः, तदेष प्रार्थ्यसे स्वप्रयोजननिरपेक्षेण त्वयास्मदर्थे दमयन्ती वरणीया इति।**

सुधा—एवमिति। एवम्=इत्थम्। अस्माभिः=सेवकजनैः। अनुश्रुतम्=आकर्णितम्। किल=खलु। सकलनाकिनायकपुरन्दरपुरःसराः—सकलाः=समस्ताः नाकिनः=स्वर्गवासिनः देवाः, तेषां नायकाः=प्रधानाः, पुरन्दरपुरःसराः=इन्द्रादिकाः सर्वेऽपि=निखिलाः अपि। लोकपालाः। त्वाम्=देवीं दमयन्तीम्। अभिलषन्तः=कामयन्तः। अन्तःकरणारण्यलग्नमदनदावानलः—अन्तःकरणमेव अरण्यम्=हृदयकाननम्, तस्मिन् लग्नम्=संलग्नम्, मदनरूपदावानलः=कामरूपदाववह्निः येषां ते। नलम्=नलाभिधनिषधनृपतिम्। आयान्तम्=आगच्छन्तम्। अभ्यर्थितवन्तः=प्रार्थितवन्तः। यथा=येन प्रकारेण। भवादृशाः=भवत्सदृशाः। महानुभावाः=महापुरुषाः। परोपकारव्रतधर्माणः=परोपकारव्रतधारिणः। भवन्ति। तद्=अतः। एषः=अयम्। प्रार्थ्यसे=प्रार्थना क्रियते त्वम्। स्वप्रयोजननिरपेक्षेण=आत्मप्रयोजनापेक्षया विनैव। त्वया=भवता नलेन। अस्मदर्थे=अस्मल्लोकपालहेतोः। दमयन्ती=भैमी। वरणीया=चयनीया, भार्या कार्येति।

हिन्दी—हम लोगों ने सुना है कि सकल देवों के नायक पुरन्दर ( इन्द्र ) को आगे कर समस्त लोकपालों ने तुम्हें प्राप्त करने की अभिलाषा करते हुये अन्तःकरण रूपी वन के लिए दावानल सदृश आते हुये, नल से प्रार्थना की कि आप जैसे महानुभाव ही परोपकारव्रत को धारण करने वाले होते हैं अतः आपसे हम लोगों की प्रार्थना है कि अपने मतलब को ध्यान में न कर आपको हम सब के लिए ही दमयन्ती का वरण करना चाहिए।

**तद्देवि, देवदूतकार्येणागतो निषधेश्वरः। पृच्छतु वा देवी पर्वतकम्'।**

सुधा—तदिति। तत्=अतः। देवि=अयि दमयन्ति! देवदूतकार्येण—देवानाम्=इन्द्रादिलोकपालानाम्, दूतकार्येण=दौत्येन। निषधेश्वरः=निषधनृपः नलः। आगतः=आयातः। वा=अथवा। देवी=भवती। पर्वतकम्=तन्नामकं जनम्, पृच्छतु।

हिन्दी—अतः हे देवि! देवताओं के दूतकार्य से निषधेश्वर नल यहाँ आये हैं। अथवा आप यह बात पर्वतक से पूछ लें।

**इति श्रुत्वा पुष्करक्षभाषितम्, ईषद्विषादविलक्षस्मितस्मेरां दृशं मयि साचि सञ्चारितवती।**

सुधा—इति श्रुत्वेति। इति=एवम्। पुष्कराक्षभाषितम्=पुष्कराक्षकथितम्। श्रुत्वा=आकर्ण्य। ईषद्विषादविलक्षस्मितस्मेराम्—ईषद्=किञ्चित्, विषादेन=खेदेन, विलक्षस्मितस्मेराम्=अद्भुतविहसितस्मेराम्। दृशम्=दृष्टिम्। मयि=ममोपरि। सञ्चारितवती=सञ्चचार।

हिन्दी—इस प्रकार पुष्कराक्ष का कथन सुन कर—कुछ व्याकुल विलक्षण कामदृष्टि को उसने मेरी ओर थोड़ा घुमाया।

**मयापि संवादिते पुष्कराक्षवचने तस्मिन्, आकस्मिककठोरकाष्ठप्रहारव्यथामिवानुभवन्तीं, विन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपन्नमौनव्रता, लभेतां कर्णोत्पले परभागमितीव मुकुलितनयना, प्राप्नोतु शोभां मुक्तावलीदीप्तिजालमितीव मुक्तस्मिता, गच्छतु च्छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या लभतां लीलाकमलमिदं सौभाग्यमितीवोच्छ्वसितवदना, सा क्षणमभूत्।**

सुधा—मयेति। मया=पर्वतकेनापि। तस्मिन् पुष्कराक्षवचने=पुष्कराक्षवाक्ये। संवादिते = समर्थिते। आकस्मिककठोरकाष्ठप्रहारस्य — आकस्मिकम् = सहसा, कठोरस्य=कठिनस्य, काष्ठप्रहारस्य काष्ठाघातस्य, व्यथाम्=पीडाम्। अनुभवन्तीम्=अनुभवं कुर्वन्तीम्। वीणाक्वणः=तन्त्रीध्वनिः। माधुर्यम्=मधुरताम् विदन्तु=प्राप्नोतु। इतीव=इत्येवम् यथा। प्रतिपन्नमौनव्रता=गृहीतमौना। कर्णोत्पले=कर्णपुष्पे। परभागम्=अधिकां शोभाम्। लभेताम्=प्राप्नुताम्। इतीव=इत्थं यथा। मुकुलितनयना=कोरकितनेत्रा। मुक्तावली=मुक्ताहारः। दीप्तिजालम्=प्रकाशपुञ्जम्। प्राप्नोतु=लभताम्। इतीव=इत्थं यथा। मुक्तस्मिता=त्यक्तस्मिता। कण्ठावलम्बिनी=गलावलम्बिनी। इयम्=एषा। चम्पकमाला=चम्पकपुष्पस्रक्। छायां गच्छतु=शोभाशीला भवतु। इतीव=इवं यथा। अङ्गीकृतवैवर्ण्या—अङ्गीकृतम्=स्वीकृतम्, विवर्णत्वम्=मलिनत्वम् यया तादृशी। इदम्=एतत्। लीलाकमलम्=क्रीडाकमलम्। सौभाग्यम्=सौन्दर्यम्। लभताम्=प्राप्नोतु इतीव। उच्छ्वसितवदना=व्याकुलानना। सा=दमयन्ती। क्षणम्=निमिषम्। अभूत्=बभूव।

हिन्दी—मैंने जब पुष्कराक्ष के कथन का समर्थन कर दिया तब तो आकस्मिक कठोर काष्ठाघात जैसी पीड़ा का अनुभव करती हुई वह—'वीणा की ध्वनि अब मधुरता प्राप्त करें' मानों इस विचार से मौन हो गई। 'कर्ण-पुष्प ही अधिक शोभा प्राप्त करें' मानों इसी से उसने अपनी आँखें अर्द्धनिमीलित कर लीं। 'मुक्तावली दीप्ति पुंज शोभा को प्राप्त करें' मानों यह सोचकर उसने मुस्कराना छोड़ दिया। 'गले में लटक रही यह चम्पक माला ही अब अतिशय सुन्दरता प्राप्त करें' मानों इसी कारण उसने मलिनता धारण कर ली। 'यह लीलाकमल सौन्दर्य प्राप्त करें' मानों इसीलिए व्याकुलवदना वह क्षण भर को हो उठी।

**तत्र च व्यतिकरे—**

**विगलितविलासमपरसमाकस्मिकजातभङ्गश्शृङ्गारम्।**
**मूकितमिव मूर्च्छितमिव मुद्रितमिव भवनमिदमासीत्॥ २३॥**

**अन्वयः**—विगलितविलासम् अपरसम्, आकस्मिकजातभङ्गश्शृङ्गारम्, इदं भवनं मूकितम् इव, मूर्च्छितम् इव, मुद्रितम् इव आसीत्॥ २३॥

**सुधा—तत्रेति** । च=तथा । तत्र व्यतिकरे=तस्मिन्नवसरे ।

**विगलितेति** । विगलितविलासम्—विगलितो विलासो यस्मात्तत्=विलासशून्यम् । अपरसम्—अपगतः रसः यस्मात्तत् =रसशून्यम् । आकस्मिकजातभङ्गशृङ्गारम्—आकस्मिकम्=अकस्मात्, जातभङ्गम्=नष्टम्, शृङ्गारम्=अलङ्करणं यस्मात्तत् । इदम्=एतत् । भवनम्=प्रासादम् । मूकितम्=मूकीभूतमिव । मूर्च्छितम् इव=संज्ञाशून्यम् इव । मुद्रितम् इव=संकुचितं यथा । आसीत्=अभूत् । आर्यावृत्तम् ॥ २३ ॥

**हिन्दी**—वहाँ ऐसी दशा होने पर—विलास-हीन, रसशून्य अकस्मात् सजावटभङ्ग यह भवन मूक जैसा, संज्ञाशून्य जैसा, संकुचित सा लग रहा था ॥ २३ ॥

**राजा तु 'पर्वतक ! ततस्ततः' ? पर्वतकोऽपि–देव ! श्रूतयाम् ।**

**सुधा—राजेति** । राजा=नृपस्तु । पर्वतक=हे पर्वतक ! ततस्ततः=तदनन्तरं किम् भवत् । इत्यपृच्छत् । पर्वतकः अपि अवदत् । देवः=राजन् ! श्रूयताम्=आकर्ण्यताम् ।

**हिन्दी**—राजा ने पूछा—'पर्वतक ! इसके बाद क्या हुआ ?' पर्वतक भी बोला—देव ! सुनिये ।

**अतः परम्—**

**ईषन्निःसृतकुन्दकुड्मलसदृग्दन्तप्रभामञ्जरी-**
**रोचिष्णुस्मितमन्थरां मयि दृशं सञ्चारयन्ती मनाक् ।**
**अस्यन्ती करपद्मभृङ्गमधरे बन्धूकबुद्ध्यागतं**
**वारंवारमकम्पयत्तरलितस्तोकावतंसं शिरः ॥ २४ ॥**

**अन्वयः**—ईषत् निःसृतकुन्दकुड्मलसदृग्दन्तप्रभामञ्जरीरोचिष्णुस्मितमन्थरां दृशं मयि मनाक् सञ्चारयन्ती करपद्मभृङ्गं बन्धूकबुद्ध्यागतम् अधरे अस्यन्ती तरलितस्तोकावतंसं शिरः बारम्बारम् अकम्पयत् ॥ २४ ॥

**सुधा—ईषदिति** । किञ्चित् । निःसृतकुन्दकुड्मलसदृग्दन्तप्रभामञ्जरी रोचिष्णुस्मितमन्थराम्—निःसृतेन=निर्गतेन कुन्दकुड्मलेन, सदृशी=कुन्दकलिकया समा या दन्तप्रभामञ्जरी=रदच्छविमञ्जरी, तया रोचिष्णुः=रुचिकरा स्मितमन्थरा=मन्दहासयुक्ता च, तादृशीम् । दृशम्=दृष्टिम् । मयि=ममोपरि । मनाक्=स्तोकम् । सञ्चारयन्ती=प्रचारयन्ती । करपद्मभृङ्गम्—करकमलेन=हस्तपद्मेन, भृङ्गम्=मधुपम् । बन्धूकबुध्या=बन्धूकपुष्पभ्रान्त्या । आगतम्=आयातम् । अधरे=ओष्ठभागे । अस्यन्ती=अपास्यन्ती । तरलितस्तोकावतंसम्—तरलितस्तोकम्=किञ्चित्कम्पितम्, अवतंसम्=कर्णाभरणम्, यस्मात् तादृक् । शिरः=उत्तमाङ्गम् । बारम्बारम्=भूयोभूय । अकम्पयत्=अचालयत् । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

**हिन्दी**—इसके बाद—किञ्चित् निकली हुई कुन्दकलिका सदृश दन्तकान्ति मञ्जरी जैसी रुचिर मन्थर दृष्टि मुझ पर कुछ घुमाती हुई, बन्धूक पुष्प की भ्रान्ति से अधर पर आये करकमल से भौरें को हटाती हुई दमयन्ती ने थोड़ा हिल रहे कर्णाभरण वाले शिर को बार बार हिलाया ॥ २४ ॥

ततः परम् । वारितवारविलासिनीचाटुवचनक्रमम्, आकस्मिकविस्मयविस्मृतस्मितविलासम्, अतनुतुहिनहतनावनलिनदलदीनदीर्घेक्षणम्, उष्णसरलश्वासारम्भिविषमविषादविच्छायिताननेन्दुद्युति, तस्याः स्थानकमवलोक्य सखेदं सखीजनेन 'देवि, भवन्निःश्वासपवनपरम्परया पर्यस्त इवास्ताचलहस्तावलम्बनमयमाश्रयति भगवान्भानुः, इयं च सौभाग्यशालिनि नले निलीनचित्तायास्तव लोकपालपार्थिवप्रार्थनाव्यतिकरमिममाकर्ण्य लज्जितेव पिहितश्रवणा दूरे भवति वासरश्रीः, इमानि निश्चलनिलीनमधुपनिपीयमानगर्भमधूनि सङ्कोचयन्ति लोचनानीव कमलानि, संविभागीकृतविषादा इव विलासवयस्याः सरसीसरोरुहिण्यः, इमाश्च 'कथमस्मत्पतयो मनुष्यकन्यकां कामयन्ते' इतीर्ष्याशोकवशादिव दिशः श्यामायन्ते, तत्प्रेष्यतामयं पर्वतकः' इत्यभिधीयमाना कथंकथमपि चिन्तान्तरायतिरस्कृतासकृदालापमीषदुन्नमय्य मुखं समुल्लसदशोकपल्लवानुकारि करतलमुत्तानीकृत्य मामविस्मरणीयसम्मानदानावसाने व्यसर्जयत् ।

सुधा—तत इति । ततः परम्=तदनन्तरम् । वारितवारविलासिनीचाटुवचनक्रमम्—वारविलासिनीनाम्=वाराङ्गनानाम्, चाटुवचनानि=चाटुवाक्यानि । तेषाम् क्रमम्, वारितम्=दूरीकृतम् वारविलासिनीचाटुवचमक्रमं यस्मात् तादृक् । आकस्मिकविस्मयाविस्मृतस्मितविलासम्—विस्मयेन=आश्चर्येण, विस्मृतः=विस्मरणपथं, गतः, स्मितविलासः—मृदुहाससौन्दर्यम् यस्मात् तादृक् । अतनुतुहिनाहतनवनलिनीदलदीनदीर्घेक्षणम्—अतनुना=बहुलेन, तुहिनेन=हिमेनाहतानि, नवानि=नूतनानि, नलिनीदलानि=कमलपत्राणि, तथाविधे दीने=कातरे, दीर्घे=विशाले, अक्षिणी=नयने यत्र तादृक् । उष्णसरलश्वासारम्भिविषमविषादविच्छायिताननेन्दुद्युति—उष्णेन=तप्तेन, सरलश्वासारम्भिणा=तीव्रश्वाससञ्चालितेन, विषमेन=असह्येन विषादेन=खेदेन, विच्छायिता=मलिनीभूता, आननेन्दुद्युतिः=मुखकमलकान्तिर्यस्मात् तादृक् । तस्याः=दमयन्त्याः । स्थानकम्=अवस्थाम् । अवलोक्य=दृष्ट्वा । सखेदम्=सदुःखम् । सखीजनेन=सखीलोकेन । देवि=भर्तृदारिके । भवन्निःश्वासपरम्परया—भवत्याः=देव्याः, निःश्वासपरम्परया=श्वासवायुचलनेन । पर्यस्तः=व्यापृत इव । भगवान् भानुः=सविता । अस्ताचलहस्तावलम्बनम्—अस्ताचलस्य=अस्तगिरेः, हस्ताभ्याम्=कराभ्यां, किरणाभ्याम् वा, अवलम्बम्=आधारत्वम् । आश्रयति=आश्रयं याति । इयम्=एषा च । सौभाग्यशालिनि=भाग्यवति । नले=नलनृपे । निलीनचित्तायाः संलग्नचेतायाः । तव=ते । इयम्=एतम् । लोकपालपार्थिवप्रार्थनाव्यतिकरम्—लोकपालानम्=इन्द्रप्रभृतीनाम्, प्रार्थनायाः=निवेदनस्य, व्यतिकरम्=प्रसङ्गम् । आकर्ण्य=श्रुत्वा । लज्जिता इव=त्रपितेव । पिहितश्रवणा—पिहिते श्रवणे=कर्णे यया सा । वासरश्रीः=दिवसशोभा । दूरे भवति=दूरं गच्छति । इमानि=एतानि । निश्चलनिलीनमधुपनिपीयमानगर्भमधूनि—निश्चलम्=निष्कम्पम्, निलीनाः=अन्तर्लीनाः,

ये मधुपाः=भ्रमराः, तैः निपीयमानं=पीयमानम्, गर्भे=अन्तरे, मधु=मकरन्दम्, येषां तादृशानि। कमलानि=पद्मानि। लोचनानि इव=नेत्राणीव। सङ्कोचयति निमीलन्ति। सम्विभागीकृतविषादा—सम्विभागीकृतम्=विभक्ताम्, विषादम्=खेदम् याभिस्ताः। विलासवयस्याः=क्रीडासख्यः इव सरसी सरोरुहिण्यः=तडागकमलिन्यः। अस्मत् पतयः=अस्माकं देवीनां पतयः स्वामिनः, इन्द्रादिलोकपालाः। मनुष्यकन्यकाम् मानवपुत्रीम्। कथम्=केन प्रकारेण। कामयन्ते=अभिलषन्ति। इति=इत्थम्। ईर्ष्याशोकवशात्=ईर्ष्यायाः, शोकस्य=दुःखस्य च, वशात्=प्रभावात्। दिशः=ककुभाः। श्यामायन्तः इव=धूमेन धूमिला क्रियन्ते यथा। तत्=अतः। अयम्=एषः। पर्वतकः =तदभिधो जनः। प्रेष्यताम्=प्रहितव्यः। इति=एवम्। अभिधीयमाना=कथ्यमाना। कथं कथमपि=येन केन प्रकारेण। चिन्तान्तरायतिरस्कृतासकृदालापम्—चिन्तान्तरायेण=चिन्तामाध्यमेन, तिरस्कृतम्, असकृत्=बारंबारम्, आलापम्=कथनम्, येन तथाविधम्। मुखम्=आननम्। ईषत्=स्तोकम्। उन्नमय्य=ऊर्ध्वं विधाय। समुल्लसत्=विभ्राजत्। अशोकपल्लवानुकारि=अशोककिसलयानुरूपम्। करतलम्=हस्ततलम्। उत्तानीकृत्य=उत्थाप्य। माम्=पर्वतकम्। अविस्मरणीयसम्मानदानावसाने—अविस्मरणीयस्य=चिरस्मरणीयस्य, सम्मानदानस्य=सत्कारप्रदानस्यावसाने=समाप्तौ। व्यसर्जयत्=विससर्ज।

**हिन्दी**—तदनन्तर वाराङ्गनाओं के चाटुकार वचन-क्रम को रोक दिया गया। अचानक उत्पन्न हुआ विस्मय भुला दिया गया। अत्यधिक पड़े पाले से आहत नूतन नलिन पत्र के समान बड़ी-बड़ी आँखें मलिन पड़ गईं। गर्म, तेज श्वास चलने के कारण असह्य वेदना से मुखकमल की कान्ति फीकी पड़ गई। उसकी ऐसी दशा को देखकर सखियों ने दुःखी होकर कहा—देवि! आपकी श्वासवायु की परंपरा से व्याकुल जैसे सूर्य भगवान् अपने हाथों (किरणों) से अस्ताचल का अवलम्बन ले रहे हैं। और यह सौभाग्यशाली नल में अनुरक्त तुम्हारे इस लोकपालों की भौमिक प्रार्थना-सम्बन्धी प्रसङ्ग को सुनकर लज्जित सी दिवसलक्ष्मी कान बन्द किये दूर चली जा रही है। यह निश्चल छिपे हुये भ्रमरों द्वारा पिये जा रहे गर्भ-मधु वाले कमल मानो नयन बन्द कर रहे हैं। विषाद का बटवारा करती हुई समान अवस्था वाली यह सरोवर की कलिनियाँ लग रही हैं तथा 'हमारे पति मानवी कन्या की कामना कर रहे हैं?' इस ईर्ष्या तथा शोक से व्याकुल मानों दिशाएँ मलिन बनती जा रही हैं।

'अतः इस पर्वतक को भेज दीजिये'। यह कहे जाने पर जैसे-तैसे चिन्ता के माध्यम से तिरस्कृत बार-बार कहे जा रहे मुख को कुछ ऊपर उठा कर, अशोक किसलय का अनुकरण करने वाले करतल को उठाकर मुझे चिरस्मरणीय सम्मान प्रदान करने के अनन्तर विदा किया।

**विसर्जितश्च तया तत्कालमाविर्भवद्विषादवशसम्पन्नमौनया न पुनः सम्भावितोऽस्मि, न वीक्षितोस्मि, न पृष्टम्, न सन्दिष्टं किमपि, केवलं चलन्नेत्रविभागप्रान्ततरत्तारया दृष्ट्या समवलोक्य समुत्तानितकरकमलसंज्ञयैव कथ-**

**मपि सम्प्रेषितः 'कष्टम्' इति चिन्तयन्नलसालसैरसमञ्जसपातिभिः पश्चिम-मुखैरिव पादैरिहायातवान् ।**

सुधा—विसर्जित इति । तत्कालम् = तत्क्षणम् । आविर्भवद्विषादवशसम्पन्न-मौनया—आविर्भवतः = प्रकटतः, विषादवशात् = खेदवशात्, सम्पन्नं मौनम् = मूकभावो यया तया । तया = दमयन्त्या । विसर्जितः = कृतविसर्जनः । च । न पुनः सम्भाषितः अस्मि = भूयो नैव कथितोऽस्मि । न वीक्षितः = नावलोकितः, अस्मि । न पृष्टम् = न कापि पृच्छा कृता । न किमपि सन्दिष्टम् = नैव कश्चित् सन्देशो दत्तः । केवलम् = मात्रम् । चलन्नेत्रविभागप्रान्ततारया—चलतोः = चञ्चलयोः, नेत्रविभागयोः = नयन-भागयोः, प्रान्ते तरती = चलती, तारा = कनीनिका, यस्यास्तया । दृष्ट्या = दृषा । समवलोक्य = समीक्ष्य । समुत्तानितकरकमलसंज्ञया एव—समुत्तानितेन = उत्थापितेन करकमलेन = हस्तपद्मेन या संज्ञा = संकेतः, तया एव । कथम् अपि = केनापि प्रकारेण । सम्प्रेषितः = सम्प्रहितः अहम् । कष्टम् = दुःखम् । इति = एवम् । चिन्तयन् = विचार-यन् । अलसालसैः = अत्यालस्ययुक्तैः । असमञ्जसपातिभिः द्विविधपातिभिः । पश्चिम-मुखैः = विपरीतैरिव, पादैः = चरणैः अहम् । इह = अत्र । आयातवान् = आगच्छम् ।

हिन्दी– तत्काल प्रकटित विषादवश मौनधारण किये हुये उस दमयन्ती ने मुझे विदा कर पुनः न कुछ कहा, न मेरी ओर देखा, न पूछा और न कुछ सन्देश ही दिया केवल चञ्चल नेत्रों के एक छोर पर पुतली घुमाती हुई दृष्टि से देखकर अपने कर कमल को उठाकर इशारे से ही मुझे भेज दिया । तथा—'कष्ट है' यह सोचता हुआ आलस्ययुक्त, असमञ्जस ( द्विविधा ) में पड़े उलटे पाँवों से ही मैं यहाँ आ पाया हूँ ।

**तद्देव दमयन्ती देवदूतकार्याङ्गीकरणव्यतिकरमिममाकर्ण्य परं विषाद-मापद्यत ।**

सुधा—तदिति । तत् = अतः । देव = स्वामिन् ! भवतः । इमम् = एतम् । देवदूत-कार्याङ्गीकरणव्यतिकरम्—देवानाम् = इन्द्रादिलोकपालानाम्, दूतकार्यस्य = दौत्य-स्याङ्गीकरणव्यतिकरम् = स्वीकरणप्रसङ्गम् । आकर्ण्य = श्रुत्वा । दमयन्ती = भैमी । परम् = अत्यधिकम् । विषादम् = दुःखम् । आपद्यत = अपतत् ।

हिन्दी—स्वामिन् ! आपके इस देवताओं के दूत-कार्य को अङ्गीकार करने के प्रसङ्ग को सुनकर दमयन्ती अत्यधिक दुःख में पड़ गई है ।

**अन्यच्च । मन्ये च—**

**परिम्लानच्छायाविरहितसनिद्रद्रुमवनं**
**पतत्पङ्क्तीभूतध्वनितशकुनोन्नादितनभः ।**
**वियोगव्याकूतादुपनदि रुदच्चक्रमिथुनं**
**विषीदन्त्यां देव्यामिदमपि विषण्णं जगदभूत् ॥ २५ ॥**

**अन्वयः**—देव्यां विषीदन्त्याम् इदं जगत् अपि विषण्णम् अभूत् । परिम्लान-

च्छायाविरहितसनिद्रद्रुमवनं, पतत्पङ्क्तीभूतध्वनितशकुनोन्नादितनभः उपनदिवियोगाकूतात् रुदच्चक्रमिथुनम् ।। २५ ।।

**सुधा—अन्यदिति** । अन्यत् च = अपरञ्च । मन्ये च = अनुमीये च—

**परिम्लानेति** । देव्याम् = दमयन्त्याम् । विषीदन्त्याम् = व्याकुलायाम् । इदम् = एतत् । जगद् = विश्वम् अपि । विषण्णम् = खिन्नम् । अभूत् = बभूव । परिम्लानच्छायाविरहितसनिद्रद्रुमवनम् —परिम्लानम् = मलिनम्, छायाविरहितम् = छायाहीनम्, सनिद्रम् = निद्रायुक्तम्, इव द्रुमवनम् = पादपसमूहम् अभूत् । पतत्पङ्क्तीभूतध्वनितशकुनोन्नादितनभः—पतद्भिः = अधोगच्छद्भिः, च पङ्क्तीभूतैः = पंक्तिबद्धैः, ध्वनितैः = कूजद्भिः, शकुनैः = पक्षिभिः, उन्नादितम् = कोलाहलपूर्णम्, नभः = आकाशम् अभूत् । उपनदि = नदीतटे । वियोगव्याकूतात् = वियोगव्याकुलतायाः । रुदच्चक्रमिथुनम्—रुदत् = रोदनं कुर्वत्, यत् चक्रमिथुनम् = चक्रवाकयुगलम् अभूत् । शिखरिणी वृत्तम् ।। २५ ।।

**हिन्दी**—और भी—मैं समझता हूँ कि देवी दमयन्ती के दुःखी होने पर यह संसार भी विषण्ण हो गया है । वृक्षसमूह मलिन, छायारहित, निद्रित-सा हो गया है, आकाश नीचे को आ रहे पंक्तिबद्ध चहचहाते हुए पक्षियों से कोलाहलपूर्ण हो गया है और नदी तट पर चक्रवाक जोड़े वियोग से व्याकुल होकर रो रहे हैं ।

**इत्यभिधाय स्थिते पर्वतके तत्कालोचितमिममेवार्थं समर्थयन्नवसरपाठकः पपाठ ।**

**सुधा—इत्यभिधायेति** । इति = एवम् । अभिधाय = कथयित्वा । पर्वतके स्थिते = अवस्थिते । अवसरपाठकः—अवसरे = समये, पाठकः = प्रशंसकः, चारणः । तत्कालोचितम् = तत्क्षणोपयुक्तम् । इमम् = एतम् एव । अर्थम् = हेतुम् । समर्थयन् = अनुमोदयन् । पपाठ = अपठत् ।

**हिन्दी**—यह कहकर पर्वतक के चुप हो जाने पर अवसरपाठक ने तत्कालोचित इसी अर्थ को समर्थित करते हुए पढ़ा—

**'कन्यामन्यानुरक्तां कथममृतभुजो मानुषीं कामयन्ते**
**तन्वङ्गीः सस्मितास्याः स्मरविवशदृशो नाकनारीर्विहाय ।**
**वक्तुं खेदादिवैतद्दिनपतिरधिकं व्रीडयैवावनम्रः**
**कोपेनेवारुणांशुः प्रविशति वरुणस्यालयं पश्चिमाब्धिम् ।। २६ ।।**

**अन्वयः**—अमृतभुजः तन्वङ्गीः सस्मितास्याः स्मरविवशदृशः नाकनारीः विहाय अन्यानुरक्तां मानुषीं कन्यां कथं कामयन्ते । अधिकं व्रीडया अवनम्रः खेदात् वक्तुम् एव अरुणांशुः कोपेन वरुणस्य आलयम् पश्चिमाब्धिम् प्रविशति इव ।। २६ ।।

**सुधा—कन्यामिति** । अमृतभुजः—अमृतम् = सुधारसम्, भुञ्जन्ति = खादन्तीति ते । देवाः । तन्वङ्गीः = कृशकायाः । सस्मितास्याः—सस्मितानि = विहसितानि आस्यानि = मुखानि यासां ताः । स्मरविवशदृशः—मन्मथविवशाः = कामपराधीनाः

दृशः=दृष्टयः यासां ताः । नाकनारीः=स्वर्गाङ्गनाः । विहाय=परित्यज्य । अन्यानुरक्ताम्—अन्ये=अपरे, नलनृपे, अनुरक्ताम्=आसक्ताम् । मानुषीम्=मानवीम् । कन्याम्=पुत्रीम् । कथम्=केन प्रकारेण । कामयन्ते=वाञ्छन्ति । अधिकम्=बहु । व्रीडया =त्रपया । अवनम्रः=अवनमितः । खेदात्=दुःखात् । वक्तुम्=कथयितुम् एव । अरुणांशुः=सूर्यः । कोपेन=क्रोधेन । वरुणस्य=जलाधिपतेः । आलयम्=भवनम् । पश्चिमाब्धिम्=पश्चिमसागरम् । प्रविशति इव=यथा प्रवेशं करोति । स्रग्धरावृत्तम् । अत्रोत्प्रेक्षालङ्कारः ॥ २६ ॥

हिन्दी—अमृतपान करने वाले देवता कृश शरीरवाली विस्मित नयनों वाली काममुग्ध दृष्टि वाली स्वर्गाङ्गनाओं को छोड़कर, अन्य ( नल ) पर अनुरक्त मानवी कन्या दमयन्ती के लिए क्यों लालायित हो रहे हैं ? अत्यधिक लज्जा से अवनत, खेद से मानो यह बात कहने के लिए ही अरुणांशु सूर्य क्रोध से वरुण देव के घर पश्चिम सागर में प्रवेश कर रहे हैं ॥ २५ ॥

**राजा तु तदाकर्णयन्, अवतीर्य सौधशिखरतलाल्लीलापदप्रचारेण सन्ध्यावन्दनविधिविरामोपविष्टजपद्द्विजजनसनाथसैकते सरित्सङ्गमे सन्ध्याह्निकमकरोत् ।**

सुधा—राजेति । राजा=नृपस्तु । तत्=तथाविधम् । आकर्ण्य=श्रुत्वा । सौधशिखरतलात्=प्रासाद-शिखरात् । अवतीर्य=अवतरणं कृत्वा । लीलापदप्रचारेण—लीलया=क्रीडया, पदप्रचारेण=चरणचालेन । सन्ध्यावन्दनविधिविरामोपविष्टजपद्द्विजजनसनाथसैकते—सन्ध्यावन्दनविधेः=सान्ध्यपूजनप्रकारस्य, विरामे=समाप्तौ, उपविष्टाः=आसीनाः, जपन्तः=जापतत्पराः, ये द्विजजनाः=विप्राः, तैः सनाथिते= सभाजिते, सैकते=बालुकामये । सरित्सङ्गमे=नदीसङ्गमस्थाने । सन्ध्याह्निकम्= सन्ध्याकालिकं दैनिक-कृत्यम् । अकरोत्=चकार ।

हिन्दी—राजा तो यह सुनते ही महल के शिखरभाग से उतर कर धीरे-धीरे पैदल ही सन्ध्यावन्दन करने के उपरान्त बैठे हुए जपतत्पर विप्रजनों से शोभित रेतीले नदी सङ्गम पर सायंकालीन दैनिक कृत्य करने लगा ।

**ततश्च पश्चिमायां दिशि स्फुरति सन्ध्यारागे, रुधिरासवपिपासया कालवेतालमण्डलीव प्रधावमाना, त्रिभिः स्रोतोभिः प्रवृत्तया गङ्गया सह संहर्षादिवानेकैः स्रोतसां सहस्रैर्गगनतलमिव प्लावयन्ती कालिन्दीव, व्यजृम्भत तिमिरपटलपङ्क्तिः ।**

सुधा—तत इति । ततश्च=तदनन्तरञ्च । पश्चिमायां दिशि=प्रतीची दिशायाम् । सन्ध्यारागे=सान्ध्यारुणे । स्फुरति=प्रस्फुरति । रुधिरासवपिपासया=रक्तसुरापानेच्छया । कालवेतालमण्डली इव=कालरूपा वेतालमण्डलीसमा, प्रधावमाना=धावमाना । त्रिभिः स्रोतोभिः=त्रिधाराभिः । प्रवृत्तया=प्रवहत्या गङ्गया सह=जाह्नव्या साकम् । संहर्षाद् इव=प्रतिद्वन्द्वितयेव । अनेकैः=बहुभिः । स्रोतसां सहस्रैः=नदीनां

धाराभिः । गगनतलम् = आकाशतलम्, प्लावयन्ती = निमज्जयन्ती, कालिन्दी इव = यमुनेव । तिमिरपटलपंक्तिः = अन्धकार-पटलराशिः । व्यजृम्भत = समुल्ललास ।

हिन्दी—तदनन्तर पश्चिम दिशा में सन्ध्या की अरुणिमा के फैलने पर रुधिर-आसव की प्यास से दौड़ रही कालरूपी वैतालमण्डली के समान तीन धाराओं से प्रवाहित गङ्गा के साथ प्रतिद्वन्द्विता-सी करती हुई अनेक (सहस्रों धाराओं से आकाश तल को प्लावित करती हुई कालिन्दी) यमुना जैसी अन्धकार-पटल राशि उल्लसित होने लगी ।

**अनन्तरं च चन्द्रमसा गर्भिणी पौरन्दरी दिक्केतकीपुष्पपत्त्रपाण्डिमानमगमत् ।**

**सुधा**—अनन्तरमिति । अनन्तरम् = तत्पश्चात् । चन्द्रमसा = चन्द्रेण । गर्भिणी = गर्भिता । पौरन्दरी = पुरन्दरस्येयं पूर्वदिशा । केतकीपुष्पपत्रपाण्डिमानम् = केतकी-पुष्पस्य । पत्रम् = दलम् इव, पाण्डिमानम् = पीतत्वम् । अभजत् = भेजे ।

हिन्दी—तत्पश्चात् चन्द्रमा से गर्भित पूर्वदिशा केतकी पुष्प के पत्र जैसी पीतता ( पीलेपन ) से शोभित हो उठी ।

**उल्ललास च चण्डतरमारुतान्दोलितोदयाद्रिद्रुमकुसुमकिञ्जल्करेणुराजिरिव कपिशा शशाङ्कद्युतिः ।**

**सुधा**—उल्ललासेति । चण्डतरमारुतान्दोलितोदयाद्रिद्रुमकुसुमकिञ्जल्करेणुराजिः इव—चण्डतरेण = तीव्रतरेण, मारुतेन = पवनेनान्दोलिताः = प्रकम्पिताः, उदयाद्रेः = उदयाचलस्य, द्रुमाः = वृक्षाः, तेषां कुसुमकिञ्जल्करेणु = पुष्पपरागधूलिः, तस्य राजिः = समूहः, इव = यथा । कपिशा = कपिशवर्णा । शशाङ्कद्युतिः = चन्द्रकान्तिः, उल्ललास = शुशुभे ।

हिन्दी—प्रचण्ड पवन के द्वारा आन्दोलित उदयाचल के वृक्षों के पुष्पों के पराग रेणु के समान कपासी रंग की चन्द्रकान्ति शोभित हो उठी ।

**अथ क्रमेण पूर्वपयोधिपुलिनाद्राजहंस इव गगनमन्दाकिनीमुच्चलितः केसरिकिशोर इवोदयगिरिगुहागह्वरात्तिमिरकरियूथपृष्ठलग्नः, स्फटिकमयः पूर्णकुम्भ इव जगद्विजयप्रस्थानस्थितस्य मङ्गलाय मकरकेतोः केनापि सज्जीकृतः, श्रीखण्डपिण्ड इव मण्डनाय महेन्द्रदिशाहस्तश्लेषोपलालितः, शङ्खिकापुष्पस्तबक इव गगनश्रिया श्रवणे संयोजितः, कुम्भ इवैकः प्राचीवनविहारिसुरकरीन्द्रस्य प्रकटतां गतः, वासरविरामवल्लीमुल्लूय कन्द इवोद्धृतो निशाशबरिकया, पाण्डुपुष्पाक्षतगुञ्जापुञ्ज इव सिद्धवधूभिरुदयाचलचतुष्पथे विरचितः, गण्डशैल इव कैलासशिखराल्लुठित्वागतः, सीमन्तमौक्तिकमिव पूर्वदिङ्मुखस्य, सितातपत्रमिव पूर्वाशाधिपतेः पुरन्दरस्य, क्रीडामौक्तिककन्दुक इव कालकुमारस्य क्षीरडिण्डीरपिण्डसदृशो दृष्टिपथमवततार तारापतिः ।**

सुधा—अथेति। अथ=अनन्तरम्। क्रमेण=क्रमशः। पूर्वपयोधिपुलिनात्—प्राची सिन्धुतटात्। राजहंस इव=मराल इव। गगनमन्दाकिनीम्=आकाशगङ्गाम्। उच्चलितः=उद्गतः। उदयगिरिगुहागह्वरात्—उदयाचलस्य गुहायाः गह्वरात्=गुहागर्भात्। तिमिरकरियूथपपृष्ठलग्नः—तिमिररूपस्य=अन्धकाररूपस्य, करियूथपस्य=गजराजस्य, पृष्ठे=पृष्ठदेशे, लग्नः केसरिकिशोरः इव=सिंहशावको यथा। जगद्विजयप्रस्थानस्थितस्य—जगतः=विश्वस्य, विजयाय=जयाय, प्रस्थाने=प्रयाणे, स्थितस्य=विद्यमानस्य। मकरकेतोः=कामदेवस्य। मङ्गलाय=कल्याणाय। केनापि=केनापि जनेन। सज्जीकृतः=विभूषितः। स्फटिकमयः=स्फटिकयुक्तः। पूर्णकुम्भः इव=पूर्णघट इव। महेन्द्रदिशा=पूर्वकाष्ठया। हस्तश्लेषोपलालितः—हस्तश्लेषेन=करालिङ्गनेनोपलालितः=सम्मानितः। मण्डनाय=अलङ्करणाय। श्रीखण्डपिण्डः इव—श्री खण्डस्य=चन्दनस्य, पिण्डः=गोलक इव। गगनश्रिया=आकाशलक्ष्म्या। श्रवणे=कर्णोपरि, संयोजितः=नियोजितः। शंखिकापुष्पस्तबक इव—शंखिकानाम कुसुमगुच्छ इव। प्राचीवनविहारिसुरकरीन्द्रस्य—प्राच्याम्=पूर्वदिशायाम्, वनविहारिणः=उद्यानविचरणशीलस्य, सुरकरीन्द्रस्य=देवगजेन्द्रस्यैरावतस्य। प्रकटताम् गतः=प्रगटितः। एकः=अपूर्वः, कुम्भः=ककुद् इव। वासरविरामवल्लरीम्=दिवसावसान-लताम्। उल्लूय=छित्वा। निशाशवरिकया—निशा=रजनी, रूपा शवरिका=भिल्लनी, तया। उद्धृतः=निःसारितः। कन्दः इव=कन्दलमिव। सिद्धवधूभिः=सिद्धजनस्त्रीभिः। उदयाचलचतुष्पथे—उदयाचलस्य=उदयगिरेश्चतुष्पथे=चतुर्मार्गे। विरचितः=रचितो धृतो वा। पुष्पाक्षतगुञ्जापुञ्ज इव—पुष्पाणाम्=कुसुमानाम्, अक्षतानाम्=तण्डुलानाम्, गुञ्जानाञ्च पुञ्जः=समूहः इव। कैलासशिखरात्=कैलासपर्वतस्योच्चभागात्। लुठित्वा=भङ्क्त्वा। आगतः=आयातः। गण्डशैल इव=प्रस्तरखण्डमिव। पूर्वदिङ्मुखस्य=प्राचीदिशाननस्य। सीमन्तमौक्तिकम् इव=शिरोभूषणमिव। पूर्वाशाधिपतेः=प्राचीदिक्स्वामिनः। पुरन्दरस्य=शक्रस्य। सितातपत्रमिव=शुभ्रच्छत्रमिव। कालकुमारस्य=यमसुतस्य। क्रीडामौक्तिककन्दुक इव=लीलामुक्ताकन्दुकसमः। क्षीरडिण्डीरपिण्डसदृशः=दुग्धफेनस्य पिण्डसदृशः=गोलकसमः। तारापतिः=उडुपतिश्चन्द्रः। दृष्टिपथम्=दृङ्मार्गम्। अवततार=अवातरत्।

हिन्दी—इसके बाद क्रमशः पूर्वपयोधितट से आकाशगङ्गा की ओर प्रस्थित राजहंस के समान, उदयाचल की गुफा गह्वर से निकले अन्धकार रूपी गजेन्द्र की पीठ पर लदे सिंहशावक के समान, संसार विजय के लिए प्रस्थान किये हुये कामदेव के मङ्गल ( कल्याण ) के लिए किसी के द्वारा सजाये गये स्फटिकमय पूर्णकुम्भ के समान, पूर्वदिशा द्वारा हाथों के आलिंगन से सम्मानित अलङ्करण के लिए चन्दन के गोले जैसा, आकाशलक्ष्मी के द्वारा कान पर चढ़ाये गये शंखिकापुष्प ( संखुलिया ) के गुच्छे सदृश, प्राचीदिशा रूप वन में विहार करने वाले देवताओं के गजराज ऐरावत के प्रकट हुये अनुपम कुम्भ के समान, दिवसावसानरूपी लता को काट कर रात्रि रूपी शवरी ( भीलनी ) द्वारा निकाले गये कन्द सदृश, सिद्धस्त्रियों द्वारा उदयाचल के

चौराहे पर रखे फूल-अक्षत तथा गुन्जाराशि जैसा कैलास के शिखर से टूट कर आये गण्डशैल के समान, पूर्व दिशामुख के सीमन्त मौक्तिक (एक प्रकार के आभूषण) जैसा, प्राचीदिशा के स्वामी पुरन्दर ( इन्द्र ) के शुभ्रछत्र के समान, कालकुमार के क्रीडा के मौक्तिककन्दुकसदृश, दुग्धफेन पिण्ड जैसा उज्ज्वल तारापति चन्द्रमा दृष्टिपथ पर अवतरित हुआ ( दृष्टिगोचर ) हुआ।

**तदनु च—**

**मदनमिति युवानं यौवराज्येऽभिषिञ्चन्**
**कृतकुमुदविकासो भासयन्दिङ्मुखानि।**
**इमममृततरङ्गैः प्लावयञ्जीवलोकं**
**गगनमवजगाहे मन्दमन्दं मृगाङ्कः॥ २७॥**

**अन्वयः**—मदनं युवानां यौवराज्ये अभिषिञ्चन् इति, कृतकुमुदविकासः दिङ्मुखानि भासयन्, इमं जीवलोकम् अमृततरङ्गैः प्लावयन् मृगाङ्कः मन्दमन्दं गगनम् अवजगाहे॥ २७॥

**सुधा—मदनमिति।** मदनम्=कामदेवम्। युवानम्=तरुणम्। यौवराज्ये=युवराजपदे। अभिषिञ्चन्=राजतिलकं कुर्वन्। इति=एवम्। कृतकुमुदविकासः—कृतः=विहितः, कुमुदानाम्=कुमुदकुसुमानाम्, विकासः येन तथाविधः दिङ्मुखानि=दिशावदनानि। भासयन्=दीपयन्। इमम्=एतम्। जीवलोकम्=प्राणिलोकम्। अमृततरङ्गैः=सुधावीचिभिः। प्लावयन्=स्नपयन्। मृगाङ्कः=चन्द्रः। मन्दमन्दम्=शनैः-शनैः। यौवराज्याभिषेकाद्यनेककार्यव्यग्रतया मन्दमन्दमिति। गगनम्=आकाशम्। अवजगाहे=अवगाहनं चकार। मालिनी वृत्तम्॥ २७॥

**हिन्दी**—तथा तदनन्तर—मदन युवक को युवराज पद पर अभिषिक्त करता हुआ, कुमुद पुष्पों को विकसित कर दिशाओं के मुखों को प्रकाशित करता हुआ इस जीवलोक को सुधा तरङ्गों से नहलाता हुआ मृगाङ्क ( चन्द्रमा ) ने धीरे-धीरे आकाश में अवगाहन किया॥ २७॥

**तदनन्तरम्, आप्लावितमिव मुक्तमर्यादेन दुग्धवार्धिना, सिक्तभूभागाङ्गणमिवामन्दचन्दनाम्बुच्छटाभिः, विलिप्तदिग्भित्तिकमिव सान्द्रसुधापङ्कपिण्डितैः, पूरितमिवोत्सर्पिकर्पूरपांसुवृष्टया, प्रविष्टमिव स्फाटिकमणिमहामन्दिरोदरदरीम्, उत्प्लवमानमिव द्रवीभूततुहिनाचलमहाप्लवेन, भुवनमासीत्।**

**सुधा—तदनन्तरमिति।** तदनन्तरम्=तत्पश्चात्। मुक्तमर्यादेन—मुक्ता=त्यक्ता मर्यादा=सीमा येन, तादृशेन। दुग्धवार्धिना=क्षीरसागरेण। आप्लावितम् इव=स्नापितं यथा। अमन्दचन्दनाम्बुच्छटाभिः—अमन्दाः=उज्ज्वलाः याश्चन्दनाम्बुच्छटाः=चन्दनजलशोभास्ताभिः। सिक्तभूभागाङ्गणम् इव—भूभागमेवाङ्गणम्=भूतलाजिरम् यथा। सान्द्रसुधापङ्कपिण्डितैः—सुधापङ्कस्य=अमृतकर्दमस्य, पिण्डितानि=

लेपनानि, सान्द्राणि=सघनानि, यानि सुधापङ्कपिण्डितानि, तैः । विलिप्तदिग्विभक्तिकम् इव—विलेपनपूर्णदिशाभित्तिमिव । उत्सर्पिकर्पूरपांसुवृष्ट्या=सुगन्धितकर्पूररेणुवर्षया । पूरितम् इव=भरितम् इव । स्फाटिकमणिमहामन्दिरोदरदरीम्—स्फाटिकमणेः= चन्द्रमणेः महामन्दिरस्य=विशालप्रासादस्योदरदरीम्=मध्यभागम् इव । प्रविष्टम्= कृतप्रवेशम् । द्रवीभूततुहिनाचलमहाप्लवेन—द्रवीभूतस्य=स्निग्धस्य, तुहिनाचलस्य= हिमालयस्य, महाप्लवेन=विशालप्लवेन । उत्प्लवमानम् इव=उत्प्रवहमानम् इव । भुवनम्=लोकम् । अभूत्=बभूव ।

हिन्दी—तदनन्तर सीमा तोड़कर उफनाये हुये क्षीरसागर द्वारा डुबाये गये जैसे अमन्द चन्दन रस की छटाओं से सिंचे भूभाग रूपी आँगन सदृश, गहरे चूने के लेप से लीपी गई दिशाओं रूपी दीवारों के समान, सुगन्धित कर्पूर रेणु की वर्षा से भरा हुआ जैसा, चन्द्रकान्तमणि से निर्मित विशाल भवन के मध्य भाग में प्रविष्ट हुआ जैसा पिघले हुये हिमालय की विशाल बाढ़ से डूब रहा जैसा संसार हो गया ।

**ततश्च—**

**कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्त्रायितं**
**मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः ।**
**मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः**
**श्वेतद्वीपजनायितं जनपदैर्जातं शशाङ्कोदये ।। २८ ।।**

**अन्वयः**—शशाङ्कोदये, अद्रिभिः कैलासायितम्, विटपिभिः श्वेतातपत्रायितम् मृत्पङ्केन दधीयितम्, जलनिधौ वारिभिः दुग्धायितम्, व्रततिभिः, मुक्ताहारलतायितम्, श्रीफलैः शङ्खायितम् जनपदैः श्वेतद्वीपजनायितं जातम् ।। २८ ।।

**सुधा—कैलासेति** । शशाङ्कोदये=चन्द्रोदये । अद्रिभिः=पर्वतैः । कैलासायितम्= कैलासपर्वतसदृशम् । विटपिभिः=पादपैः । श्वेतातपत्रायितम्=शुभ्रच्छत्रमिव । मृत्पङ्केन=मृत्कर्दमेन । दधीयितम्=दधिसमानम् । जलनिधौ=सागरे । वारिभिः= जलैः । दुग्धायितम्=पयःसमम् । व्रततिभिः=लताभिः । मुक्ताहारलतायितम्= मौक्तिकहारलतासम्पन्नमिव । श्रीफलैः=बिल्वफलैः । शङ्खायितम्=शंखसमानम् । जन-पदैः=ग्रामनगरैः । श्वेतद्वीपजनायितम्=श्वेतद्वीपसमानम् सर्वं लोकम् । अभूत्= आसीत् । शार्दूलविक्रीडितं वृत्तम् ।। २० ।।

**हिन्दी**—और तब—शशाङ्क के उदय काल में सभी पहाड़ कैलास पर्वत जैसे लगने लगे । वृक्ष श्वेत छत्र से लगने लगे । मिट्टी की पङ्क ( कीचड़ ) दही-सी लगने लगी । सागर में जल दूध जैसा लगने लगा । लता वल्लरियाँ मुक्ताहार लताओं जैसी दिखाई पड़ने लगी । श्रीफल ( बेल ) शंख जैसे लगने लगे तथा गाँव और नगर श्वेत द्वीप सदृश लगने लगे ।। २८ ।।

**अपि च—**

**सर्वेऽपि पक्षिणो हंसाः सर्वेऽप्यैरावता गजाः ।**
**जाताश्चन्द्रांशुभिः सर्वे रौप्यपुञ्जाः शिलोच्चयाः ।। २९ ।।**

**अन्वयः**—चन्द्रांशुभिः सर्वे अपि पक्षिणः हंसाः, सर्वे अपि गजाः ऐरावताः सर्वे शिलोच्चयाः रौप्यपुञ्जाः जाताः ॥ २९ ॥

**सुधा—सर्व इति।** चन्द्रांशुभिः—चन्द्रस्य=विधोः, अंशुभिः=किरणैः। सर्वेऽपि=समस्ता अपि। पक्षिणः=खगाः। हंसा=मरालाः। गजाः=सर्वेऽपि हस्तिनः। ऐरावताः=ऐरावतसमाः। सर्वे शिलोच्चयाः=सर्वे पर्वतोच्चभागाः। रौप्यपुञ्जाः=रजतराशयः। जाताः=सञ्जाताः। अनुष्टुप् वृत्तम् ॥ २९ ॥

हिन्दी—और भी—चन्द्रमा की किरणों से सभी पक्षी हंस जैसे लगने लगे, सभी हाथी ऐरावत सदृश दिखलाई पड़ने लगे और सभी पर्वतोच्चभाग ( चट्टानें ) चाँदी के ढेर जैसे प्रतीत होने लगे ॥ २९ ॥

**अपि च—**

**सुधापङ्कोपलिप्तेव बद्धेव स्फटिकोपलैः।**
**विलीनहिमदिग्धेव मेदिनी ज्योत्स्नया कृता ॥ ३० ॥**

**अन्वयः**—ज्योत्स्नया सुधापङ्कोपलिप्ता इव स्फटिकोपलैः बद्धा इव विलीनहिमदिग्धा इव मेदिनी कृता ॥ ३० ॥

**सुधा—सुधेति।** ज्योत्स्नया=चन्द्रिकया। सुधापङ्कोपलिप्ता इव=सुधाचूर्णलिप्ता यथा। स्फटिकोपलैः=स्फटिकप्रस्तरैः। बद्धा=जटिला यथा। विलीनहिमदिग्धा इव=तुहिनव्यापृतेव। मेदिनी=भूमिः। कृता=विहिता ॥ ३० ॥

हिन्दी—और भी चन्द्रमा की ज्योत्स्ना ने चूने से लिपी पुती, स्फटिक पत्थरों से जड़ी हुई, जमे हुये बर्फ से व्याप्त जैसी मेदिनी कर डाली ॥ ३० ॥

**अपि च—**

**सौधस्कन्धतलानि दीपपटलैः कम्पेन पाण्डुध्वजाः**
**हंसाः पक्षविधूननेन मृदुना निद्रान्तनादेन च।**
**लक्ष्यन्ते कुमुदानि षट्पदरुतैरुत्सर्पिगन्धेन च**
**क्षुभ्यत्क्षीरपयोधिपूरसदृशे जाते शशाङ्कोदये ॥ ३१ ॥**

**अन्वयः**—क्षुभ्यत्क्षीरपयोधिपूरसदृशे शशाङ्कोदये जाते दीपपटलैः सौधस्कन्धतलानि, कम्पेन पाण्डुध्वजाः हंसा पक्षविधूननेन मृदुना निद्रान्तनादेन च कुमुदानि षट्पदरुतैः उत्सर्पिगन्धेन च लक्ष्यन्ते ॥ ३१ ॥

**सुधा—सौधेति।** क्षुभ्यत्क्षीरपयोधिपूरसदृशे—क्षुभ्यतः=उद्वेलितस्य, क्षीरपयोधेः=क्षीरसागरस्य, पूरसदृशे=पूरसमे। शशाङ्कोदये=चन्द्रोदये। जाते=सञ्जाते। सौधस्कन्धतलानि=प्रासादोद्र्ध्वस्थलानि। दीपपटलैः=दीपकसमूहैः। कम्पेन=कम्पनेन। पाण्डुध्वजाः=श्वेतपताकाः। हंसाः=मरालाः। पक्षविधूननेन—मुखस्फालनेन। मृदुना=मधुरेण। निन्द्रान्तनादेन=निद्रापश्चातकलरवेण च। कुमुदानि=कुमोदिनीपुष्पाणि। षट्पदरुतैः=भ्रमरगुञ्जारवैः। उत्सर्पिगन्धेन च=प्रवहता सुगन्धेन च। लक्ष्यन्ते=दृश्यन्ते। शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

हिन्दी—और भी—उमड़ते हुये क्षीरसागर के पूर ( बाढ़ ) सदृश चन्द्रोदय के होने पर उच्चाट्टालिकाएँ दीपकों के जलने से, शुभ्र पताकाएँ कम्पन से, हंस पंखों के फड़फड़ाने से और शयनोपरान्त मधुर निनाद से तथा कुमुद पुष्प भौंरों की गुञ्जार और फैलती हुई सुगन्ध से ही जाने जा सकते थे अन्यथा उन सबको समझना ही असम्भव हो गया था ।। ३१ ।।

**तथाविधे च चन्द्रोदयप्रपञ्चे हठादुत्कण्ठयाभिभूयमानो निषधनाथश्चिन्तयाञ्चकार ।**

**सुधा**—**तथाविध इति** । तथाविधे=तादृशे । चन्द्रोदयप्रपञ्चे=विधूदयप्रपञ्चे । हठात्=बलात् । उत्कण्ठया=उत्सुकतया । अभिभूयमानः=प्रभावितः । निषधनाथः= नृपतिर्नलः । चिन्तयाञ्चकार=अचिन्तयत् ।

**हिन्दी**—और इस प्रकार चन्द्रमा के उदय प्रपञ्च में जबर्दस्ती प्रभावित नृपति नल सोचने लगा ।

**'इतश्चन्द्रः सान्द्रान्किरति किरणानग्निपरुषान्**
**इतोऽपि प्रोन्मीलत्कुमुदवनवायुर्विलसति ।**
**इतः कादम्बानां ध्वनितमपि निद्रालसदृशा-**
**मसह्यः सर्वोऽयं मनसिजमहिम्नः परिकरः ।। ३२ ।।**

अन्वयः—इतः चन्द्रः अग्निपरुषान् सान्द्रान् किरणान् किरति, इतः प्रोन्मीलत्कुमुदवनवायुः अपि विलसति । इतः निद्रालसदृशां कादम्बानां ध्वनितम् अपि । मनसिजमहिम्नः अयं सर्वः अपि परिकरः असह्यः ।। ३२ ।।

**सुधा**—**इतः इति** । इतः=इतो भागे । चन्द्रः=विधुः । अग्निपरुषान्=वह्निसदृशतीव्रान् । सान्द्रान्=सघनान् । किरणान्=रश्मीन् । किरति=विकिरति । इतः । प्रोन्मीलत्कुमुदवनवायुः—प्रोन्मीलतः=विकसतः, कुमुदवनस्य=कुमुदकाननस्य, वायुः =पवनः अपि । विलसति=शोभते । इतः । निद्रालसदृशाम्=निद्रायुक्तदृष्टीनाम् । कादम्बानाम्=हंसानाम् । ध्वनितम्=कूजितम् अपि । मनसिजः=मदनस्य । महिम्नः =महत्त्वस्य । अयम्=एषः । सर्वः अपि परिकरः=समस्तोऽपि परिकरः । असह्यः= असहनीयः जातः । शिखरिणी वृत्तम् ।। ३२ ।।

**हिन्दी**—इधर से चन्द्रमा अग्निसदृश परुष घनी किरणों को फैला रहा है । और इधर विकसित कुमुद वन का पवन विलसित हो रहा है । इधर नींद से अलसाई आँखों वाले हँसों का कलरव है । कामदेव की महिमा का यह सब सामान असह्य बन गया है ।। ३२ ।।

**अपि च**—

**इतो मकरकेतनः किरति दुर्निवारः शरा-**
**नितोऽपि वयमाकुलाः कुलिशपाणिदत्ताज्ञया ।**
**तदेतदतिसङ्कटं यदिह कैश्चिदुक्तं जनै-**
**रितो विषमदुस्तटी भयमितो महाव्याघ्रतः ।। ३३ ।।**

**अन्वयः**—इतः दुर्निवारः मकरकेतनः शरान् किरति । इतः कुलिशपाणिदत्ताज्ञया वयं अपि आकुलाः । तत् एतत् अतिसङ्कटम्, यत् इह कैश्चित् जनैः उक्तम्, इतः विषम दुस्तटी, इतः महाव्याघ्रतः भयम् ।। ३३ ।।

**सुधा—इतो मकरेति** । इतः = इतस्तु । दुर्निवारः = कष्टेन निवारणीयः । मकरकेतनः = मदनः । शरान् = बाणान् । किरति = क्षिपति । इतः । कुलिशपाणिदत्ताज्ञया कुलिशं पाणौ यस्य सः, तेन दत्ता आज्ञा = आदेशः तया । वयम् अपि । आकुलाः = व्याकुलाः । तत् = तादृक् । एतत् = इदम् । अतिसङ्कटम् = महद्विपत् । यत् । इह = अत्र । कैश्चित् जनैः = कैश्चित्पुरुषैः । उक्तम् = कथितम् । इतः । विषमदुस्तटी—विषमा = असह्या, दुस्तटी = दुसाध्या तटी । इतश्च । महाव्याघ्रतः = भयङ्करव्याघ्रात् । भयम् = भीतिः । 'सर्वतोऽप्यसह्या स्थितिर्वर्त्तते' इत्याशयः ।। ३३ ।।

**हिन्दी**—और भी—इधर मकर-केतन दुर्निवार बाणों को फेंक रहा है, इधर वज्रपाणि इन्द्र द्वारा दी गई आज्ञा से भी हम लोग व्याकुल हैं । सो यह अतिसंकटपूर्ण दशा है जो कुछ लोगों से कही गई है—इधर विषम दुर्गम तटी है तो उधर महाव्याघ्र से भय है । हर प्रकार असह्यदशा बनी हुई है ।। ३३ ।।

**तदिदानीं किमिह कर्तव्यम्, कथं वा हास्येनाप्यबन्ध्यवचसामलङ्घनीयः खल्वादेशो लोकपालानाम्' इति चिन्तयन्नेकाकी पद्भ्यामेव विनिर्गत्य निजनिकेतनात्समन्तादापतद्भिः शशाङ्ककिरणजालैः परिजनैरिव परिदर्शितवर्त्मा कैश्चित्काललवैः कैलासकूटायमानाट्टालकाभोगभव्यं भीमभूपालभवनमवाप्य कन्यान्तःपुरं पुरन्दरवरप्रदानाददृश्यमानरूपः प्रासादपालकैः प्रविवेश ।**

**सुधा—तदिति** । तत् = अतः । इदानीम् = साम्प्रतम् । इह = अत्र । किंकर्तव्यम् = किंकरणीयम् । वा=अथवा । कथम् = केन प्रकारेण । अवन्ध्यवचसाम्=अलङ्घ्यवाणीनाम् । लोकपालानाम् = इन्द्रादिदेवानाम् । खलु = किल । आदेशः = आज्ञा । हास्येनापि=हास्यदशयापि । न उल्लङ्घनीयः=उल्लङ्घनयोग्यः नास्तीति । इति = एवम् । चिन्तयन् = विचारयन् । एकाकी=एकलः । पद्भ्याम् = पदातिरेव । निजनिकेतनात् = आत्मभवनात् । विनिर्गत्य = निःसृत्य । समन्तात् = परितः । पतद्भिः = स्खलद्भिः । शशाङ्ककिरणजालैः=चन्द्रकिरणसमूहैः । परिजनैः इव=सेवकैरिव । परिदर्शितवर्त्मा—परिदर्शितम्, वर्त्म = मार्गम्, यस्य सः । कैश्चित्काललवैः = कतिपयैः क्षणैः । कैलासकूटायमानाट्टालिकाभोगभव्यम्—कैलासकूटायमानाः=कैलासपर्वतसमानाः, अट्टालिकाः = उच्चसौधानि, तैः भोगभव्यम्=सुखसुन्दरम् । भीमभूपालभवनम्—भीमभूपालस्य= भीमनृपतेः, भवनम् = प्रासादम् । अवाप्य=प्राप्य । कन्यकान्तःपुरं = स्त्रीजनान्तःपुरम् । पुरन्दरवरप्रदानात् = इन्द्रवरदानात् । अदृश्यमानरूपः=अलक्ष्यस्वरूपः । प्रासादपालैः= राजभवनरक्षकैः । प्रविवेश = अविशत् ।

**हिन्दी**—अतः अब यहाँ क्या करना चाहिए, अथवा किस प्रकार अलंघनीय वाणी वाले इन्द्रादि लोकपालों के आदेश का उल्लंघन हंसी में भी नहीं करना चाहिए । यह

सोचते हुए अकेले पैदल ही अपने निवास भवन से निकल कर चारों ओर पड़ रही चन्द्रकिरणों के जाल से परिजनों के समान मार्ग दर्शन किये जाते हुए कुछ क्षणों में कैलासपर्वत सदृश ऊँची अट्टालिकाओं से मनोरम राजा भीम के राजभवन को पाकर इन्द्र के वरदान से राजभवन के रक्षकों के अदृश्यमान स्वरूप होकर नृपनल कन्याओं के अन्तःपुर में प्रविष्ट हुआ।

**प्रविश्य च दूरादभिमुखागतेनानवरतदह्यमानकृष्णागुरुधूपधूमवर्त्तिनर्तकेन बहलयक्षकर्दमाम्बुसिक्तसौधस्कन्धसन्धिसञ्चारिणा गन्धवाहेन कृताभ्युत्थान इव, परिक्रम्य स्तोकमन्तरम् 'इत इतो देवी वर्त्तते' इति गीतगोष्ठीस्थितसखीगीतझङ्कारेणाहूयमान इव, यत्रास्ते दमयन्ती तत्सौधपृष्ठमारूढवान्।**

सुधा—प्रविश्येति। प्रविश्य=प्रवेशं कृत्वा। दूरात्=दूरस्थानात्। अभिमुखागतेन=सम्मुखमायातेन। अनवरतम्=निरन्तरम्। दह्यमानकृष्णागुरुधूपधूमवर्तिनर्तकेन—दह्यमानस्य=ज्वलतः, कृष्णागुरोः=श्यामागुरोः, धूपस्य च धूमवर्तिनर्तकेन=अगरवर्त्तिचालकेन। बहलयक्षकर्दमाम्बुसिक्तसौधस्कन्धसन्धिसञ्चारिणा—बहलेन=अत्यधिकेन, यक्षकर्दमाम्बुना=कस्तूरिकाकर्पूरादीनां, सुगन्धिजलेन सिक्तानाम् सौधस्कन्धानाम्=प्रासादाट्टालिकानाम्, सन्धिषु=सन्धिभागेषु, सञ्चारिणा=भ्रममाणेन। गन्धवाहेन=पवनेन। कृताभ्युत्थान इव=विहितस्वागत इव। परिक्रम्य=चङ्क्रम्य। स्तोकम्=किञ्चिदन्तरम्। इत इतः=अत्र स्थाने। देवी=भैमी। वर्तते=तिष्ठति। इति=एवम्। गीतगोष्ठीस्थितसखीगीतझङ्कारेण—गीतगोष्ठीषु=संगीतपरिषत्सु, स्थितानाम्=अवस्थितानाम्, सखीनाम्, गीतझङ्कारेण=गायनझङ्कृतया। आहूयमानः इव=आकार्यमाण इव। यत्र=यत्स्थाने। दमयन्ती=भीमसुता आसीत्। तत्सौधपृष्ठम्=तस्मिन् प्रासादभूमिम्। आरूढवान्=आरुरोह।

हिन्दी—प्रवेश कर, दूर से सामने आये हुये निरन्तर जल रहे कृष्णागुरु तथा धूप की धूमवती को नचाते हुये, पर्याप्त कर्पूर कस्तूरिका रसगन्ध से सिक्त प्रासाद की अट्टालिकाओं की सन्धि में सञ्चरण करने वाले गन्धवाह-पवन के द्वारा मानों उठ कर स्वागत किया गया राजा घूमकर थोड़ी दूर—इधर, इधर देवी जी हैं। इस प्रकार गीत गोष्ठियों में स्थित सखियों के गीत झंकार से मानों बुलाया जा रहा, जहाँ दमयन्ती थी उसी महल पर चढ़ गया।

**आरुह्य च मनाग्व्यवहितोऽनुपलक्ष्यमाण इव, वेणुवीणाक्वणानुसारिणा कोमलकाकलीप्रायेण किन्नरीप्रमुखसखीनां गीतेन विनोद्यमानाम्, अलकवल्लरीमध्यनिवेशिततारानुकारिमौक्तिकेन कज्जलकलङ्कितनयनोत्पलपक्ष्मपालिना मुखेन सचन्द्रगगनस्पर्धया भूतलमपि पूर्णोदितेन्दुमण्डलमिवापादयन्तीम्, उच्चकुचमण्डलविलोलया सस्मरसप्तर्षिग्रहगणपङ्क्त्येव हारलतया कृतकण्ठकन्दलाश्लेषाम्, ईषत्कपोलपालिं परामृशता चाटुकारेण**

**वसन्तसमयप्रहितदूतेनेव कर्णलग्नेन कुसुममञ्जरीद्वितीयेन बालपल्लवेन विराजितवदनाम्, अच्छाच्छैः कस्तूरिकापङ्कपत्रभङ्गैर्भुजङ्गैरिव लावण्यामृतरक्षागतैरलङ्कृतभव्यभुजशिखराम्, आसन्नभुवि विकीर्णैः पाण्डुपुष्पप्रकरैर्गगनादवतीर्य रूपालोकनकुतूहलिभिर्नक्षत्रैरिव परिवृताम्।**

सुधा—आरुह्येति। आरुह्य=आरोहणं कृत्वा च। मनाग्व्यवहितः=स्तोकं स्थितः। अनुपलक्ष्यमाण इव=अदृश्यमान इव। वेणुवीणाक्वणानुसारिणा—वेणोः वीणायाश्च क्वणम्=ध्वनिम् अनुसरतीति, तेन=वेणुविपञ्चीध्वन्यनुगामिना। कोमलकाकलीप्रायेण—ईषत् कलोऽस्यास्तीति काकली 'निषादः काकलीसंज्ञो द्विश्रुत्युत्कर्षणाद् भवेत्'। कोमलेन काकलीप्रायेण=मधुरकाकलीबहुलेन। किन्नरप्रमुखसखीनाम्—किन्नरवंशजातसखीनाम्। गीतेन=गानेन। विनोद्यमानाम्=प्रसाद्यमानाम्। अलकवल्लरीमध्यनिवेशिततारानुकारिमौक्तिकेन—अलकवल्लरीमध्ये=केशलतान्तरे निवेशितम्=तारानुकारिणा=तारानुकृतिना, मौक्तिकेन=मुक्ताफलेन। कज्जलकलङ्कितनयनोत्पलपक्ष्मपालिना—कज्जलेन कलङ्किता=कलङ्क इवाचरितवती, नयनोत्पलपक्ष्मपालिर्यत्र। कलङ्क इवाचरतियेत्याचारे क्विब्निष्ठे। मुखेन=आननेन। सचन्द्रगगनस्पर्द्धया—सचन्द्रेण=चन्द्रमसा सहितेन, गगनेन=आकाशेन, स्पर्धया। भूतलम्=पृथ्वीतलम् अपि। पूर्णोदितेन्दुमण्डलम् इव=पूर्णोदितचन्द्रमण्डलम् इव। उत्पादयन्तीम्=जनयन्तीम्। उच्चकुचमण्डलविलोलया=उच्चपयोधरवृत्तचञ्चलया। सस्मरसप्तर्षिग्रहगणपङ्क्तया इव =सकामसप्तर्षिनक्षत्रतत्या इव। हारलतया=मालया। कृतकण्ठकन्दलाश्लेषाम्—कृतः=विहितः, कण्ठकन्दले=गलकन्दले आश्लेषः, आलिङ्गनम्, यया ताम्। ईषत्कपोलपालिम्=स्तोकं गण्डस्थलीम्। परामृशता=स्पर्शं कुर्वता। चाटुकारेण=चाटुलेन। वसन्तसमयप्रहितदूतेन इव—वसन्तसमयेन=वसन्तर्त्तुना, प्रहितेन=प्रेषितेन, दूतेन=सन्देशवाहकेन, यथा। कर्णलग्नेन=श्रोत्रसंलग्नेन। कुसुममञ्जरीद्वितीयेन=पुष्पमञ्जरीपरेण। बालपल्लवेन=नवकिसलयेन। विराजितवदनाम्—विराजितम्=शोभितम्, वदनम्=आननम्, यस्यास्ताम्। अच्छाच्छैः=अतिस्वच्छैः। कस्तूरिकापङ्कपत्रभङ्गैः—कस्तूरिकापङ्केन=मृगाङ्केन रजसा, रचितरेखापत्रैः। भुजङ्गैः इव=सर्पैरिव। लावण्यामृतरक्षागतैः=सौन्दर्यसुधारक्षायै, आगतैः=आयातैः। अलङ्कृतभव्यभुजशिखराम्—अलङ्कृते=शोभिते, भव्ये=सुन्दरे, भुजशिखरे=बाहुशिखरे, यस्यास्ताम्। आसन्नभुवि=पार्श्ववर्तिभूमौ। विकीर्णैः=प्रसृतैः, पाण्डुपुष्पप्रकरैः=श्वेतपुष्पसमूहैः। गगनात्=नभसः। अवतीर्य=अधतरणं कृत्वा। रूपालोकनकुतूहलिभिः—रूपालोकने=सौन्दर्यदर्शने, कुतूहलिभिः=कौतूहलयुक्तैः। नक्षत्रैः=उडुभिः इव। परिवृताम्=परितः आवृताम्।

हिन्दी—सौध पृष्ठ पर चढ़कर न दिखलाई पड़ता हुआ सा कुछ ठहर कर (छिप कर) वेणु तथा वीणा की ध्वनि का अनुसरण करने वाले कोमल काकली ध्वनि बहुल किन्नर जाति की सखियों के गायन से मनोरञ्जन की जा रही, केशलतामध्य लगाये गये तारा जैसे मौक्तिक द्वारा, काजल से कजरारे नयन पलक पंक्ति वाले मुख

से चन्द्रमा सहित आकाश की स्पर्धा ( प्रतिद्वन्द्विता ) में भूतल को भी पूर्ण उदित चन्द्रमण्डल से युक्त करती हुई, उच्च कुचमण्डल की चञ्चलता से सकाम सप्तर्षिग्रहों की पंक्ति की भाँति हारलता से कण्ठाङ्कुर का आलिङ्गन की गई, चाटुकार वसन्त-काल के द्वारा प्रेषित दूत के समान कुछ-कुछ कपोल पालि का स्पर्श कर रहे, कान पर लगे कुसुममञ्जरी के सहित नूतन किसलय से शोभित मुखवाली, स्वच्छ कस्तूरी-रज से बनाये गये रेखापत्र रूपी सर्पों से मानों सौन्दर्य सुधा की रक्षा के लिए आये हुओं से शोभित सुन्दर भुजशिखरों वाली, पार्श्ववर्ती भूमि पर फैले श्वेत पुष्पसमूह से आकाश से उतरे सौन्दर्य दर्शन के लिए कौतूहल युक्त नक्षत्रों से घिरी ( दमयन्ती को देखा )।

**ऊरुनितम्बमण्डलस्पर्शसुखलम्पटतया नीवीप्रान्तपुञ्जिततरङ्गं क्षीरोदमिव वस्त्रतां गतमच्छपाण्डु नेत्रपट्टं परिदधानाम्, 'अहमेव त्वया स्वयंवरे वरणीयः' इत्यर्थितया पादलग्नेन शेषोरगेणेव रौप्यनूपुरवलयेन विराजित-वामचरणपल्लवाम् ।**

सुधा—ऊर्विति । ऊरुनितम्बमण्डलस्पर्शसुखलम्पटतया—ऊर्वोः=जघनयोः, नितम्ब-मण्डलस्य=नितम्बवृत्तस्य, च स्पर्शसुखस्य=स्पर्शानन्दस्य, लम्पटतया=लोभेन । नीवीप्रान्तपुञ्जिततरङ्गम्—नीवीप्रान्ते=नीवीबन्धनप्रान्ते, पुञ्जितरङ्गम्=राशीकृत-तरङ्गम् । क्षीरोदम्=क्षीरसागरम् इव । वस्त्रतां गतम्=वस्त्रत्वं प्रापितम् । अच्छ-पाण्डुनेत्रपट्टम्—स्वच्छशुभ्रनयनपट्टम् । परिदधानाम्=बिभ्राणाम् । अहम् एव, त्वया=दमयन्त्या । वरणीयः=चयनीयः । इति=एवम् । अर्थितया=प्रार्थनया । पादलग्नेन=चरणसंलग्नेन । शेषोरगेण=शेषनागेन इव । रौप्यनूपुरवलयेन=रजतनूपुर-वलयेन । विराजितवामचरणपल्लवाम्—विराजिते=शोभिते, वामचरणपल्लवे=वामपादपत्रे, यस्यास्ताम् ।

हिन्दी—ऊरु तथा नितम्ब मण्डल के स्पर्श सुख के लोभ से नीवी के चारों ओर पुञ्जित तरङ्गों वाले क्षीर सागर के समान वस्त्र सा बने स्वच्छ शुभ्र नेत्रपट्ट धारण की हुई, 'मुझे ही तुम्हें स्वयंवर में चुनना चाहिए' इस प्रार्थना से पाँव में लगे शेषनाग के सदृश रजत नूपुर वलय से शोभित बायें चरण पल्लव वाली ( दमयन्ती को देखा )।

**विविधविलासवर्तिकाभिरिवाकारिताम्, अमृतद्रववर्णकैरिव चित्रितावयवाम्, आनन्दकन्दलैरिव घटिताम्, मोहनमणिशिलायामिवोत्कीर्णाम्, शृङ्गारदारुणीवोत्कुट्टिताम्, वशीकरणपरमाणुभिरिव विनिर्मिताम्, मदन-मृत्पिण्डेनेव निष्पादिताम्, वज्रलेपपुत्रिकामिव दृशोः, आकर्षणमणिशलाका-मिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य, बहल-चन्दनाम्बुच्छटार्द्रितभुवि विकीर्णसुरभिपरिमलमिलन्मधुकररवानुमेयपाण्डु-पुष्पप्रकरे मसृणसितसुधाबन्धपिच्छले सौधस्कन्धे ज्योत्स्नामृतस्पर्शसुखमनु-**

**भवन्तीम्, अच्छांशुस्फटिकमणिपर्यङ्किकाङ्कभाजं दमयन्तीमलब्धनिद्रामद्राक्षीत् ।**

**सुधा—विविधेति** । विविधविलासवर्तिकाभिः—विभिन्नचित्रकूर्चिकाभिः आकारिताम्=आलिखिताम् । इव । अमृतद्रववर्णकैः इव=सुधारसबिन्दुभिर्यथा । चित्रितावयवाम्=चित्राङ्कितशरीराम् । आनन्दकन्दलैः इव=आनन्दाङ्कुरैरिव । घटिताम्=रचिताम् । मोहनमणिशिलायाम् इव=मोहनमणिप्रस्तरे यथा । उत्कीर्णाम्=खचिताम् । शृङ्गारदारुणीव=शृङ्गारकाष्ठे यथा । उत्कुट्टिताम्=जटिताम् । वशीकरणपरमाणुभिरिव=मोहनपरमाणुभिर्यथा । विनिर्मिताम्=रचिताम् । मदनमृत्पिण्डेन—मदनमृदः=काममृत्तिकायाः, पिण्डेन=गोलकेन । इव=यथा । निष्पादिताम्=कृताम् । दृशोः=चक्षुषोः । वज्रलेपपुत्रिकाम् इव—वज्रलेपस्य पुत्रिकाम्=पुत्तलिकाम् इव । हृदयस्य=चेतसः । आकर्षणमणिशलाकाम् इव—आकर्षणमणेः=आकर्षणरत्नस्य, शलाकाम्=वर्तिकाम् इव । अनुरागस्य=प्रेम्णः । जीवनौषधिम् इव=प्राणौषधिम् इव । मदनस्य=मन्मथस्य । जयपताकाम्=विजयपताकाम् इव । बहलचन्दनाम्बुच्छटार्द्रितभुवि—बहलचन्दनाम्बुच्छटया=पर्याप्तमलयजाम्बुशोभया, आर्द्रिता=सिक्ता, भूर्यस्य तथाविधे । विकीर्णसुरभिपरिमलमिलन्मधुकररवानुमेयपाण्डुरपुष्पप्रकरे—विकीर्णेन=प्रसृतेन, सुरभिपरिमलेन=सुगन्धिपवनेन, मिलतः मधुकरस्य=भ्रमरस्य, रवानुमेयम्=ध्वनिनाऽनुमातुं योग्यं, पाण्डुरम्=शुभ्रम्, पुष्पप्रकरम्=कुसुमसमूहं, यत्र तस्मिन् । मसृणसितसुधावन्धपिच्छले—मसृणम्=चिक्कणम्, सितसुधावन्धम्=श्वेतचूर्णलेपनम्, पिच्छलम् यत्र तादृशे । सौधस्कन्धे=प्रासादाट्टालिकायाम् । ज्योत्स्नामृतस्पर्शसुखम्—ज्योत्स्नारूपस्य=चन्द्रिकारूपस्यामृतस्य=सुधायाः, स्पर्शस्य सुखम्=आनन्दम् । अनुभवन्तीम्=अनुभवं कुर्वन्तीम् । अच्छांशुस्फटिकमणिपर्यङ्किकाङ्कभाजाम्—अच्छस्य=स्वच्छस्यांशुस्फटिकमणेः=सूर्यकान्तमणेः, पर्यङ्किकायाः=पीठिकायाः, अङ्कम्=क्रोडम्, भजति=शोभते, या तथाविधाम् । अलब्धनिद्राम्—न लब्धा=प्राप्ता, निद्रा=स्वपनम्, यया ताम् । दमयन्तीम्=भैमीम् । अद्राक्षीत्=अपश्यत् ।

**हिन्दी**—विविध विलास कूर्चिकाओं से चित्रित, सी, अमृत रस सदृश रंगों से चित्रित अङ्गों वाली, आनन्दरूपी कन्दलियों से बनाई गई जैसी, मोहनमणिशिला पर खुदी हुई सी, शृङ्गार रूपी काष्ठ पर तराशी गई जैसी, वशीकरण के परमाणुओं से बनाई गई जैसी, मदन रूपी मिट्टी के पिण्ड से मानों रची गई, दृष्टि के लिए वज्रलेप से बनी पुतली जैसी, हृदय की आकर्षण मणिशलाका सदृश, अनुराग की जीवनौषधि जैसी, मदन की विजयपताका-सी पर्याप्तचन्दनरस की छटा से गीली की गई भूमि वाले, बिखर रहे सुगन्धित वायु से मधुकरों की ध्वनि से जहाँ श्वेत-पुष्प राशि का अनुमान किया जा सकता था ऐसे, चिकने श्वेत चूने से बँधे पिच्छलों वाली महल की अट्टालिका पर चाँदनी के सुधा स्पर्श सुख का अनुभव करती हुई, उज्ज्वल सूर्य-

कान्तमणि से बने हुये पलंग के ऊपर विराजित दमयन्ती को देखा जिसे नींद नहीं आ रही थी।

**तां चावलोक्य विचिन्तितवान्। 'अहो स्थानेऽभिनिवेशो लोकपालानाम् अशेषसुखनिधानाय को न स्पृहयति।**

सुधा—तामिति। ताम्=दमयन्तीम्। अवलोक्य=दृष्ट्वा च। विचिन्तितवान्=चिन्तयामास। अहो=आश्चर्यम्। लोकपालानाम्=इन्द्रादिदिक्पालानाम्। स्थानेऽभिनिवेशः=उचितस्थाने प्रवृत्तिः। अशेषसुखनिधानाय—अशेषस्य=सम्पूर्णस्य, सुखस्य=आनन्दस्य, निधानम्=गृहम्, मूलं वा तस्मै। कः न स्पृहयति=को नाभिलषति।

हिन्दी—उसे देखकर ( वह ) सोचने लगा—अहो! उचित स्थान पर ही लोकपालों की प्रवृत्ति हुई है। समस्त सुख के निधान के लिए कौन अभिलाषा नहीं करता है।

**मन्ये च—विस्फारिततारेक्षणैरिमामेव पश्यन्नयमाकाशः सग्रहोऽभूत्।**

सुधा—मन्य इति। मन्ये च=अनुमीये च। विस्फारिततारेक्षणैः—विस्फारिताः=प्रसारिताः, ताराः=नक्षत्राणि, कनीनिकाश्च, येषां तथाविधैः ईक्षणैः=नयनैः। इमाम्=एताम् एव। पश्यन्=अवलोकयन्। अयम्=एषः आकाशः। सग्रहः—ग्रहाः=सूर्यादयस्तैः, सहितः=सनक्षत्रः। अभूत्=बभूव।

हिन्दी—ज्ञात होता है कि—विस्फारित पुतलियों वाले नयनों से इसी को देखता हुआ यह आकाश सग्रह हो गया है।

**अयं च चन्द्रश्चन्दनपाण्डुभिः करैरिमामेव परामृशन्मदनानलदाहमयीं व्रणलेखां कलङ्कच्छलेन हृदयेनोद्वहति।**

सुधा—अयमिति। अयम्=एषः। चन्द्रश्च=विधुश्च। चन्दनपाण्डुभिः=मलयजसदृशशुभ्रैः। करैः=किरणैः। इमाम्=एतां दमयन्तीम् एव। परामृशन्=स्पृशन्। मदनानलदाहमयीम्=कामाग्नितापयुक्ताम्। व्रणलेखाम्=व्रणचिह्नम्। कलङ्कच्छलेन=कलङ्कव्याजेन। हृदयेन=चेतसा। उद्वहति=धारयति।

हिन्दी—और यह चन्द्रमा चन्दन सदृश शुभ्र किरणों से इसी को स्पर्श करता हुआ कामाग्नि के ताप से युक्त व्रणचिह्न कलङ्क के बहाने हृदय से धारण करता है।

**अयमपि समीपोद्यानमारुतोऽस्याः समर्पितकुसुमगन्धः शनैरुत्तरीयांशुकमाक्षिपन्मदनातुरस्तिर्यक् पतति।**

सुधा—अयमिति। अयम्=एषः। समीपोद्यानमारुतः—समीपस्य=निकटवर्तिनः, उद्यानस्य=उपवनस्य, मारुतः=पवनः, अपि। अस्याः=एतस्याः। समर्पितकुसुमगन्धः—समर्पितः=दत्तः, कुसुमगन्धः=पुष्पगन्धः, येन सः। शनैः=मन्दम्। उत्तरीयांशुकम्=उत्तरीयवस्त्रम्। आक्षिपन्=प्रक्षिपन्। मदनातुरः=कामातुरः। तिर्यक्=वक्रत्वेन। पतति=स्खलति।

हिन्दी—यह समीपवर्ती उद्यान का पवन भी इसके फूलों की सुगन्ध देकर धीरे-धीरे आंचल को उठाता हुआ काम व्याकुल टेढ़े-टेढ़े गिर रहा है।

**सर्वथा जितं मनुष्यलोकेन, यत्रैवंविधमचिन्त्यम्, अनालोचनगोचरम्, अप्रतिमरूपम्, अद्भुतम्, अमूल्यमुदपद्यत स्त्रीरत्नम्।**

**सुधा—सर्वथेति।** सर्वथा=सर्वप्रकारेण। जितम्=विजितम्। मनुष्यलोकेन=मानवलोकेन। यत्र=यस्मिन् स्थाने। एवंविधम्=एतादृशम्। अचिन्त्यम्=अचिन्तनीयम्। अनालोचनगोचरम्=नेत्रैरपि अदृश्यम्। अप्रतिमरूपम्=अनुपमम्। अद्भुतम्=विचित्रम्। अमूल्यम्=महार्घम्। स्त्रीरत्नम्=नारीरत्नम्। उदपद्यत=उत्पादयामास।

हिन्दी—सर्वप्रकारेण जीत लिया है मनुष्य लोक ने जहाँ, इस प्रकार अचिन्तनीय, नयनों से भी जिसे न देखा गया हो, ऐसा अनुपम, अद्भुत, अमूल्य स्त्रीरत्न उत्पन्न किया है।

**आः प्रजापते, परिणतशिल्पोऽसि। संसार, सनाथोऽसि। मदन, महोत्सववानसि। चक्षुः, कृतार्थमसि। हृदय, पूर्णमनोरथमसि। दूरागमनश्रम, सफलोऽसि।**

**सुधा—आः इति।** आः प्रजापते=भो ब्रह्मन्! परिणतशिल्पः—परिणतम्=समाप्तम्, शिल्पम्=रचनाकौशलम् यस्य तादृशः। असि। संसार=हे विश्व! सनाथः=सफलः असि। मदन=हे मन्मथ! महोत्सववान्=कृतमहोत्सवः। असि। चक्षुः=अयि नेत्र! कृतार्थम्=कृतकृत्यम्। असि। हृदय=हे चेतः! पूर्णमनोरथम्—पूर्णं मनोरथं यस्य तत्=सफलकामम् असि। दूरागमनश्रम—दूरात्=दूरस्थानात् आगमनस्य श्रमः=परिश्रमः तत्सम्बुद्धौ। सफलः=सार्थकः असि।

हिन्दी—हे विधातः तुमने अपने कौशलकला को निखार ही दिया है। हे संसार तुम सफल हो गये हो। हे काम! तुम्हारा महोत्सव सफल हो गया है। हे नेत्र! तुम कृतार्थ हो। हे हृदय! तुम्हारा मनोरथपूर्ण हो गया है। हे दूर से आने के परिश्रम! तुम सफल हो गये हो।

**सकलयुवजनमनोमधुकराकृष्टिकुसुमितलतिके निजनयननिर्जितराजीवे जीव चिरम्।**

**सुधा—सकलेति।** सकलयुवजनमनोमधुकराकृष्टिकुसुमितलतिके—सकलानाम्=समस्तानाम्, युवजनानाम्=तरुणलोकानाम्। मनोमधुकरान्=चित्तरूपभ्रमरान्, आकृष्टिः=आकर्षिका, कुसुमिता=पुष्पिता, लता=वीरुधिरिव तत्सम्बुद्धौ। निजनयननिर्जितराजीवे—निजनयनाभ्याम्=स्वनेत्राभ्याम्, निर्जितम्=पराजितम्, राजीवम्=कमलम्, यया सा तत्सुम्बुद्धौ। चिरम्=बहुकालम्। जीव=प्राणान् धारय।

हिन्दी—समस्तयुवक जनों के चित्तरूपी भमर को आकृष्ट करने वाली पुष्पित लतिके! अपने नेत्रों से कमल को पराजित करने वाली! चिरकाल तक जियो।

तथाहि—

**लक्ष्मीं बिभ्राणयोः काञ्चिच्चञ्चद्भ्रूभङ्गभागयोः।**
**बलिं यामो वयं तन्वि तवाब्जसदृशो दृशोः ॥ ३४ ॥**

अन्वयः—तन्वि, लक्ष्मीं बिभ्राणयोः, चञ्चद्भ्रूभङ्गभागयोः तव अब्जसदृशोः दृशोः वयं काञ्चिद् बलिं यामः ॥ ३४ ॥

सुधा—लक्ष्मीमिति। तन्वि=अयि कृशाङ्गि। लक्ष्मीम्=श्रियम्। बिभ्राणयोः=ध्रियमाणयोः। चञ्चद्भ्रूभङ्गभागयोः—चञ्चद्भ्रूः=चपलभ्रूरेव, भङ्गः=तरङ्गः, स भागः एकदेशे ययोस्तयोः। तव=ते। अब्जसदृशोः=कमलसमानयोः। दृशोः=नयनयोः। वयम्। काञ्चिद्=कामपि। बलिं यामः=उपहारीभवामः। परमप्रीतिगर्भालोकोक्तिरियम्। अनुष्टुप् वृत्तम् ॥ ३४ ॥

हिन्दी—हे कृशगात्रे! लक्ष्मी को (शोभा को) धारण करने वाले, चपलभ्रूभङ्गिमा वाले तुम्हारे कमलसदृश नयनों पर हम अपने आपको न्योछावर करते हैं।

अपि च—

**किन्नरवदनविनिर्गतपञ्चमगीतामृते श्रुतिं श्रयति।**
**हरति हरिणीदृशो दृक् सालसवलिता च लुलिता च ॥ ३५ ॥**

अन्वयः—किन्नरवदनविनिर्गतपञ्चमगीतामृते श्रुतिं श्रयति हरिणीदृशः सालसवलिता च दृक् हरति ॥ ३५ ॥

सुधा—किन्नरेति। किन्नरवदनविनिर्गतपञ्चमगीतामृते—किन्नरवदनैः=किम्पुरुषमुखैः, विनिर्गतम्=निःसरितम्, पञ्चमम्=पञ्चमस्वररूपम्, गीतामृतम्=गायनसुधारसम्, तस्मिन्। श्रुतिम्=कर्णम्। श्रयति=समाश्रिते जाते। हरिणदृशः—हरिणस्य दृक्सदृशा दृक्=दृष्टिर्यस्यास्तस्याः। सालसवलिता=आलस्ययुक्ता। लुलिता=चञ्चला च। दृक्=दृष्टिः। हरति=मनः मोहयति। आर्यावृत्तम् ॥ ३५ ॥

हिन्दी—और भी—किन्नरों के मुख से निकले पञ्चमस्वर वाले गीतामृत के कान में पड़ते ही मृगनयनी (दमयन्ती) की अलसायी चञ्चल दृष्टि मन को मोहित कर लेती है ॥ ३५ ॥

**इत्यनेकविधानि चिन्तयन्मृदुलीलापदैरागत्य गीतगोष्ठीस्थितस्य 'कोऽयम्' इति विस्मयविस्फारितलोचनस्य सम्भ्रमवतः सखीकदम्बकस्य मध्यमविशत्।**

सुधा—इत्यनेकेति। इति=एवम्। अनेकविधानि=बहुप्रकाराणि। चिन्तयन्=विचिन्तयन्। मृदुलीलापदैः=कोमलविलासपदैः। आगत्य=एत्य। गीतगोष्ठीस्थितस्य=संगीतसंसत्स्थितस्य। अयम्=एषः। कः=को जनः। इति। विस्मयविस्फारितलोचनस्य—विस्मयेन=आश्चर्येण, विस्फारिते=विस्तारिते, लोचने=नयने यस्य, तस्य। सम्भ्रमवतः=भ्रान्तस्य। सखीकदम्बस्य=सखीसमूहस्य, मध्यम्=मध्यभागम्। अविशत्=विवेश।

हिन्दी—इस प्रकार विभिन्न भाँति से सोचते हुए, कोमल विलासमय कदमों से आकर गीत गोष्ठी में बैठे हुए, भ्रम में पड़े सखी-समूह के मध्य ( वह ) प्रविष्ट हुआ।

**प्रविष्टे च तस्मिन्, आकस्मिकविस्मयेन विस्फारितानि, भयेन भ्रमितानि, कौतुकेनोत्तानितानि, व्रीडया वलितानि, मुदा मिलदरालपक्ष्माणि, स्मराकूतेन विलुलितानि, दिदृक्षारसेनानिमिषाणि, दृष्टिसंघट्टेन मुकुलितानि, विलासेन मिलितानि, चिरं चक्षूँषि विभ्राणाः किमपि चलितासनम्, उत्कम्पितहृदयम्, अपसरद्धैर्यम्, अवगलत्स्वेदसलिलम्, उत्पुलकिताङ्गम्, अनङ्गभङ्गुरम्, अवलोकितान्योऽन्यमुखमवतस्थिरे तदभिमुखाः सख्यः।**

**सुधा—प्रविष्ट इति।** तस्मिन्=तादृशे, सखीसमूहे। प्रविष्टे=प्रवेशंगते। आकस्मिकविस्मयेन=अकस्मादाश्चर्येण। विस्फारितानि=विस्तारितानि। भयेन=भीत्या। भ्रमितानि=चङ्क्रमितानि। कौतुकेन=उत्कण्ठया। उत्तानितानि=उत्थापितानि। व्रीडया=लज्जया। वलितानि=सङ्कुचितानि। मुदा=हर्षेण। मिलदरालपक्ष्माणि=सम्मिलन्निमिषाणि। स्मराकूतेन=कामोत्सुकतया। विलुलितानि=चञ्चलानि। दिदृक्षारसेन—दृष्टुमिच्छा दिदृक्षा, तस्याः रसेन=आनन्देन। अनिमिषाणि=निर्निमिषाणि। दृष्टिसंवहेन=दृक्संघर्षेण। मुकुलितानि=सङ्कुचितानि। विलासेन=आनन्देन। मिलितानि=सम्मिलितानि। चिरम्=बहुकालम्। चक्षूँषि=नयनानि। विभ्राणाः=चाल्यमानाः। किमपि=किञ्चित्। चलितासनम्—चलितानि=कम्पितानि, आसनानि=विष्टराणि यत्र तत्। उत्कम्पितहृदयम्=कम्पितचेतः। अपसरद्धैर्यम्=नष्टधैर्यम्। अवगलत्स्वेदसलिलम्=स्रवत्स्वेदजलम्। उत्पुलकिताङ्गम्=रोमाञ्चितशरीरम्। अनङ्गभङ्गभङ्गुरम्=कामव्यग्रम्। अवलोकितान्योऽन्यमुखम्=दृष्टपरस्परवदनम्। तदभिमुखाः=तत्समक्षम्। सख्यः=सखीजनाः। अवतस्थिरे=अतिष्ठन्।

हिन्दी—उसके प्रविष्ट होने पर आकस्मिक विस्मय से विस्फारित, भय से भ्रमित उत्कण्ठा से उत्थापित, लज्जा, से सङ्कुचित, प्रसन्नता से मिले हुये पलकों वाली, कामोत्सुकता से चञ्चल, देखने की कामना से निर्निमिष, दृष्टिसंघर्ष से सङ्कुचित, विलास से मिलित, बहुत देर तक आँखें घुमाती हुई कुछ आसन से हठी, उत्कम्पित हृदय, धैर्यहीन, पसीना टपकाती हुई पुलकित शरीर, कामपीड़ित एक दूसरे का मुँह देखती हुई सखियाँ उसके सामने आ खड़ी हुई।

**दमयन्त्यपि 'देवि, वर्धयामो वर्धयामः, कोऽपि कस्याश्चिज्जीवितेश्वरोऽयमत्रैवागतो दृश्यते' इति हार्षोत्कर्षगद्गदगिरां, गीतमुत्सृज्य ससम्भ्रमोत्थितकुब्जवामनकन्यकानां मृदुकरतलतालिकाकलितकलकलेन मनाग्विलासवलितमुखी तदभिमुखमवलोक्य शय्यातलादुदचलत्।**

**सुधा—दमयन्तीति।** दमयन्ती अपि=भैमी अपि। देवी, वर्धयामः वर्धयामः=वयं भाग्यशालिन्यः स्मः। कोऽपि=कश्चित् अपि। कस्याश्चित्=कस्याः अपि जनस्य। अयम्=एषः। जीवितेश्वरः=प्राणनाथः। अत्रैव=इहैव। आगतः=आयातः।

दृश्यते=अवलोक्यते । इति=एवम् । हर्षोत्कर्षगद्गदगिराम्—हर्षोत्कर्षेण=आनन्दवृद्धया, गद्गदा गिरः यासां तासाम् । गीतम्=गायनम् । उत्सृज्य=विमुच्य । ससम्भ्रमोत्थितकुब्जवामनकन्यकानाम्—ससम्भ्रमम्=भ्रमेण सहसा, उत्थितानाम्=उद्गतानाम्, कुब्जवामनकन्यकानाम्=कुब्जवामनस्त्रीणाम् । मृदुकरतलतालिकाकलितकलकलेन—मृदुकरतलतालिकानाम्=कोमलहस्ततलतालिकानाम्, कलितेन=सुन्दरेण, कलकलेन=कोलाहल-ध्वनिना । मनाक्=स्तोकम् । विलासवलितमुखी=आनन्दानतवदना । तदभिमुखम्=तत्सम्मुखम् । अवलोक्य=दृष्ट्वा । शय्यातलात्=शय्यायाः । उदचलत्=उदतिष्ठत् ।

**हिन्दी**—दमयन्ती भी 'देवी हम बड़ी भाग्यशालिनी हैं जो कि कोई किसी के प्राणेश्वर यहीं आये हुये दिखलाई पड़ रहे हैं ।' इस प्रकार अतिप्रसन्न गद्गद वाणी से, गीत छोड़कर सहसा शीघ्रता से उठी हुई कुबड़ी तथा बौनी नौकरानियों के कोमल हाथों की तालियों के सुन्दर कोलाहल से थोड़ा आनन्दित अवनतमुखी दमयन्ती उस ओर को देखकर शय्या तल से उठ खड़ी हुई ।

**'आः कुतोऽस्यानेकप्राकाररक्षकरक्षिते पक्षिणामपि दुष्प्रवेशे विशेषतो रजन्यां कन्यान्तःपुरे प्रवेशः' इत्यद्भुतरसावेशस्तिमितेन किञ्चित्सञ्चारितेन चक्षुषा पुनः पुनर्नलमवलोक्य चिन्तयाञ्चकार ।**

**सुधा**—आः इति । आः=अहह ! अनेकप्राकाररक्षकरक्षिते—अनेकैः=बहुभिः प्राकाररक्षकैः=प्राकारगोप्तृभिः, रक्षिते=सुरक्षिते । पक्षिणाम् अपि=खगानामपि । दुष्प्रवेशे=कष्टेन गम्ये । विशेषतः=वैशिष्टयेन । रजन्याम्=निशायाम् । कन्यकान्तःपुरे=स्त्रीजनान्तःपुरप्रकोष्ठे । अस्य=एतस्य । प्रवेशः=आगमनम् । कुतः=कस्माद्भवत् । इति । अद्भुतरसावेशस्तिमितेन—अद्भुतरसावेशेन=विचित्रानन्दावेगेन, स्तिमितेन=स्तब्धेन । किञ्चित्=किमपि । सञ्चारितेन=चालितेन ; चक्षुषा=नेत्रेण । पुनः पुनः=भूयोभूयः । नलम्=नलनृपम् । अवलोक्य=दृष्ट्वा । चिन्तयाञ्चकार=चिन्तयामास ।

**हिन्दी**—अहा—अनेक चहारदीवारों के रक्षकों से रक्षित जहाँ पक्षियों का भी प्रवेश दुर्गम है, विशेषकर रात में कन्यकान्तःपुर में इनका प्रवेश कहाँ से हो गया ? इस अद्भुत भावावेश से स्तब्ध कुछ सञ्चारित नेत्रों से बारम्बार नल को देखकर सोचने लगी ।

**धन्या काप्युपराधिताद्रितनया यस्यास्त्वमाह्लादयन्**
**मुक्ताहार इव प्रसारितभुजः कण्ठे विलोठिष्यसि ।**
**धातस्तात तवापि धन्यममुना सृष्टेन मन्ये श्रमं**
**मातर्मेदिनि वन्द्यसे किमपरं यस्यास्तवायं पतिः ॥ ३६ ॥**

**अन्वयः**—कापि उपराधिताऽद्रितनया धन्या, यस्याः कण्ठे मुक्ताहार इव प्रसारित-

भुजः त्वम् आह्लादयन् विलोठिष्यसि । धातः, तात ! अमुना सृष्टेन तव श्रमम् धन्यम् मन्ये । अपरं किम् । मातः मेदिनि ! वन्द्यसे यस्याः तव अयं पतिः ॥ ३६ ॥

**सुधा—धन्येति ।** कापि=काचित् । उपराधिताद्रितनया—उपराधिता=आराधिता, अद्रितनया=पार्वती यया सा । धन्या=प्रशंस्या । यस्याः=यत्तरुण्याः । कण्ठे=गलदेशे । मुक्तहारः इव=समर्पितो हारो येन सः यथा । प्रसारितभुजः=प्रस्तारितभुजः । त्वम् । विलोडयिष्यति=विलोडनं करिष्यति । धातः=ब्रह्मन् । तात=पितः । तव=ते अपि । अमुना=एतेन । सृष्टेन=उत्पादितेन । श्रमम्=परिश्रमम् । धन्यम्=सफलम् । मन्ये=सम्भावयामि । अपरं किम्=किमधिकम् । मातः=जननि ! मेदिनि=पृथिवि ! वन्द्यसे=वन्दनीया असि । यस्यास्तव=ते । अयम्=एषः । सुन्दरस्तरुणः पतिः=स्वामी बभूव । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

**हिन्दी**—पार्वती देवी की आराधना करने वाली वह रमणी धन्य होगी, जिसके कण्ठ से गलहार बनकर अपनी भुजाएँ ( यह युवक ) डालेगा । हे पिता ब्रह्मन् ! ऐसे सुन्दर पुरुष को बनाकर तुम्हारा परिश्रम भी मैं सफल मानती हूँ । अधिक क्या, हे पृथ्वी मातः ! तुम भी वन्दनीया हो जो कि तुम्हारे यह पति हैं ॥ ३६ ॥

**एवं चिन्तयन्त्येव तत्कालमाकूतकौतुकहर्षभयाद्यनेकरसपरम्परापरावर्तितनयनोत्पला लज्जावनमितमुखी विधेयविवेकवैल्यमभजत ।**

**सुधा—एवमिति ।** एवम्=इत्थम् । चिन्तयन्ती एव=विचारयन्ती एव । तत्कालम्=तत्क्षणम् । आकूतकौतुकहर्षभयाद्यनेकरसपरम्परापरिवर्तितनयनोत्पला—आकूतम्=अभिप्रायम्, कौतुकम्=आश्चर्यम्, हर्षम्=प्रसन्नता, भयम्=भीति च आदौ यस्य तादृशस्य, रसस्य परम्परायां=धारायाम्, परिवर्तिते नयनोत्पले=कमलनेत्रे यस्याः साः । लज्जावनमितमुखी—लज्जया=त्रपया, अवनमितम्=नम्रीभूतम्, मुखम्=वदनम् यस्याः सा । विधेयविवेकवैकल्यम्—विधातुं योग्यं विधेयम्, विधेयस्य=करणीयस्य, विवेकस्य=ज्ञानस्य, वैकल्यम्=विकलताम् । अभजत्=असेवत ।

**हिन्दी**—इस प्रकार सोचती हुई एक ही समय में वह अभिप्राय, कौतुक, हर्ष तथा भय आदि रस की धारा में अपने नयन कमलों को फेरती हुई लज्जा से अवनतमुखी कर्तव्य विषय की विकलता में पड़ गई ।

**नलोऽपि 'विहङ्गवागुरिके, भवत्स्वामिन्याः किमेवंविधः समाचारः, यदभ्यागतजनेन सह स्वागतालापमात्रेणापि न क्रियते व्यवहारः' इति तस्याः समीपवर्तिनीं पूर्वपरिचितां किन्नरीमभाषत ।**

**सुधा—नल इति ।** नलः अपि=नलाभिधः नृपः अपि । विहङ्गवागुरिके ! भवत्स्वामिन्याः—भवत्याः, स्वामिन्याः=देव्याः । किम् । एवंविधः=एतत्प्रकारः । समाचारः=वृत्तः । यत् । अभ्यागतजनेन सह=अतिथिजनेन साकम् । स्वागतालापमात्रेण=केवलं सत्कारवार्त्तया अपि । व्यवहारः=शिष्टाचारः । न क्रियते=नैव विधीयते । इति=एवम् । तस्याः=दमयन्त्याः । समीपवर्तिनीम्=पार्श्ववर्तिनीम् । पूर्वपरिचिताम्=प्राग्जातपरिचयाम् । किन्नरीम्=किन्नरपत्नीम् । अभाषत=अवदत् ।

हिन्दी—नल भी 'हे विहंगवागुरिके ! तुम्हारी स्वामिनी का क्या ऐसा आचरण है कि वह अभ्यागत व्यक्ति के साथ स्वागत वार्ता मात्र से भी शिष्टाचार नहीं करती हैं।' इस प्रकार उसकी समीपवर्तिनी पूर्वपरिचित किन्नरी से बोला।

**सापि ससम्भ्रमप्रणामपूर्वमिदमवादीत्—**

सुधा—सापीति। सा=किन्नरी। अपि। ससम्भ्रमप्रणामपूर्वम्—ससम्भ्रमम्=शीघ्रतया। प्रणामपूर्वम्=प्रणतिपूर्वकम्। इदम्=एतत्। अवादीत्=अकथयत्।

हिन्दी—वह ( किन्नरी ) भी शीघ्रता से प्रणाम कर इस प्रकार कहने लगी।

**किञ्चित्कम्पितपाणिकङ्कणरवैः पृष्टं ननु स्वागतं**
**व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले।**
**द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि**
**स्वामिन्किं न तवातिथेः समुचितं सख्याऽनयाऽनुष्ठितम् ॥ ३७ ॥**

अन्वयः—स्वामिन् ! किञ्चित्कम्पितपाणिकङ्कणरवैः ननु स्वागतं पृष्टम्। व्रीडानम्रमुखाब्जया च चरणयोः नेत्रोत्पले न्यस्ते। द्वारस्थस्तनयुग्ममङ्गलघटे हृदि प्रवेशः दत्तः। किम् अनया सख्या अतिथेः तव समुचितं न अनुष्ठितम् ॥ ३७ ॥

सुधा—किञ्चिदिति। स्वामिन्=देव ! किञ्चित्कम्पितपाणिकङ्कणरवैः—किञ्चित्कम्पितयोः=स्तोककम्पमानयोः, पाण्योः=करयोः, कङ्कणरवैः=कङ्कणध्वनिभिः। ननु=नूनम्। अनया। स्वागतम्=सत्कारः। पृष्टम्। व्रीडानम्रमुखाब्जया—व्रीडया=लज्जया, अवनम्रम्=अवनतम्, मुखम्=आननम्, रूपमब्जम्=कमलम्, यस्यास्तया। चरणयोः=पादयोश्च। नेत्रोत्पले=नयनकमले। न्यस्ते=धृते। द्वारस्थस्तनयुग्ममङ्गलघटे=स्तनयुग्मम् एव मङ्गलघटः, द्वारस्थे=द्वारस्थापिते, स्तनयुग्ममङ्गलघटे=पयोधरयुगलमङ्गलकलशे। हृदि=चेतसि। प्रवेशः दत्तः=निवासः दत्तः। अनया सख्या=एतया सख्या। अतिथेः=अभ्यागतस्य। तव=भवतः। समुचितम्=उपयुक्तम्। किं न अनुष्ठितम्=किं न सम्पादितम्। शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

हिन्दी—हे स्वामिन् ! कुछ-कुछ काँपते हुए हाथों के कङ्कणरव से वास्तव में ( मेरी सखी ने ) आपका स्वागत पूछा। लज्जा के कारण मुख कमल को नीचे झुका कर उसने आपके चरणों में नेत्रोत्पलों को अर्पित किया। अपने उस हृदयरूपी घर में जिसके द्वार पर पयोधरयुगलरूपी मंगलकलश स्थापित हैं, आपको प्रवेश दिया। इस प्रकार मेरी इस सखी ने आप अतिथि का समुचित सत्कार आदि क्या नहीं किया ॥ ३७ ॥

**तदितः ससम्भ्रमोत्थितयानया समर्पितमिदमुल्लसन्मणिपर्यङ्किकापृष्ठमधितिष्ठतु देवः।**

सुधा—तदिति। तत्=अतः। इतः=अस्मात् स्थानात्। ससम्भ्रमोत्थितया—ससम्भ्रमम्=सरभसम्। उत्थितया=उद्गतया, अनया=एतया सख्या ? समर्पितम्=दत्तम्। इदम्=एतत्। उल्लसन्मणिपर्यङ्किकापृष्ठम्—उल्लसत्=उज्ज्वलम्, मणि-

पर्यङ्किकायाः, पृष्ठम् = रत्नजटितपर्यङ्कपृष्ठभागम् । देवः = स्वामी । अधितिष्ठतु = उपविशतु ।

हिन्दी—अच्छा, यहाँ से घबराकर उठकर इसके द्वारा समर्पित की गई मणिमय पर्यङ्किका पर आप आसीन हो जाइये ।

**त्वमपि देवि, विद्रुममणिपर्यङ्किकामिमामदूरवर्तिनीमध्यास्व ।**

**सुधा—** त्वमिति । देवि = स्वामिनि ! त्वमपि = भवत्यपि । अदूरवर्तिनीम् = पार्श्वस्थिताम् । इमाम् = एताम् । विद्रुममणिपर्यङ्किकाम् = विद्रुममणिरचितां पर्यङ्किकाम् । अध्यास्व = अधितिष्ठ ।

हिन्दी—हे देवि ! आप भी समीपवर्ती विद्रुममणिनिर्मित इस पर्यकिका पर बैठ जायें ।

**भवतु च भवतोः परमुखेन श्रुतान्योऽन्यस्वरूपयोरिदानीमात्मानुभवेन नयननिर्वृतिः, फलन्तु मनोरथाः सखीनाम् इति ।**

**सुधा—** भवत्विति । परमुखेन = अन्येन । श्रुतान्योऽन्यस्वरूपयोः—श्रुतम् = आकर्णितम्, अन्योऽन्यस्वरूपं ययोस्तयोः = आकर्णितपरस्पररूपयोः । भवतोः = देविस्वामिनोः, इदानीम् = साम्प्रतम् । आत्मानुभवेन = स्वानुभूत्या । नयननिर्वृत्तिः = नेत्रानन्दम् । भवतु = अस्तु । सखीनाम् च = अस्माकञ्च । मनोरथाः = कामाः । फलन्तु = सफलीभवन्तु ।

हिन्दी—दूसरों के मुँह से सुने परस्पर गुण रूप वाले आप दोनों की अब आँखें आत्म अनुभव से आनन्द प्राप्त करें तथा हम ( सखियों ) की भी कामनाएँ सफल होवें ।

**तयाभिहितौ तौ सर्वसत्वरसखीकरपरामृष्टयोः स्फटिकप्रवालपर्यङ्किकयोरुत्सङ्गभागं भेजतुः ।**

**सुधा—** तयेति । तया = विहङ्गवागुरिकया । अभिहितौ = कथितौ । तौ = दमयन्तीनलौ । सर्वसत्वरसखीकरपरामृष्टयोः—सर्वाभिः, सत्वरम् = शीघ्रम्, सखीभिः करैः = हस्तैः, परामृष्टयोः = स्वच्छीकृतयोः । स्फटिकप्रवालपर्यङ्किकयोः = विद्रुममणिनिर्मितपर्यङ्किकयोः । उत्सङ्गभागम् = क्रोडदेशम् । भेजतुः = शुशुभाते ।

हिन्दी—इस प्रकार उस ( विहंगवागुरिका ) द्वारा कहे जाने पर वे दोनों शीघ्रता से सभी सखियों द्वारा पोंछ कर साफ किये गये विद्रुममणिनिर्मित पलंगों पर शोभित हुए ( आसीन हो गये ) ।

**ततश्च तौ—**

**हर्षाद्बाष्पचिते, भयात्तरलिते, विस्फारिते विस्मया-**
**दौत्सुक्यात्स्तिमिते, स्मराद्विलुलिते, सङ्कोचिते लज्जया ।**
**रूपालोकनकौतुकेन रभसावन्योऽन्यवक्त्राम्बुजे**
**किञ्चित्साचि च सम्मुखञ्च नयने सञ्चारयामासतुः ॥ ३८ ॥**

**अन्वयः**—हर्षात् बाष्पचिते, भयात् तरलिते, विस्मयात् विस्फारिते, औत्सुक्यात्, स्तिमिते, स्मरात् विलुलिते, लज्जया सङ्कोचिते नयने रूपालोकनकौतुकेन रभसात् अन्योऽन्यवक्त्राम्बुजे किञ्चित् साचि च, सम्मुखं च सञ्चारयामासतुः ॥ ३८ ॥

**सुधा—हर्षादिति।** हर्षात्=आनन्दात्। बाष्पचिते=अश्रुपूर्णे। भयात्=त्रासात्। तरलिते=चञ्चले। विस्मयात्=आश्चर्यात्। विस्फारिते=प्रसारिते। औत्सुक्यात्=उत्कण्ठायाः। स्तिमिते=स्तब्धे। स्मरात्=कामात्। विलुलिते=तरलिते। लज्जया =त्रपया। सङ्कोचिते=अर्द्धनिमीलिते। नयने=नेत्रे। रूपालोकनकौतुकेन—रूपस्य= सौन्दर्यस्यालोकनकौतुकेन=अवलोकनोत्कण्ठया। रभसात्=शीघ्रतया। अन्योऽन्य-वक्त्राम्बुजे=परस्परमुखकमले। किञ्चित्साचि=किञ्चिदधः। सम्मुखं च=समक्षं च। सञ्चारयामासतुः=अचालयताम्। शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥

**हिन्दी**—और तब दोनों ने हर्ष से अश्रुपूर्ण, भय से तरलित, विस्मय से विस्फारित, उत्सुकता से स्तब्ध, मदन से चञ्चल, लज्जा से संकुचित नयनों को सौन्दर्य अवलोकन की उत्कण्ठा से एक दूसरे के मुखकमल कुछ नीचे झुके हुए और कुछ सामने को सञ्चालित किये ॥ ३८ ॥

**तत्र च व्यतिकरे—**

**अन्तः केवलमुल्लसन्ति न पुनर्वाचां तु ये गोचरा**
**येषां नो भरतादयोऽपि कवयः कर्तुं विवेकं क्षमाः।**
**लज्जामन्थरयोः परस्परमिलद्दृष्टिप्रपाते तयो-**
**स्ते सर्वे समकालमेव हृदये केऽप्याविरासन् रसाः ॥ ३९ ॥**

**अन्वयः**—लज्जामन्थरयोः तयोः परस्परमिलद्दृष्टिप्रपाते ते सर्वे अपि रसाः, समकालम् एव हृदये के अपि आविरासन्, ये केवलम् अन्तः उल्लसन्ति, पुनः वाचां तु गोचराः न, येषां विवेकं कर्त्तुं भरतादयः कवयः अपि नो क्षमाः ॥ ३९ ॥

**सुधा—अन्त इति।** लज्जामन्थरयोः—लज्जया=त्रपया, मन्थरयोः=शिथिलयोः, तयोः=दमयन्तीनलयोः, द्वयोः। परस्परमिलद्दृष्टिप्रपाते—परस्परम्=अन्योन्यम्, मिलति=मिलनजाते, दृष्टिप्रपाते=दृङ्निर्झरे। ते सर्वे=समस्ताः अपि। रसाः= शृङ्गारादयः। समकालम् एव=युगपदेव। आविरासन्=उद्वेलिता अभवन्। ये=ये रसाः। केवलम्=मात्रम्। अन्तः=हृदयम्। उल्लसन्ति=आनन्दयन्ति। पुनः=भूयः। वाचाम्=वाणीनाम्। गोचराः=गम्याः, वर्णनीयाः न भवन्ति। येषाम्=एतेषां रसानाम्। विवेकम्=विवेचनम्। कर्त्तुम्=विधातुम्। भरतादयः=भरतादिकाः। विद्वांसः अपि। न क्षमाः=समर्थाः न सन्ति। शार्दूलविक्रीडितं वृत्तम् ॥

**हिन्दी**—और उस अवसर पर लज्जा से शिथिल उन दोनों के परस्पर नयन रूपी निर्झरों के मिलने पर वे सब रस हृदय में एक साथ ही उमड़ पड़े जो कि केवल अन्तःकरण को ही उल्लसित करते हैं, वाणी के विषय नहीं बन पाते और जिनका वर्णन करने को भरतादि रसमर्मज्ञ विद्वान् भी समर्थ नहीं हैं।

अपि च । तत्र च व्यतिकरे—

कर्णान्तकृष्टवलयीकृतचापचक्र-
श्चञ्चद्गुणस्खलनजर्जरितप्रकोष्ठः ।
लक्षद्वयेऽपि युगपद्विशिखान्विमुञ्चन्
सन्धानसत्वरकरः श्रमवान् स्मरोऽभूत् ।। ४० ।।

अन्वयः—कर्णान्तकृष्टवलयीकृतचापचक्रचञ्चद्गुणस्खलनजर्जरितप्रकोष्ठः सन्धान-सत्वरकरः स्मरः अपि युगपत् विशिखान् विमुञ्चन् लक्षद्वये अपि श्रमवान् अभूत् ।।४०।।

सुधा—अपीति । अपि च=अन्यच्च । तत्र च व्यतिकरे=तस्मिन् काले च—

कर्णान्तेति । कर्णान्तकृष्टवलयीकृतचापचक्रचञ्चद्गुणस्खलनजर्जरितप्रकोष्ठः—कर्णान्तस्य=श्रोत्रपर्यन्तस्य, कृष्टस्य, वलयीकृतस्य=मण्डलीकृतस्य, चापस्य=धनुषः, चक्रेण, चञ्चद्गुणस्य=कम्पितप्रत्यञ्चायाः, स्खलनेन=पतनेन, जर्जरितः=जीर्णभूतः, प्रकोष्ठः=मणिबन्धः, यस्य तथाविधः । सन्धानसत्वरकरः—सन्धाने=प्रहरणे, सत्वरम् =शीघ्रम्, करौ=हस्तौ, यस्य सः । स्मरः=मदनः अपि । युगपत्=समकालम् एव । विशिखान्=बाणान् । विमुञ्चन्=मुञ्चन् । लक्षद्वये=दमयन्तीनलोभयपक्षे अपि । श्रमवान्=श्रमतत्परः । अभूत्=बभूव । वसन्ततिलका वृत्तम् ।। ४० ।।

हिन्दी—और भी ! वहाँ उस अवसर पर—कर्णपर्यन्त खींचे गये मण्डलाकार धनुष के चक्र से चञ्चल प्रत्यञ्चा के गिरने के कारण जर्जरित हुए मणिबन्ध वाला बाण सन्धान करने में अतिशीघ्र हाथ चलाने वाला कामदेव एक साथ बाण चलाते हुए लक्षद्वय ( दोनों निशानों ) पर परिश्रम करने में जुट गया था ।। ४० ।।

**अनन्तरमाप्तसखीवचनेन स्वयमर्घदानोद्यतां ताम् 'अलमलमुत्पलाक्षि, प्रयासेन । न खल्वसि पात्रम् । परिजातमञ्जरीजरठपवनप्रेङ्खोलनायासं न सहते' इति दमयन्तीमभिधाय तस्याः स्वादुदुर्लभसूक्तिसुधासेककोमलालाप-पण्डिताभिः सखीभिः सह परिमितपरिहासेन, किमपि जल्पन्, किमपि हसन्, किमपि हासयन्, मुहूर्त्तमिवासाञ्चक्रे ।**

सुधा—अनन्तरमिति । अनन्तरम्=तत्पश्चात् । आप्तसखीवचनेन=शिष्टसखीनां वचनेन=कथनेन । स्वयम्=आत्मना । अर्घ्यदानोद्यताम्=अर्घ्यदानाय तत्पराम् । ताम्=दमयन्तीम् । उत्पलाक्षि=कमलनयने ! अलमलं प्रयासेन=प्रयत्नं मा कुरु । खलु=किल । पात्रं नासि=परिश्रमार्हा नासि । पारिजातमञ्जरी=पारिजातवृक्षस्य मञ्जरी । जरठपवनप्रेङ्खोलनायासम्—जरठस्य=तीव्रस्य, पवनप्रेङ्खोलनस्य=वायु-वेगस्यायासम्=प्रयासम् । न सहते=सहनं न करोति । इति । दमयन्तीम्=भैमीम् । अभिधाय=कथयित्वा । तस्याः=दमयन्त्याः । स्वादुदुर्लभसूक्तिसुधासेककोमलालाप-पण्डिताभिः—स्वादुभिः=दुर्लभैः सूक्तिभिः, सुधासेकैश्च=दुष्प्राप्यैः सूक्तामृतबिन्दुभिः, कोमलालापैः=मधुरवार्ताभिश्च, पण्डिताः=चतुरास्ताभिः । सखीभिः सह=सह-चरीभिः साकम् । परिमितपरिहासेन=सीमितविनोदेन । किमपि जल्पन्=किञ्चि-

त्कथयन्, किमपि हसन् = विहसन् । किमपि हासयन् = आह्लादयन् । मुहूर्त्तम् इव = क्षणमिव । आसाञ्चक्रे = अभवत् ।

हिन्दी—तदनन्तर शिष्ट सखियों के कहने से स्वयम् अर्घ्यदान के लिए उद्यत उस दमयन्ती को—"हे कमललोचने ! प्रयास मत करो। तुम इसके लायक नहीं हो। पारिजात-मञ्जरी तीव्रपवन के झोंके नहीं सह सकती है।" ऐसा कह कर उसकी स्वादिष्ट और दुर्लभ सूक्ति सुधाबिन्दुओं से सिक्त मधुर वार्त्तालापों में कुशल सखियों के साथ थोड़ा परिहास करते हुए, कुछ कहते हुए, कुछ हँसते हुए, कुछ हँसाते हुए उसने समय व्यतीत किया।

**चिन्तितवांश्च—**

**लीलाताण्डवितभ्रुवोः स्मरभरभ्रान्तोल्लसत्तारयो-**
**रन्तमौक्तिकमालिकाधवलयोर्मुग्धस्मितस्मेरयोः ।**
**किञ्चित्साचिदृशोः कृतानिलचलन्नीलोत्पलस्पर्धयो-**
**रुल्लोलैरिव याति पक्ष्मलदृशः कान्तिर्मदीये मुखे ॥ ४१ ॥**

**अन्वयः**—पक्ष्मलदृशः लीलाताण्डवितभ्रुवोः स्मरभरभ्रान्तोल्लसत्तारयोः अन्तमौक्तिकमालिकाधवलयोः मुग्धस्मितस्मेरयोः कृतानिलचलन्नीलोत्पलस्पर्धयोः किञ्चित्साचिदृशोः कान्तिः मदीये मुखे उल्लोलैः इव याति ॥ ४१ ॥

**सुधा—चिन्तितवानिति ।** चिन्तिवांश्च = व्यचारयच्च—

**लीलेति ।** पक्ष्मलदृशः = पक्ष्मलनयनायाः दमयन्त्याः । लीलाताण्डवितभ्रुवोः— लीलया = विलासेन, ताण्डविते = नर्तिते, लोलायिते वा भ्रुवे ययोस्तयोः स्मरभरभ्रान्तोल्लसत्तारयोः—स्मरभरेण = कामभारेण, भ्रान्ते = चञ्चले, उल्लसत्तारे = शोभितकनीनिके, ययोस्तयोः । अन्तमौक्तिकमालिकाधवलयोः—अन्तः = मध्ये मौक्तिकमालिका इव = मुक्ताहार इव धवलयोः = उज्ज्वलयोः । कृतानिलचलन्नीलोत्पलस्पर्धयोः—कृतानिलेन = कृतपवनेन, यत् चलन्नीलोत्पलम् = कम्पितं नीलकमलम्, तस्मै स्पर्धते ये तयोः । किञ्चित्साचिदृशोः = किञ्चिदवनतचक्षुषोः । कान्तिः = दीप्तिः । मदीये मुखे = मम वदने । उल्लोलैः इव = तरङ्गितैरिव । याति = गच्छति । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

**हिन्दी**—और उसने सोचा—पक्ष्मल नयनों वाली दमयन्ती के विलास से चञ्चल भौंहों वाले, कामालस से चपल शोभित कनीनिकाओं वाले, अन्दर मुक्तामाल-सदृश उज्ज्वल मधुरमुस्कान से विकसित की गई वायु से कम्पित नीलकमल से स्पर्धा करने वाले कुछ नीचे झुके हुये नयनों की कान्ति मेरे मुख पर तरङ्गों के समान पड़ रही है ॥ ४१ ॥

**अपि च—**

**दरमुकुलितनेत्रप्रान्तपर्यस्ततारं**
**तव तरुणि सलज्जं सस्मितं सस्मरं च ।**

**क्षणमभिमुखवक्त्रे विस्मयस्मेरदृष्टौ**
**मयि वलति वलक्षं वीक्षितं मा निरौत्सीः ॥ ४२ ॥**

**अन्वयः**—तरुणि ! क्षणं तव अभिमुखवक्त्रे विस्मयस्मेरदृष्टौ मयि दरमुकुलितनेत्रप्रान्तपर्यस्ततारं सलज्जं, सस्मितं, सस्मरं च वीक्षितं वलक्षं मपि मा निरौत्सीः ।

**सुधा—दरेति** । तरुणि = हे युवति । क्षणम् = निमिषम् । तव = ते । अभिमुखवक्त्रे = सम्मुखमुखे । विस्मयस्मेरदृष्टौ—विस्मयेन = आश्चर्येण, स्मेरदृष्टिः = विकसितदृक् यस्य तस्मिन् । मयि = नले, ममोपरि । दरमुकुलितनेत्रप्रान्तपर्यस्ततारम्—दरमुकुलितयोः = स्वल्पसङ्कुचितयोः, नेत्रयोः- -प्रान्ते=एकभागे पर्यस्ततारम्=प्रक्षिप्तकनीनिकम् । सलज्जम् = व्रीडायुक्तम् । सस्मितम् = सहासम् । सस्मरम् = सकामम् च । वलक्षम् = धवलम् । वीक्षितम् = दृष्टिम् । मयि = ममोपरि । मा निरौत्सीः = मा रुणद्धि । मालिनी वृत्तम् ॥ ४२ ॥

**हिन्दी**—अयि युवति ! क्षण भर तुम्हारी ओर को मुख किये, साश्चर्य विकसित दृष्टि वाले, कुछ संकुचित नेत्रों के एक भाग में पुतलियों को फेंकते हुये, लजीले विहसित तथा सकाम धवल अवलोकन को मुझ पर मत रोको पड़ने दो ॥ ४२ ॥

**किञ्चान्यदपरमिदमाशास्महे—**

**लावण्यामृतदीर्घिका कुलगृहं सौभाग्यसौन्दर्ययो-**
**स्त्रैलोक्याकररत्नकन्दलिरियं जीव्यात्सहस्रं समाः ।**
**लोकालोकनकौतुकाय बहुना शिल्पश्रमेणादरा-**
**न्मन्ये यां विधिना विधाय विहितं सृष्टेर्ध्वजारोपणम् ॥ ४३ ॥**

**अन्वयः**—लावण्यामृतदीर्घिका, सौभाग्यसौन्दर्ययोः कुलगृहम्, त्रैलोक्याकररत्नकन्दलिः इयं सहस्रं समाः जीव्यात् मन्ये यां विधिना लोकालोकनकौतुकाय बहुना शिल्पश्रमेण आदरात् विधाय सृष्टेः ध्वजारोपणं विहितम् ॥ ४३ ॥

**सुधा—किञ्चेति** । किञ्च = किन्तु । अन्यत् अपरम् इदम् = एतत् । आशास्महे = कामयामहे—

**लावण्येति** । लावण्यामृतदीर्घिका—लावण्यरूपम् = सौन्दर्यरूपम्, अमृतम् = सुधा, तस्य दीर्घिका = सरसीसमा, सौभाग्यसौन्दर्ययोः—सौभाग्यस्य, सौन्दर्यस्य = लावण्यस्य, च कुलगृहम् = कुलभवनम् । त्रैलोक्याकररत्नकन्दलिः—त्रैलोक्याकरस्य = त्रिभुवनसागरस्य, रत्नकन्दलिः = रत्नलता । इयम् = एषा । सहस्रं समाः = सहस्रवर्षाणि । जीव्यात् = जीविता भवेत् । मन्ये = सम्भावयामि । याम् = एताम् । विधिना = धात्रा । लोकालोकनकौतुकाय—आलोकनाय कौतुकम् आलोकनकौतुकम्, लोकस्यालोकनकौतुकाय = संसारस्यावलोकनकौतुकार्थम्, येन पश्यतु लोको, दृष्टव्यदर्शनाद् दृष्टिफलमाप्नोतु इत्याशयः । बहुना = महता । शिल्पश्रमेण = रचनापरिश्रमेण । आदरात् = सादरम् । विधाय = निर्माय । सृष्टेः = उत्पत्तेः, रचनायाः वा । ध्वजारोपणम् = ध्वजोत्तोलनम् । विहितम् = कृतम् । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४३ ॥

हिन्दी—बल्कि इससे भी बढ़कर मेरी यह कामना है—

सौन्दर्यसुधा की बावली ( सरसी ), सौभाग्य तथा सौन्दर्य की कुलभवन, त्रिभुवनरूपी सागर की रत्नलता यह हजारों वर्ष जीवित रहे। मैं समझता हूँ कि इसको विधाता ने संसार को देखने का कौतुक करने के लिए बड़े रचना-परिश्रम से सादर निर्माण कर सृष्टि का झण्डा फहरा दिया है ॥ ४३ ॥

**अहो आश्चर्यम्—**

**रङ्गत्यङ्गे कुरङ्गाक्ष्याश्चक्षुर्मे यत्र यत्र तु।**
**दृश्यते तत्र तत्रैव बलाद् बाणकरः स्मरः ॥ ४४ ॥**

**अन्वयः**—कुरङ्गाक्ष्याः चक्षुः मे अङ्गे यत्र यत्र रङ्गति तत्र तत्र एव बलात् बाणकरः स्मरः दृश्यते ॥ ४४ ॥

**सुधा**—रङ्गतीति। कुरङ्गाक्ष्याः=मृगाक्ष्याः, दमयन्त्याः। चक्षुः=दृक्। मे=मम। अङ्गे=शरीरे। यत्र यत्र=यस्मिन्यस्मिन् स्थाने। रङ्गति=सर्पति। तत्र तत्र एव=तत्तदेव स्थाने। बलात्=प्रसह्य। बाणकरः—बाणः करे यस्य सः=शरहस्तः। स्मरः=मदनः। दृश्यते=अवलोक्यते। अनुष्टुब्वृत्तम् ॥ ४४ ॥

**हिन्दी**--अहा ! आश्चर्य है—मृगनयनी ( दमयन्ती ) की दृष्टि मेरे अङ्ग पर जहाँ-जहाँ पड़ जाती है वहीं-वहीं पर जबरदस्ती हाथ में बाण लिए हुए मदन दिखलाई पड़ता है ॥ ४४ ॥

**तत्कथमियमन्यार्थे प्रार्थ्यते तद्दह्यतामयं परप्रेष्यभावः।**

**सुधा**—तदिति। तत्=तर्हि। इयम्=एषा दमयन्ती। अन्येषाम् अर्थे=अपराणाम् हेतौ। कथं प्रार्थ्यते=मया कथमावेद्यते। तत्=तर्हि। परप्रेष्यभावः—परेषाम्=इन्द्रादिलोकपालानाम्, प्रेष्यभावः=दौत्यभावः। दह्यताम्=नश्यतु।

**हिन्दी**—तो फिर इसे दूसरों ( इन्द्रादिलोकपालों ) के लिए मैं क्यों मागूँ। अतः मेरा अन्यों का यह दौत्य कर्म का भाव नष्ट हो जाय।

**यतः—तिरयति स्वातन्त्र्यसुखम्, अभिमुखयति पारवश्यक्लेशम्, आमन्त्रयति तिरस्कारम्, आदरयति दैन्यम्, आह्वयति लघिमानम्, आवाहयति हास्यवादम्, सम्मानयत्यौचित्यभङ्गम्, अङ्गीकारयति कार्पण्यम्, अपहस्तयति वस्तुभावं, पुरुषस्य।**

**सुधा**—यत इति। यतः=हि। पुरुषस्य=जनस्य। स्वातन्त्र्यसुखम्=स्वाधीनतासुखम्। तिरयति=अदृश्यं करोति। पारवश्यक्लेशम्—पराधीनतायाः दुःखम्। अभिमुखयति=सम्मुखमानयति। तिरस्कारम्=तिरस्कृतिम्। आमन्त्रयति=आह्वयति। दैन्यम्=दीनताम्। आदरयति=सत्करोति। लघिमानम्=लघुताम्। आह्वयति=आकारयति। हास्यवादम्=उपहासम्। आवाहयति=आवाहनं करोति। औचित्यभङ्गम्=औचित्यनाशम्। सम्मानयति=सम्मानं करोति। कार्पण्यम्=कृपणताम्।

अङ्गीकारयति=स्वीकारयति। वस्तुभावम्=वास्तविकम्। अपहस्तयति=मोचयति।

हिन्दी—क्योंकि—दौत्यभाव व्यक्ति के स्वतन्त्रता-सुख को गायब कर देता है। पराधीनता मूलक दुःख को सामने खड़ा कर देता है। तिरस्कार को आमन्त्रित करता है, दीनता को आदर देता है लघुता को बुलाता है, उपहास कराता है। औचित्य-भङ्ग को सम्मानित करता है, कृपणता को स्वीकार कराता है तथा वास्तविक भाव को छुड़ा देता है।

**तथाहि—**

**सोच्छ्वासं मरणं निरग्निदहनं निःशृङ्खलं बन्धनं**
**निष्पङ्कं मलिनं विनैव नरकं सैषा महायातना।**
**सेवासञ्जनितं जनस्य सुधियो धिक्पारवश्यं यतः**
**पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम्॥ ४५॥**

**अन्वयः**—सुधियः जनस्य सेवासञ्जनितं पारवश्यं धिक्। यतः (तत्) सोच्छ्वासं मरणम्, निरग्निदहनम्, निःशृङ्खलं बन्धनम्, निष्पङ्कं मलिनम्, एषा सा नरकं विना एव महायातना। पञ्चानां सविशेषम् एतत् अपरं षष्ठं महापातकम् (अस्ति)॥४५॥

**सुधा**—सोच्छ्वासमिति। सुधियः=बुद्धिमतः। जनस्य=पुरुषस्य। सेवासञ्जनितम्=सेवामूलकम्। पारवश्यम्=पारतन्त्र्यम्। धिक्। यतः (पारतन्त्र्यम्) सोच्छ्वासम्=श्वाससहितम्। मरणम्=मृत्युः। निरग्निदहनम्=विनैव वह्निना ज्वलनम्। निःशृङ्खलम्=शृङ्खलाशून्यम्। बन्धनम्। निष्पङ्कम्=कर्दमेन विनैव। मलिनम्=मलम्। एषा सा=इयं सा। नरकं विनैव=नरकलोकेन विना एव। महायातना=घोरपीडा। एतत्=पारवश्यम्। पञ्चानाम्=पञ्चसंख्यकानां ब्रह्महत्यादीनाम्। सविशेषम्=अतिविशिष्टम्। अपरम्=अन्यत्। षष्ठम्=षट्संख्याकम्। महापातकम्=महापापम्, अस्तीति। शार्दूलविक्रीडितं वृत्तम्॥ ४५॥

हिन्दी—अतः बुद्धिमान् व्यक्ति की सेवामूलकपराधीनता को धिक्कार है क्योंकि यह सश्वास मृत्यु है, बिना आग के जलना, बिना शृंखला (जंजीर) का बन्धन, कीचड़ रहित मल और यह नरक के बिना ही घोर यातना है। (संसार में) पाँच महापातक ब्रह्महत्या इत्यादि माने गये हैं इनको करने वाले व्यक्ति को नरक में घोर यातना सहनी पड़ती है। परन्तु इन पाँचों से बढ़कर (विशिष्ट) अन्य छठा महापातक पराधीनता है॥ ४५॥

टिप्पणी—पञ्चपातक—१. ब्रह्महत्या, २. सुरापान, ३. चौर्य, ४. गुरुपत्नी-समागम तथा ५. इन महापातकों को करने वाले व्यक्ति से सम्पर्क रखना।

**किं चान्यत्—**

**प्रस्तुतस्य विरोधेन ग्राम्यः सर्वोऽप्युपक्रमः।**
**वीणायां वाद्यमानायां वेदोद्गारो न रोचते॥ ४६॥**

अन्वयः—प्रस्तुतस्य विरोधेन सर्वः अपि उपक्रमः ग्राम्यः। वाद्यमानायां वीणायां वेदोद्गारः न रोचते ॥ ४६ ॥

सुधा—प्रस्तुतस्येति। प्रस्तुतस्य=प्रस्तुतप्रसङ्गस्य। विरोधेन=वैपरीत्येन। सर्वः=सम्पूर्णः अपि। उपक्रमः=प्रयत्नः। ग्राम्यः=असभ्यः भवति। यथा—वाद्यमानायां वीणायाम्=वाद्यमानविपञ्च्याम्। (वीणावादनकाले) वेदोद्गारः=वेदानामुद्घोषः। न रोचते=रुचिकरो न प्रतीयते। उभयानुरागौचित्यादात्मार्थस्य प्रस्तुतत्वम्। अत्रार्थान्तरन्यासोऽलङ्कारः। अनुष्टुब्वृत्तम् ॥ ४६ ॥

हिन्दी—बल्कि और भी—प्रस्तुत प्रसंग के विरोध से सम्पूर्ण प्रयत्न ही अनुचित लगता है क्योंकि वीणा के बजते होने पर वेदघोष अच्छा नहीं लगता ॥ ४६ ॥

**तत्किमिदानीमिदमुच्यते। लोलाक्षि, लोकपालास्त्वामस्मन्मुखेन वृण्वन्ति इति प्रस्तुतानुरागभङ्गः, तदादेशोऽपह्नूयते स्वामिन्यन्यथा कथ्यते श्रेयःस्खलनम्, यथावृत्तमेवाख्यायते स्वार्थहानिः, तद्वरमस्तु स्वार्थविघातो न तु विश्वस्तदेवतावञ्चनापातकम्' इति चिन्तयन्नशेषमपि तस्यै पुरन्दरादेशं सप्रपञ्चमाचचक्षे।**

सुधा - तत्किमिति। तत्। इदानीम्=साम्प्रतम्। किम्। इदम्=एतत्। उच्यते मया कथ्यते। (यत्) लोलाक्षि=चपलनयने! लोकपालाः=इन्द्रादिदेवाः। त्वाम्=भवतीम्। अस्मन्मुखेन=मम माध्यमेन। वृण्वन्ति=वरणं कुर्वन्ति। इति=एवम्। प्रस्तुतानुरागभङ्गः— प्रस्तुतस्य=उपस्थितस्यानुरागस्य=प्रेम्णः, भङ्गः=नाशः। तदादेशः—तेषाम्=इन्द्रादिलोकपालानाम्, आदेशः=अनुमतिः। अपह्नूयते=गोपायते। (अथवा) स्वामिनि=इन्द्रादिप्रभौ। अन्यथा=असत्यम्। कथ्यते=निवेद्यते। (तर्हि) श्रेयःस्खलनम्=कल्याणमार्गात् पतनम्। (यदि) यथावृत्तम् एव=समाचारानुरूपमेव। आख्यायते=कथ्यते। (तर्हि) स्वार्थहानिः=दमयन्त्यप्राप्तिः। तत्=अतः। स्वार्थविघातः=निजलाभनाशः। वरम्=श्रेष्ठम् अस्तु। विश्वस्तदेवतावञ्चनापातकम्=दत्तविश्वासदेवताछलनाघम्। तु। न वरम्। इति चिन्तयन्=एवं विचारयन्। अशेषम्=सम्पूर्णम् अपि। पुरन्दरादेशम्=इन्द्राज्ञाम्। सप्रपञ्चम्=सप्रसङ्गम्। तस्यै=दमयन्त्यै। आचचक्षे=कथयामास।

हिन्दी—अस्तु, तो क्या अब यह कहा जाय कि—हे लोलाक्षि! लोकपाल मेरे माध्यम से तुम्हें चुन रहे हैं। ऐसा कहने से प्रस्तुत अनुराग भङ्ग हो रहा है। यदि लोकपालों का आदेश छिपाता हूँ या इन्द्रादि के विषय में कुछ और प्रकार से कहता हूँ तो कल्याण मार्ग से पतित होना है। यदि आदेशानुसार (मैं लोकपालों का दूत हूँ, वे तुम्हें वरण कर रहे हैं यह) कहता हूँ तब तो अपना मतलब ही नष्ट हो रहा है। अतः स्वार्थ का विनाश ही अच्छा है, विश्वास दिये हुए देवताओं को धोखा देने का पाप करना अच्छा नहीं। यह सोचते हुए उसने सम्पूर्ण इन्द्र का आदेश (वरण विषयक) सप्रसङ्ग कह दिया।

**सापि स्तोकस्मितस्निग्धनम्रमुखी 'हं हे प्रियंवदिके, प्रियास्मज्जीवितयाम्बया तातेन च मध्याह्ने समाहूय किमुक्तासि, किं शिक्षिताऽसि । न नाम बालेयम्, अविनीतेयम्, आग्रहग्रहग्रस्तेयम्, इति केनापि कर्णेजपेन तातस्य हृदयाद् दूरीकृताहम् । वन्द्याः खलु गुरवो देवाश्च बिभेमि तेभ्योऽहम्' इति प्रियंवदिकाख्यया सख्या सार्धमन्यालापमकरोत् ।**

सुधा—सापीति । सा=दमयन्ती । अपि । स्तोकस्मितस्निग्धनम्रमुखी—स्तोकम् =किञ्चित्, स्मिता=विहसिता, स्निग्धा=स्नेहयुक्ता, नम्रमुखी च=अवनतवदना च । हं हे प्रियंवदिके=अयि प्रियंवदे ! प्रियास्मज्जीवितया—प्रियम्=अभीष्टम्, अस्मज्जीवितम्=मम जीवनम्, यस्यै सा, तया । अम्बया=जनन्या । तातेन च= जनकेन च । मध्याह्ने=माध्यन्दिने । समाहूय=त्वम् आकार्य । किम् उक्ताऽसि=किं कथिताऽसि । किं शिक्षितासि=का दत्तशिक्षाऽसि । न नाम बाला इयम्=एषा केवलं बालिका नास्ति । इयम् अविनीता=एषोद्दण्डा । आग्रहग्रहग्रस्ता इयम्=एषा आग्रहग्रहेण=हठग्रहेण, ग्रस्ता=सम्पन्ना । इति=एवम् । केनापि कर्णेजपेन—कर्णे=श्रोत्रे, जपति=वदति, इति कर्णेजपस्तेन । तातस्य=पितुः । हृदयात्=चेतसः । अहम्= दमयन्ती । दूरीकृता=पृथक्कृता । खलु=नूनम् । गुरवः=गुरजनाः । वन्द्याः= वन्दनीयाः । देवाः=सुराश्च, वन्दनीयाः । इति तेभ्यः=गुरुजनेभ्यः देवेभ्यश्च । बिभेमि =भयं करोमि । प्रियंवदिकाख्यया=प्रियंवदिकासंज्ञया । सख्या=सहचर्या । सार्धम्= समम् । अन्यालापम्=अपरवार्ताम् । अकरोत्=चकार । अत्र स्तोकेत्यादिना अर्थिनोऽपि लोकपालान् प्रत्यवज्ञा, नलं प्रत्यनुरागाग्रहं चान्यालापव्याजेन दमयन्ती प्रतिपादितवती । न नामेति वितर्के । किं दूरीकृताहम् इति वितर्कः ।

हिन्दी—वह ( दमयन्ती ) भी कुछ मुस्कराती, स्नेहयुक्त नीचे मुख किये हुए— 'अजी प्रियम्वदिके ! मेरी प्रिय प्राणरूपा जननी तथा पिताजी ने दोपहर को बुलाकर तुमसे क्या कहा, क्या शिक्षा दी ? ''यह लड़की नहीं रही । यह उद्दण्ड तथा हठ रूपी ग्रह से ग्रस्त है । इस प्रकार किसी कान फूकने वाले ( निन्दक ) ने कहकर मुझे पिताजी के हृदय से हटा दिया है । गुरुजन तथा देवता निश्चय ही वन्दनीय हैं । मैं उन दोनों से डरती हूँ ।'' इस प्रकार प्रियम्वदिका नाम की सखी के साथ और बातें करने लगी ।

**नलोऽपि 'मदिराक्षि, मदयति मदिरा, तरलयति तारुण्यम्, अन्धयति धनम्, उत्पथयति मन्मथः, विरूपयति रूपाभिमानः, खर्वयति गर्वः । सर्वजनकप्रसिद्धमेतत् । किन्तु त्वमिदमसत्यतामानैषीः । व्यभिचरतु तवाङ्गे सर्वमेतत् । नहि शशिनि वह्निः, अमृते च विषाङ्कुरः सम्भवति । तदिमं देवादेशं मावज्ञासीः । सर्वथा प्रभवन्ति प्राणिनाममी लोकपालाः । तत्रापि विशेषतः सकलत्रिदशाधिपतिरशेषसुरकिरीटमणिमयूखमालार्चितचरणार-**

**विन्दपुरन्दरो देवः। तद् वृणु कमप्यमीषाममृतभुजां मध्ये। मा नस्य स्वर्गसुखानि। अभूमिरसि मर्त्यलोकस्तोकसुखानाम्' इति पुनस्तामभ्यधात्।**

सुधा—नल इति। नलः अपि=नलनृपः अपि। मदिराक्षि—मदिरे=मत्ते, अक्षिणी यस्यास्तत्सम्बुद्धौ=अयि मदिरनेत्रे! मदिरा=सुरा। मदयति=यदयुक्तं करोति। तारुण्यम्=यौवनम्। तरलयति=चपलयति। धनम्=वैभवम्। अन्धयति =अन्धवत्करोति। मन्मथः=मदनः। उत्पथयति=पथभ्रष्टं करोति। रूपाभिमानः =सौन्दर्यगर्वः। विरूपयति=विरूपं करोति। गर्वः=अहङ्कारः। खर्वयति=उद्दण्डयति। एतत्=इदं सर्वम्। सर्वजनकप्रसिद्धम्=सर्वापदान् उत्पादयति इति विख्यातम्। किन्तु त्वम् इदम् असत्यताम्=मिथ्याम्। अनैत्सीः=प्रापय। तवाङ्गे=तवशरीरे। एतत् सर्वम्, व्यभिचरतु=विरुद्धं भवतु। शशिनि=चन्द्रमसि। वह्निः=अग्निः। न हि भवति। अमृते च=सुधायाश्च। विषाङ्कुरः=विषोत्पत्तिः न सम्भवति। तत्=अतः, इमम्=एतम्। देवादेशम्=सुराज्ञाम्। मा अवज्ञासीः=अवहेलनां मा कुरु। अमी= एते। लोकपालाः=इन्द्रादिदेवाः। प्राणिनम्=जीवम्। सर्वथा=नितान्तम्। प्रभवन्ति=स्वामिनो भवन्ति। तत्रापि=तस्मिन्नपि। विशेषतः=वैशिष्ट्येन। सकलत्रिदशाधिपतिः—सकलत्रिदशानाम्=सर्वदेवानाम्, अधिपतिः=स्वामी। अशेषसुरकिरीटमणिमयूखमालार्चितचरणारविन्दपुरन्दरः—अशेषसुराणाम् = समस्तदेवानाम्, किरीटस्य=मुकुटस्य, मणिमयूखानाम्=मणिकिरणानाम्, मालाभिः=स्रग्भिः, अर्चिते=पूजिते, चरणारविन्दे=चरणकमले, यस्य तथाविधः, पुरन्दरः=इन्द्रः। देवः =सुरः अस्ति। तत्=अतः। अमीषाम्=एतेषाम्। अमृतभुजाम्=देवानां मध्ये कम् अपि देवम्। वृणु=चिनु। स्वर्गसुखानि=दिव्यानन्दानि। मा नस्य=मा त्यज। मर्त्यलोकस्तोकसुखानाम्—मर्त्यलोकस्य=भूलोकस्य, स्तोकसुखानाम्=अल्पसुखानाम्। अभूमिः असि=अपात्रा असि। इति=एवम्। पुनः=भूयः। ताम्=दमयन्तीम्। अभ्यधात्=अभाषत।

हिन्दी—नल भी—'हे मदिरनयनों वाली! मदिरा उन्मत्त बना देती है, यौवन चञ्चल बना देता है, धन अन्धा बना देता है, मदन पथभ्रष्ट कर देता है सौन्दर्याभिमान विरूप बना देता है, गर्व उद्दण्ड बना देता है यह सब लोगों में प्रसिद्ध है किन्तु तुम इसको असत्य बना दो। यह सब तुम्हारे अङ्गों में विपरीत बन जाये। चन्द्रमा में आग नहीं होती है और अमृत में विष के अङ्कुर की सम्भावना नहीं की जाती। अतः इस देवताओं के आदेश की अवहेलना मत करो। लोकपाल सर्वथा प्राणियों के प्रभु रहते हैं। उसमें भी विशेषकर समस्त देवताओं के अधिपति इन्द्रदेव, जिनके चरणकमल समस्त देवताओं के मुकुटमणियों की किरण मालाओं से चर्चित हैं। अतः इन देवताओं के बीच में किसी को वरण कर लो। स्वर्गसुखों को नष्ट मत करो। तुम मृत्यु लोक के सीमिति सुखों की पात्र नहीं हो। इस प्रकार पुनः उससे कहने लगा।

**एवंविधे च व्यतिकरे दमयन्त्या पुनरुक्तमिमं जल्पमरण्यकरिण्येवारुन्तुदमङ्कुशमसहमानया मनाक्तरलिते शिरसि, स्तोकीकृते मनसि, मुक्ते निःसहनिश्वासमरुति, परवर्त्तिते चक्षुषि, विवर्णतामानीते वदनारविन्दे, प्रस्तावपण्डिता प्रियंवदिका प्राह।**

**सुधा—एवं विध इति।** एवंविधे=एतादृशे। व्यतिकरे=प्रसङ्गे च। दमयन्त्या=भैम्या। पुनः=भूयः। इमम्=एतम्। उक्तम्=कथितम्। जल्पम्=कथनम्। अरुन्तुदम्=अतिक्लेशदायकम्। अङ्कुशम्=तोत्रम्। असहमानया=असहन्त्या। अरण्यकरिण्या इव=वन्यहस्तिन्या समम्। मनाक्=स्तोकम्। शिरसि=उत्तमाङ्गे। तरलिते=कम्पिते। मनसि=चेतसि। स्तोकीकृते=स्वल्पीकृते। निःसहनिःश्वासमारुति—निःसहः=असह्यः, यो निःश्वासमारुत्=श्वासवायुस्तस्मिन्। मुक्ते=त्यक्ते। चक्षुषि=नेत्रे। परिवर्तिते=परावर्तिते। वदनारविन्दे=मुखकमले। विवर्णताम्=वैवर्ण्यम्। आनीते=प्रापिते। प्रस्तावपण्डिता=विचार-चतुरा। प्रियंवदिका=तन्नामसखी। प्राह=उवाच।

हिन्दी—इस प्रकार के प्रसङ्ग में नल द्वारा पुनः कथित इस कथन को अत्यन्त कष्टदायक ( असह्य ) अंकुश को न सहती हुई जंगली हथिनी के समान दमयन्ती ने सहन न कर कुछ शिर हिलाया, मन को थोड़ा किया, असह्य निःश्वास वायु को छोड़ा, आँखें परिवर्तित की, तथा मुखकमल को विवर्ण ( हतप्रभ ) बना लिया। तब विचारचतुरा प्रियंवदिका ने कहा।

**देव, श्रुतं श्रोतव्यम्, अवधारितो देवादेशः। किं तु न स्वतन्त्रेयम्, ईश्वरेच्छया प्रवृत्तिनिवृत्तयो यतः प्राणिनाम्, अनालोचनगोचरश्चायमनुरागोऽङ्गनाजनस्य।**

**सुधा—देव इति।** देव=राजन्! श्रोतव्यम्=आकर्णनीयम्। श्रुतम्=आकर्णितम्। देवादेशः—देवानाम्=इन्द्रादीनाम्, आदेशः=आज्ञा। अवधारितः=अभिज्ञातः। किन्तु=परन्तु। इयम्=एषा मे सखी। स्वतन्त्रा=स्वाधीना। न=नास्ति। प्रवृत्तिनिवृत्तयः—प्रवृत्तिः=आसक्तिः, निवृत्तिः=विरक्तिश्च। ईश्वरेच्छया=ईश्वरकृपया, भवति। यतः=हि। अङ्गनाजनस्य=स्त्रीजनस्य। अयम्=एषः। अनुरागः=अनुरक्तिः। अनालोचनगोचरः=विचारपूर्वकः न चलति।

हिन्दी—राजन्! जो कुछ सुनना था सब सुन लिया। देवताओं का आदेश समझ लिया। किन्तु यह ( दमयन्ती ) स्वतन्त्र नहीं है। प्रवृत्ति ( अनुराग ) और निवृत्ति ( विराग ) ईश्वर की इच्छा से होती है। क्योंकि स्त्रियों का यह अनुराग विचारपूर्वक नहीं चलता है।

**तथाहि—तीव्रतपनतापप्रियाम्भोजिनी न सहते स्तोकमप्यमृतमुचो रुचश्चन्द्रस्य, परिम्लायति मालतीमालिका सलिलसेकेन।**

**सुधा—तथाहीति।** तीव्रतपनतापप्रिया—तीव्रः=तीक्ष्णः, तपनतापः=सूर्यतापः, प्रियो यस्यै सा। अम्भोजिनी=कमलिनी। स्तोकम् अपि=स्वल्पमपि। अमृत-

मुचः=सुधावर्षिणः। चन्द्रस्य=विधोः। रुचः=कान्तयः। न सहते=सहनं न करोति। मालतीमालिका=मालतीस्रक्। सलिलसेकेन=जलसिञ्चनेन। परिम्लायति=परितः मलिनतां याति।

हिन्दी—क्योंकि—तीव्र सूर्यताप ( धूप ) से स्नेह करने वाली कमलिनी थोड़ी भी अमृतवर्षी चन्द्रमा की कान्ति सहन नहीं करती है। मालती पुष्पों की माला जल के सिञ्चन से मलिन पड़ जाती है।

**प्रसिद्धं चैतत्—**

**भवति हृदयहारी क्वापि कस्यापि कश्चि-**
**न्न खलु गुणविशेषः प्रेमबन्धप्रयोगे।**
**किसलयति वनान्ते कोकिलालापरम्ये**
**विकसति न वसन्ते मालती कोऽत्र हेतुः॥ ४७॥**

अन्वयः—खलु प्रेमबन्धप्रयोगे गुणविशेषः न ( भवति )। क्व अपि कश्चित् कस्य अपि हृदयहारा भवति। मालती वनान्ते किसलयति कोकिलालापरम्ये वसन्ते न विकसति, अत्र कः हेतु ?॥ ४७॥

सुधा—प्रसिद्धमिति। च=तथा। एतत्=इदम्। प्रसिद्धम्=विख्यातम्—भवतीति। खलु=किल। प्रेमबन्धप्रयोगे=अनुरागविषयकव्यापारे। गुणविशेषः—गुणानां, विशेषः=वैशिष्ट्यम् न भवति। क्व अपि=कुत्रापि। कश्चित्=कोऽपि। कस्यापि हृदयहारी—हृदयम्=मनः हरतीति सः=चित्ताकर्षकः भवति। मालती=मालतीलता। किसलयति=नवपल्लवयति। कोकिलालापरम्ये—कोकिलानाम्=पिकानाम् आलापः=कलरवस्तेन रम्ये=मनोरमे, वनान्ते=वनभागे। वसन्ते=ऋतुराजे वसन्तर्तौ। न विकसति=विकसिता न भवति। मालिनी वृत्तम्॥ ४७॥

हिन्दी—और यह प्रसिद्ध है कि वास्तव में अनुराग सम्बन्धी व्यापार में गुणविशेष नहीं होता है। कहीं भी कोई किसी का भी हृदयहारी हो जाता है। (देखो) मालती ( नवमालिका ) नवीनपत्तों से (किसलय दलों से) युक्त, कोयलों की तान से रमणीक वनभाग वाले वसन्त में विकसित नहीं होती है।

**एवमनेकविधोपाख्याननिपुणया तत्कालोचितम्, अनुच्चस्मितसुधास्निग्धम्, अविरुद्धम्, परिमितपरिहाससुन्दरम्, अनुबृंहितानुरागम्, उचितचाटुचटुलम्, अशाठ्यम्, अकठोरम्, अनुज्झितप्रियम्, प्रियंवदिकया सहालपालपं जल्पन् 'अयुक्तमिह कन्यान्तःपुरे चिरं स्थातुम्' इति चिन्तयन्नापृच्छ्य दमयन्तीं नलः पर्यङ्किकापृष्ठादुदतिष्ठत्।**

सुधा—एवमिति। एवम्=इत्थम्। अनेकविधोपाख्याननिपुणया—अनेकविधेषु=बहुप्रकारेषु, उपाख्यानेषु=दृष्टान्तकथनेषु। निपुणा=प्रवीणा, तया। प्रियम्बदिकया सह=तन्नामसख्या सह। तत्कालोचितम्=तत्क्षणोपयुक्तम्। अनुच्चस्मितसुधास्निग्धम्—अनुच्चम्=मन्दं यत् स्मितम्=हास्यम्, तदेव सुधा=अमृतम्, तया स्निग्धम्।

अविरुद्धम् = अनुकूलम् । परिमितपरिहाससुन्दरम्—परिमितेन = मर्यादितेन, परिहासेन = विनोदेन, सुन्दरम् = मनोरमम् । अनुबृंहितानुरागम्—अनुबृंहितः = वर्धितः, अनुरागः = प्रेम, यत्र तथाविधम् । उचितचाटुचटुलम्—उचितेन चाटुना = उपयुक्तचाटुकारितया, चटुलम् = सुन्दरम् । अशाठ्यम् = शठताशून्यम् । अकठोरम् = कोमलम् । अनुज्झितप्रियम् = प्रियतायुक्तम् । अल्पाल्पम् = अल्पमल्पम्, स्तोकं स्तोकम् । जल्पन् = भणन् । इह = अत्र । कन्यकान्तःपुरे = कन्याजननिवासगृहे । चिरम् = बहु-कालम् । स्थातुम् = अवस्थातुम् । अयुक्तम् = अनुचितम् । इति = एवम् । चिन्तयन् = विचारयन् । दमयन्तीम् = भैमीम् । आपृच्छ्य = पृष्ट्वा । नलः = निषधेश्वरः । पर्यङ्किकापृष्ठात् = पर्यङ्किकायास्तलात् । उदतिष्ठत् = उदस्थात् ।

हिन्दी—इस प्रकार बहुविध उपाख्यान कहने में निपुण प्रियंवदिका के साथ तत्कालोचित, मन्दहास्य सुधा से स्निग्ध, अनुकूल, मर्यादित परिहास के कारण सुन्दर, बढ़े हुये अनुराग के अनुरूप, उपयुक्त चाटुकारिता से मनोरम शठता से शून्य, कठोरता रहित, प्रियता का त्याग किये बिना वार्तालाप करता हुआ निषधेश्वर नल—'यहाँ कन्याओं के अन्तःपुर में अधिक समय ठहरना उचित नहीं है' यह सोचता हुआ दमयन्ती से कुशल क्षेम पूछ कर पर्यङ्किका ( आसन ) पृष्ठ से उठ खड़ा हुआ ।

**प्रथमोत्थितया च तया लज्जावनम्रवदनारविन्दया सह सखीकदम्बकेन द्वित्राणि पदान्यनुगम्यमानो विहसन् 'अलमलमायासेन, स्थीयतां सुखम्' इत्यभिधाय स्वगृहानयासीत् ।**

सुधा—प्रथमेति । प्रथमोत्थितया—प्रथमम् = पूर्वम्, उत्थिता = उद्गता, या सा तथाविधया । तया = दमयन्त्या च । लज्जावनम्रवदनारविन्दया—लज्जया = व्रीडयाऽवनम्रम् = अवनतम्, वदनारविन्दम् = मुखाब्जं, यस्यास्तया । सखीकदम्बेन सह–सखीनां कदम्बः = सहचरीसमूहस्तेन सह = साकम् । द्वित्रीणि = कतिपयानि पदानि । अनुगम्यमानः—अनु = पश्चात्, गम्यमानः विहसन् = हसन् । अलम् अलम् आयासेन = परिश्रमं मा करोतु । सुखम् = आनन्दम् । स्थीयताम् = स्थिरा भवतु । इति = एवम् । अभिधाय = कथयित्वा । नलः । स्वगृहान् = निजावासम् । अयासीत् = अगच्छत् ।

हिन्दी—प्रथम उठी, लज्जा से अवनत मुखकमल वाली उस दमयन्ती और सखियों के समूह के साथ दो तीन कदम चल कर हँसता हुआ ( नल ) 'बस, अब कष्ट मत कीजिये, सानन्द ठहरिये ।' यह कहकर अपने निवास स्थान को चला गया ।

**गत्वा च शिरीषकुसुमदाममृदुनि शय्यातले निषण्णश्चिन्तयाञ्चकार ।**

सुधा—गत्वेति । गत्वा = प्रस्थाय च । शिरीषकुसुममृदुनि = शिरीषकुसुमसदृशकोमले । शय्यातले = शय्यापृष्ठे । निषण्णः = आसीनः । चिन्तयाञ्चकार = विचारयामास ।

हिन्दी—तथा जाकर सिरसे के पुष्प सदृश कोमल शय्या पर बैठकर सोचने लगा ।

**हर्षादुत्पुलकं विकासि रभसादुत्तानितं कौतुका-**
**च्छृङ्गारादलसं, भयात्तरलदृङ् नम्रं च लज्जाभरात् ।**
**तस्यास्तन्नवसङ्गमे मृगदृशो दृश्येत भूयोऽपि किं**
**किञ्चित्काञ्चनगौरगण्डगलितस्वेदाम्बुरम्यं मुखम् ॥ ४८ ॥**

**अन्वयः**—मृगदृशः तस्याः तत् नवसङ्गमे हर्षात् उत्पुलकम्, रभसात् विकासि, कौतुकात् उत्तानितम्, शृङ्गारात् अलसम्, भयात् तरलदृक् लज्जाभरात् च नम्रम्, किञ्चित्काञ्चनगौरगण्डगलितस्वेदाम्बुरम्यं मुखं किं भूयः अपि दृश्येत् ॥ ४८ ॥

**सुधा**—हर्षादिति । मृगदृशः=मृगाक्ष्याः । तस्याः=दमयन्त्याः । तन्नवसङ्गमे—तत्=तादृशे, नवसङ्गमे=नूतनमिलने । हर्षात्=आनन्दात् । उत्पुलकम्=रोमाञ्चितम् । रभसात्=शीघ्रात् । विकासि=विकसितम् । कौतुकात्=उत्कण्ठायाः । उत्तानितम्=उत्थापितम् । शृङ्गारात्=शृङ्गारभावात् । अलसम्=आलस्ययुक्तम् । भयात्=त्रासात् । तरलदृक्=चञ्चलनेत्रम् । लज्जाभरात्=व्रीडाभारात् । च । नम्रम्=अवनतम् । किञ्चित्काञ्चनगौरगण्डगलितस्वेदाम्बुरम्यम्—किञ्चित्=किमपि, काञ्चनम्=स्वर्णकान्तं, गौरगण्डयोः=शुभ्रकपोलयोः, गलितेन=स्रवितेन, स्वेदाम्बुना=स्वेदजलेन, रम्यम्=मनोरमम् । मुखम्=आननम् । किमिति जिज्ञासायाम् । भूयः अपि=पुनरपि । दृश्येत्=दृष्टिगतं भवेत् । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

**हिन्दी**—मृगनयनी उस ( दमयन्ती ) के उस नव-मिलनावसर पर हर्ष से रोमांचित, शीघ्रता से विकसित, उत्कण्ठा से उठा हुआ, शृङ्गार से आलस्ययुक्त, भय से तरलित नयनों वाला एवं लज्जा के भार से अवनत कुछ स्वर्णाभ गौरकपोलों से निकले स्वेद जल के कारण मनोरम मुख क्या पुनः दिखलाई पड़ेगा ? ॥ ४८ ॥

**अपि च—**

**अपसरति न चक्षुषो मृगाक्षी**
**रजनिरियं च न याति नैति निद्रा ।**
**प्रहरति मदनोऽपि दुःखितानां**
**बत बहुशोऽभिमुखी भवन्त्यपायाः ॥ ४९ ॥**

**अन्वयः**—मृगाक्षी चक्षुषः न अपसरति, इयम् रजनिः न याति, निद्रा च न एति । मदनः अपि दुःखितानां प्रहरति । बत बहुशः अपायाः अभिमुखी भवन्ति ॥ ४९ ॥

**सुधा**—अपसरतीति । ( सा ) मृगाक्षी=हरिणाक्षी ( दमयन्ती ) । चक्षुषः=दृष्टेः । न अपसरति=दूरं न याति । इयम्=एषा । रजनिः=रात्रिः । न याति=नैव गच्छति । च=तथा । निद्रा, न एति=नागच्छति । मदनः=कामः अपि । दुःखितानाम्=पीडितानाम् । प्रहरति=आघातं करोति । बत=कष्टम् । बहुशः=अनेकशः । अपायाः=विनाशवस्तूनि अपि । अभिमुखी भवन्ति=सम्मुखमायान्ति ॥

**हिन्दी**—और भी—( यह ) मृगनयनी दृष्टि से ओझल नहीं हो रही है । यह

रात भी समाप्त नहीं होती और न ही नींद आ रही है। काम भी पीड़ितों पर प्रहार करता है। खेद है कि बहुतेरी विनाश की सामग्रियाँ सामने आती जाती हैं ॥ ४९ ॥

**इति विविधवितर्कावेशविध्वस्तनिद्रः**
**सजलजडिममीलत्पक्ष्म चक्षुर्दधानः ।**
**हरचरणसरोजद्वन्द्वमाधाय चित्ते**
**नृपतिरपि विदग्धः स त्रियामामनैषीत् ॥ ५० ॥**

**इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां**

**सप्तम उच्छ्वासः ॥ ७ ॥**

**अन्वयः**—इति विविधवितर्कावेशविध्वस्तनिद्रः, सजलजडिममीलत्पक्ष्मचक्षुः दधानः, हरचरणसरोजद्वन्द्वं चित्ते, आधाय विदग्धः सः नृपतिः अपि त्रियामाम् अनैषीत् ॥ ५० ॥

**सुधा—इति विविधेति।** इति=इत्थम्। विविधवितर्कावेशविध्वस्तनिद्रः—विविधानाम्=विभिन्नानाम्, वितर्काणाम्=वादानाम्, आवेशेन विध्वस्ता=विनष्टा, निद्रा यस्य सः। सजलजडिममीलत्पक्ष्मचक्षुः—सजलम्=अश्रुपूर्णम्, जडिमम्=जडीकृतम्, मीलत्पक्ष्म=संलग्नपक्ष्म यत् चक्षुः=दृक् तत्। दधानः=बिभ्राणः। हरचरणसरोजद्वन्द्वम्—हरस्य=शिवस्य, चरणसरोजद्वन्द्वम्=पादाब्जयुगलम्। चित्ते=मनसि। आधाय=धृत्वा। विदग्धः=व्याकुलचेता। सः=असौ। नृपतिः=भूपतिर्नलः। अपि। त्रियामाम्=निशाम्। अनैषीत्=यापयामास। मालिनीवृत्तम् ॥ ५० ॥

**हिन्दी**—इस प्रकार विविध वितर्कों के आवेश में निद्रा भङ्ग हो गई। अश्रुपूर्ण जडवत् वने नयनों के पलक बन्द हो गये। भगवान् शिव के चरणकमलयुगल में चित्त लगाकर इस व्याकुल नृपति नल ने भी रात्रि व्यतीत की ॥ ५० ॥

इति 'शाहजहाँपुर'मण्डलान्तर्वर्तिनो 'नाहिल'वास्तव्यस्याचार्यपरमेश्वरदीनपाण्डेयस्य कवि श्री त्रिविक्रमभट्टस्य नलचम्पूकृतौ सुधा-संस्कृत-हिन्दी टीकाद्वयोपेतस्य सप्तम उच्छ्वासः।

शुभं भूयात्।

---

